सानन्दगिरिकृत-टीकशाङ्करभाष्यसम्वलित-
तैत्तिरीयैतरेयोपनिषदौ निरानन्द-
ज्ञानकृतटीकशाङ्कर-भाष्यसहित-
श्वेताश्वतरोपनिषच्च ।

---

# THE TAITTARIYA AND AITTAREYA UPANISHADS

WITH THE

COMMENTARY OF SANKARA ACHARYA

AND THE GLOSS OF ANANDA GIRI,

AND THE

# SWETASWATARA UPANISHAD

WITH THE COMMENTARY OF SANKARA ACHARYA.

EDITED BY

PANDIT JIBANANDA VIDYASAGARA, B. A.

SUPERINTENDENT OF FREE SANSKRIT COLLEGE.

CALCUTTA

PRINTED AT THE NEW INDIAN PRESS.

1874

# ॐ नमः परमात्मने ॥

---

## तैत्तिरीयोपनिषद्भाष्यम् ।

ॐ यस्माज्जातं जगत्सर्व्वं यस्मिन्नेव विलीयते ।
येनेदं धार्य्यते चैव तस्मै ज्ञानात्मने नमः ॥ १ ॥
यैरिमे गुरुभिः पूर्व्वं पदवाक्यप्रमाणतः ।
व्याख्याताः सर्ववेदान्तास्तान् नित्यं प्रणमाम्यहम् ॥२॥

---

### तैत्तिरीयोपनिषद्भाष्यटीका ॥

श्रीगणेशाय नमः ॥ यत् प्रकाशस्वरूपाभिन्नं यन्मात्रेण प्रकाशितम् । विहृतं ब्राह्मणे तत् स्यामहस्यं ब्रह्म निर्भयम् ॥ १ ॥

यजुर्व्वेदशाखाभेदं तैत्तिरीयकोपनिषदं व्याचिख्यासुर्भगवान् भाष्यकारस्तत्प्रतिपाद्यं ब्रह्म जगज्जन्मादिकारणत्वेन तटस्थलक्षणेन मन्दमतीन् प्रति सामान्येनोपलक्षितं सत्यज्ञानादिना च स्वरूपलक्षणेन विशेषतो विनिश्चितं नमस्कारच्छलेन सङ्क्षेपतो दर्शयति । यस्माज्जातमिति ॥ निमित्तोपादानयोः पञ्चम्याः साधारण्यादुभयविधमपि हेतुत्वमिह विवक्षितम् । कार्य्यविलयस्य प्रकृतावेव नियतत्वात् ॥ विशेषतः प्रकृतित्वमाह । यस्मिन्निति ॥ कार्य्यसाधारणस्य निमित्ते धर्म्मादावपि प्रसिद्धत्वात् साधारणकारणत्वमाह । येनेति । ज्ञानात्मन इति स्वरूपलक्षणसूचनम् ॥ १ ॥ गुरुभक्तेर्विद्याप्राप्त्यावन्तरङ्गसाधनत्वं ख्यापयितुं गुरून् प्रणमति । यैरिति । पदानि च वाक्यानि च प्रमाणं चानुमानादि तद्विवेचनेन व्याख्याता इति ॥ २ ॥ चिकीर्षितं निर्दिशति । तैत्तिरीयकेति ॥ व्युत्पन्नस्य पदेभ्य एव पदार्थस्मृतिसम्भवात् पदस्मारित-

तैत्तिरीयकसारस्य मयाऽऽचार्य्यप्रसादतः ।
विस्पष्टार्थरुचीनां हि व्याख्येयं सम्प्रणीयते ॥ ३ ॥

नित्यान्यधिगतानि कर्म्माण्युपात्तदुरितक्षयार्थानि काम्यानि च फलार्थिनां पूर्वस्मिन् ग्रन्थे । इदानीं कर्म्मोपादानपरिहाराय ब्रह्मविद्या प्रस्तूयते । कर्म्महेतुः कामः स्यात् प्रवर्त्तकत्वात् । आप्तकामानां हि कामाभावे स्वात्म-

---

पदार्थसंसर्गस्यैव वाक्यार्थत्वात् सूत्रकारेणोपनिषत्तात्पर्य्यस्य निरूपितत्वाच्च व्यर्थः पृथग्व्याख्यारम्भ इत्याशङ्क्याह । विस्पष्टार्थेति ॥ मन्दमतीनां स्वत एव निःशेषपदार्थस्मरणासम्भवादुपनिषद्गतनिःशेषपदार्थानां विशिष्य निःसंशयं ज्ञानं ये रोचयन्ते तेषामुपकाराशेत्यर्थः ॥ ३ ॥

कर्म्मविचारेणैवोपनिषदो गतार्थत्वादुपनिषत्प्रयोजनस्य निःश्रेयसस्य कर्म्मभ्य एव सम्भवात् पृथग्व्याख्यारम्भो न युक्त इत्याशङ्कामपनेतुं कर्म्मकाण्डार्थमाह । नित्यानीति ॥ अथातो धर्मजिज्ञासेति जैमिनिना धर्म्मग्रहणेन सिद्धवस्तुविचारस्य पर्य्युदस्तत्वान्नोपनिषदो गतार्थत्वमित्यर्थः । तानि च धर्म्माणि सञ्चितदुरितक्षयार्थानि धर्म्मेण पापमपनुदतीति श्रुतेर्न निःश्रेयसार्थानि । न केवलं जीवतोऽवश्यकर्त्तव्यानि अधिगतानि फलार्थिनां काम्यानि च । न तान्यपि निःश्रेयसार्थानि । स्वर्गकामः पशुकाम इत्यादिवत् मोक्षकामोऽदः कुर्य्यादित्यश्रवणात् । अतः संसार एव कर्म्मणां फलमित्यर्थः । कर्म्मकाण्डार्थमुक्त्वा तत्राविचारितमुपनिषदर्थमाह । इदानीमिति ॥ कर्म्मणामुपादानेऽनुष्ठाने यो हेतुस्तन्निवृत्त्यर्थं ब्रह्मविद्या अस्मिन् ग्रन्थे आरभ्यते । अतः सनिदानकर्म्मोन्मूलनार्थत्वादुपनिषदः कर्म्मकाण्डविरुद्धत्वान्न गतार्थत्वमित्यर्थः ॥ कर्म्मानुष्ठानहेतुर्नियोगस्तस्य प्रमाणसिद्धत्वान्न विद्यया विरोध इत्याशङ्क्याह । कर्म्महेतुरिति ॥ अस्य इदं साधनमित्येतावच्छास्त्रेण बोध्यते । यस्य यत्राभिलाषः स तत्र प्रवर्त्तते कामत एव । अतो न नियोगस्य प्रवर्त्तकसम्भावनापीत्यभिप्रायः ॥

व्यवस्थानात् प्रवृत्त्यनुपपत्तिः। आत्मकामत्वे चाऽऽप्त-कामता। आत्मा हि ब्रह्म। तद्विदो हि परप्राप्तिं वक्ष्यति। अतोऽविद्यानिवृत्तौ स्वात्मन्यवस्थानं परप्राप्तिः। अभयं प्रतिष्ठां विन्दते। एतमानन्दमयमात्मानमुपस-ङ्क्रामतीत्यादिश्रुतेः। काम्यप्रतिषिद्धयोरनारम्भादारब्धस्य चोपभोगेन क्षयान्नित्यानुष्ठानेन प्रत्यवायाभावादयत्नत एव स्वात्मावस्थानं मोक्षः। अथवा निरतिशयायाः प्रीतेः स्वर्गशब्दवाच्यायाः कर्महेतुत्वात् कर्मभ्य एव मोक्ष इति चेन्न। कर्मानेकत्वात्। अनेकानि ह्यारब्धकर्म-

---

सति कामे प्रवृत्तिरित्यन्वयः॥ तत्कामाभावे न प्रवृत्तिरिति व्यतिरेकमाह। आप्तेति॥ अभिलषितविषयप्राप्तिः कामनिवृत्तौ हेतुर्न विद्या अतः कथं कर्महेतुपरिहाराय विद्यारम्भ इत्याशङ्क्याह। आत्म-कामत्वे चेति॥ कामितविषयप्राप्त्या कामस्य तात्कालिकोपशममात्रं न तूच्छेदः पुनर्विषयाकाङ्क्षादिदर्शनात्। आत्मकामतापि निरङ्कुशा आत्मैव वस्तु नान्यत्ततोऽस्तीत्येवंरूपा आत्मकामत्वे सति भवति। कामि-तेच्छाभावात्। आत्मनो ह्यद्वयानन्दरूपमजानन्नेव व्यतिरिक्तं विषयं पश्यन् कामयते। ततः कामस्यात्माविद्यामूलत्वादात्मविद्यैव तन्निवृत्ति-हेतुरित्यर्थः॥ भवत्वात्मविद्या कामविरोधिनी कर्महेतुपरिहाराय ब्रह्मविद्या प्रसूयत इति कथमुक्तं तत्राह। आत्मेति॥ आनन्दमयं पर-मात्मानमादाय श्रुतिरुदाहृता एवं तावत्कर्मकाण्डेनागतार्थत्वात् कर्म-भ्योऽसम्भाव्यमाननिःश्रेयसप्रयोजनत्वाच्चोपनिषदो व्याख्यारम्भं सम्भाव्य पुनरारम्भवादिनोऽभिप्रायमुद्भावयति। काम्यप्रतिषिद्धयोरिति॥ आ-त्यन्तिकागामिशरीरानुत्पादे स्वरूपावस्थानं निःश्रेयसं शरीरानुत्पादश्च हेत्वभावादेव सेत्स्यति किं ज्ञानार्थोपनिषदारम्भेणेत्यर्थः। मतान्तरमाह। अथवेति॥ यदेव स्वर्गसाधनं ज्योतिष्टोमादि तदेव मोक्षसाधनं निरति-

फलानि चानेकजन्मान्तरकृतानि विरुद्धफलानि कर्म्माणि सम्भवन्ति । अतस्तेष्वनारब्धकर्मफलानामेकस्मिञ्जन्मनि उपभोगक्षयासम्भवाच्छेषकर्मनिमित्तशरीरारम्भोपपत्तिः कर्मशेषसद्भावसिद्धिश्च । तद्य इह रमणीयचरणाः । ततः कर्मशेषेणेत्यादिश्रुतिशतेभ्यः ।

इष्टानिष्टफलानामनारब्धानां क्षयार्थानि नित्यानीति चेन्न । अकरणे प्रत्यवायश्रवणात् । प्रत्यवायशब्दो ह्यनिष्टविषयः । नित्याकरणनिमित्तस्य प्रत्यवायस्य दुःखरूपस्यागामिनः परिहारार्थानि नित्यानीत्यभ्युपगमात् । न

---

शयप्रीतेः स्वर्गपदार्थस्य मोक्षादन्यत्रासम्भवात्सति शरीरे क्षयावश्यम्भावादित्यर्थः ॥ एकभविकपक्षमाद्यं मतं प्रत्याख्याति । नेत्यादिना । यद्यपि वर्त्तमाने देहे काम्यं प्रतिषिद्धञ्च नारभेत मुमुक्षुः तथापि सञ्चितस्यानेकस्य सम्भवाद्देहत्वभावोऽस्त्वित इत्यर्थः । प्रायेणानभिव्यक्तानि सर्व्वाण्येव कर्म्माणि सम्भूय एकं शरीरमारभन्ते तत्र सर्व्वेषामुपभोगेन क्षयितत्वात् सञ्चितं कर्म्मैव नास्तीति शङ्कानिराकरणायोक्तम् । विरुद्धफलानीति ॥ स्वर्ग-नरकफलानां ज्योतिष्टोमब्रह्महत्यादीनामेकस्मिन् देहे भोगेन क्षयासम्भवात् प्रायेणास्य सर्व्वाभिव्यञ्जकत्वे प्रमाणाभावाद्बलवता प्रतिबद्धस्य दुर्बलस्यावस्थानं सम्भवतीत्यर्थः ॥ सम्भावनामात्रमेतन्नात्र प्रमाणमस्तीत्याशङ्क्याह । कर्म्मशेषेति ॥ प्रेत्य स्वकर्मानुभूय ततः शेषेण जन्म प्रतिपद्यत इति स्वर्गादवरोहतां कर्म्मशेषं दर्शयतीत्यर्थः ॥

सञ्चितकर्म्मसद्भावमङ्गीकृत्य देहान्तरारम्भो न भविष्यतीत्याह । इष्टेति ॥ एतद्भाविनां सिद्धान्तविरुद्धमित्याह । नेति ॥ मुमुक्षुणानुष्ठितस्य नित्यादेः सञ्चितकर्म्मक्षयार्थत्वाभ्युपगमेऽपि नाभिमतसिद्धिरित्याह । यदि नामेति ॥ यच्चोक्तम् । मुमुक्षुः काम्यानि वर्जयेदिति तदप्यसति विवेकबले दुर्घटम् । सति मलाज्ञाने कामोद्भवस्य दुर्निवारत्वादित्याह ।

त्वनारब्धफलकर्मक्षयार्थानि। यदि नामाऽनारब्धकर्मक्षया-
र्थानि नित्यानि कर्म्माणि तथाप्यशुद्धमेव क्षपयेयुर्न शुद्धं
विरोधाभावात्। न हीष्टफलकर्मणः शुद्धरूपत्वान्नित्यै-
र्विरोध उपपद्यते। शुद्धाशुद्धयोर्हि विरोधो युक्तः। न
च कर्महेतूनां कामानां ज्ञानाभावे निवृत्त्यसम्भवादशेष-
कर्मक्षयोपपत्तिः। अनात्मविदो हि कामोऽनात्मफलविषय-
त्वात् स्वात्मनि च कामानुपपत्तिर्नित्यप्राप्तत्वात् स्वयञ्चात्मा
परं ब्रह्मेत्युक्तम्। नित्यानाञ्चाकरणमभावस्ततः प्रत्यवाया-
नुपपत्तिरिति। अतः पूर्वोपचितदुरितेभ्यः प्राप्यमाणायाः

---

न च कर्म्महेतूनामिति॥ ननु कामो नाज्ञानमूलः। आत्मविदामपि
कामदर्शनादित्यत आह। स्वात्मनि चेति॥ सर्व्व आत्मेति पश्यतां
तत्त्वतो विषयाभावादेव कामानुपपत्तिः। रसनादिप्रवृत्तिनिमित्तन्तु
कामाभास एव वास्तवाभिनिवेशाभावादित्यर्थः। तेषामर्चिरादिमार्गेण
ब्रह्मप्राप्तेः कामना नास्तीति नाशङ्कनीयमित्याह। स्वयञ्चेति॥ यच्चो-
क्तमकरणनिमित्तप्रत्यवायपरिहारार्थानि नित्यानीति तत्राह। नित्या-
नाञ्चेति॥ आगामि दुःखं प्रत्यवाय उच्यते तस्य भावरूपस्य नाभावो
निमित्तम्। पापः पापेनेति श्रुतेः। निषिद्धाचरणनिमित्तत्वाद्दुःखस्येत्यर्थः।
अकुर्व्वन् विहितं कर्म्म निन्दितञ्च समाचरन्। प्रसज्जंश्चेन्द्रियार्थेषु नरः
पतनमृच्छतीति शतृप्रत्ययादकरणस्यापि प्रत्यवायनिमित्तत्वमवगतमि-
त्याशङ्क्याह। अतः पूर्व्वेति॥ यदि यथावन्नित्यनैमित्तिकानुष्ठानमभविष्य-
त्तदा सञ्चितदुरितक्षयोऽभविष्यत्। न चायं विहितमकार्षीदित्यतः
प्रत्यवायो भविष्यतीति शिष्टैर्लक्ष्यते। यथा विचिकित्सन् श्रोत्रिय इति।
ततः शतृप्रत्ययस्यान्यथाव्युत्पन्नत्वान्न तद्बलादकरणे हेतुत्वमवगन्तुं शक्यत
इत्यर्थः। लक्षणहेत्वोः क्रियाया इति शतृप्रत्ययस्योभयत्र विधाने सति

प्रत्यवायक्रियाया नित्याकरणं लक्षणमिति अकुर्वन्विहितं कर्मेति हि शतुर्नानुपपत्तिः। अन्यथा अभावाद्भावोत्पत्तिरिति सर्वप्रमाणव्याकोपः॥

इत्यतोऽयत्नतः स्वात्मन्यवस्थानमित्यनुपपन्नम्। यच्चोक्तं निरतिशयप्रीतेः स्वर्गशब्दवाच्यायाः कर्मनिमित्तत्वात्कर्मारब्ध एव मोक्ष इति। तन्न। नित्यत्वान्मोक्षस्य। न हि नित्यं किञ्चिदारभ्यते। लोके यदारब्धं तदनित्यमित्यतो न कर्मारब्धो मोक्षः। विद्यासहितानां कर्मणां नित्यारम्भसा-

---

किमिति हेतुत्वमेव न स्वह्यते तत्राह। अन्यथेति॥ अभावरूपस्य कार्य्यस्य भावरूपमेव कारणमिति प्रत्यक्षादिभिरवगतं शतृप्रत्ययादभावस्य हेतुत्वाभिधाने सर्व्वप्रमाणविरोधः स्यादित्यर्थः॥

ननु त्वयाप्यकरणस्य प्रत्यवायलक्षणत्वमिष्टम्। भाट्टैश्चानुपलब्धस्याभावप्रमितिहेतुत्वमिष्यते। तार्किकैश्च प्रतिबन्धकाभावस्य तत्तत्प्रागभावस्य च तत्तत्कार्य्यव्यवस्थापकत्वमिष्यते तत्कथं भावस्यैव कारणत्वम्। तदुक्तम्॥ भावो यथा तथाऽभावः कारणं कार्य्यवन्मतमित्युच्यते॥ अस्माभिस्ताव-दभावस्य स्वरूपेण कारणत्वं नेष्टं किन्तु तज्ज्ञानस्य प्रत्यवायगमकत्वमिष्टम्। तेन च रूपेण न प्रत्यवायजनकत्वमिष्यते। नित्याकरणस्थाने प्रत्यवाय-भावाप्रसङ्गात्। भाट्टानामपि च केषाञ्चिज्ज्ञातस्य योग्यानुपलब्धस्याभावप्रमितिहेतुध्वंसतया तु प्रमितिहेतुत्वेऽभावप्रमायाः प्रत्यक्षत्वापातः। तार्किकाणामपि प्रतिबन्धकाभावस्य कारणत्वेऽन्योन्याश्रयत्वप्रसङ्गान्न प्रामाणिकत्वम्। प्रागभावस्यापि ज्ञातरूपेण जन्यज्ञापकत्वमेव। यस्मा-दिदं प्राङ्नासीत्तस्मादिदानीं जातमिति। न तु जनकत्वं प्रागभावस्य नियतप्रागभावित्वेन कारणत्वं प्राक्कालस्य स्वष्टत्तितापातः। प्रागभावित्व-मपि चान्यथासिद्धमित्युक्तं तत्त्वालोके। यस्मादकरणनिमित्तप्रत्यवायपरि-हारार्थं न नित्यं कर्म्म किन्तु कर्म्मणा पितृलोकः सर्व्व एते पुण्यलोका

मर्थमिति चेन्न। विरोधात्। नित्यश्चारभ्यत इति विरुद्धं यद्विनष्टं तदेव नोत्पद्यत इति प्रध्वंसाभाववन्नित्योऽपि मोक्ष आरभ्य एव चेन्न। मोक्षस्य भावरूपत्वात्। प्रध्वंसाभावतोऽप्यारभ्यत इत्यभावस्य विशेषाभावाद्विकल्पमात्रमेतत्। भावप्रतियोगी ह्यभावः॥ यथा ह्यभिन्नोऽपि भावो घटपटादिभिर्विशेष्यतेऽभिन्न एव घटभावः पटभाव इत्येवं निर्विशेषो भावाभावक्रियागुणयोगाद्द्रव्यादिवद्विकल्प्यते।

---

भवन्तीति श्रुतेः पितृलोकप्राप्तिफलम्। तस्माच्च यथोक्तचरितस्य शरीरान्तुत्पाद इत्याह। अयत्नत इति॥ द्वितीयमतमनूद्य दूषयति। यश्चोक्तमित्यादिना॥ विद्यासहितेनापि कर्म्मणा आरभ्यश्चेन्मोक्षस्तर्ह्यनित्य एव यत्कृतकं तदनित्यमिति व्याप्तिदर्शनादित्युक्तं तत्र व्याप्तिभङ्गं मन्वानः शङ्कते। यद्विनष्टमिति॥ भावरूपत्वादिति॥ यद्भावरूपं कार्य्यं तदनित्यमिति व्याप्तेस्तव च मोक्षस्य निरतिशयप्रीतेर्भावत्वादनित्यत्वं स्यादेवेत्यर्थः। प्रध्वंसाभावस्य कार्य्यत्वमभ्युपगम्य यत्प्रध्वंसातिरिक्तं कार्य्यं तदनित्यमिति व्याप्तिर्व्याख्याता एव। वस्तुतस्तु प्रध्वंसस्य कार्य्यत्वमपि नास्तीत्याह। प्रध्वंसेति॥ जन्याश्रयत्वं तावत्प्रध्वंसस्य न कार्य्यत्वम्। जन्ये नैवन्ते भावविकारत्वाभ्युपगमात्। नापि प्रागसतः सत्तासमवायादिलक्षणं तदनभ्युपगमात्। नाप्युत्तरकालयोगः कालेन सम्बन्धाभावात्। अवच्छेदावच्छेदकभावस्य समवायमूलत्वात् सम्बन्धान्तरमूलकत्वादर्शनादुत्तरकालस्य प्रध्वंसावच्छेदकत्वस्वभावस्तेदन्यावच्छेदकत्वस्वभावो न स्यात्। तस्मादभावस्य निर्विशेषकत्वात् कार्य्यत्वं कल्पनामात्रपरमिति भावः। किञ्चाभावस्याभावविशेषपातस्वभावत्वाद्भावविरोधित्वाच्च न भावरूपो धर्म्मः सम्भवतीत्याह। भावेति॥ नन्वभावश्चतुर्विधस्तत्रानित्यः प्रागभावः प्रध्वंसादयस्तु नित्याः ततः कथं निर्विशेषत्वमित्याशङ्क्याह। यथा हीति॥ भावप्रत्ययस्य एकाकारत्वादेक एव भावाभावच्छेदकभेदाद्भिन्न इव प्रकाशते। तथा निषे-

न हि अभाव उत्पत्त्यादिवद्विशेषणसहभावी। विशेषणावस्थे भाव एव स्यात्। विद्याकर्मकर्तृनित्यत्वाद्विद्याकर्मसन्तान-जनितमोक्षनित्यत्वमिति चेन्न। गङ्गास्रोतोवत् कर्तृत्वस्य दुःखरूपत्वात्। कर्तृत्वोपरमे च मोक्षविच्छेदात्। तस्मा-दविद्याकामकर्म्मोपादानहेतुनिवृत्तौ स्वात्मन्यवस्थानं मोक्ष इति। स्वयञ्चात्मा ब्रह्म तद्विज्ञानादविद्यानिवृत्तिर्मोक्ष इति ब्रह्मविद्यार्थोपनिषदारभ्यते। उपनिषदिति विद्योच्यते। तच्छीलिनां गर्भजन्मजरादिनिशातनात्। तदवसादनाद्वा

---

धप्रत्ययस्यैकाकारत्वादेक एवाभावोऽवच्छेदकभेदभिन्न इव प्रकाशते। जायते नश्यति चेति क्रियायोगात् सङ्ख्यागुणयोगाद्द्रव्यवदभावो विकल्प्यते न तु तत्त्वतः सविशेष इत्यर्थः॥ इतश्च न तत्त्वतः सविशेष इत्याह। न हीति॥ विशेषणं हि विशेष्यान्वयि प्रसिद्धम्। प्रतियोगिना च विशेषणेन नाभावस्य सहभावोऽस्ति। घटप्रध्वंसस्य नित्यत्वे घटस्यापि नित्यत्वप्रसङ्गात्। घटसहभावित्वे च तदभावत्वव्याघातात् भावाभावयोः सहानवस्थानरूपविरोधाभ्युपगमात्। ततः प्रतियोगिविशेषादभावः सविशेषः कार्य्यत्वादिधर्म्मवानिति भ्रममात्रमित्यर्थः। एवं प्रध्वंसदृष्टान्तेन शङ्कितं नित्यत्वं परिहृत्य प्रकारान्तरेणाशङ्कां निषेधति। विद्याकर्म्मेत्यादिना॥ विद्याकर्म्मणोः कर्त्ता नित्य इति साधनसातत्यात्साध्यसातत्यं न वाच्यम्। कर्तृत्वस्यानुपरमेऽनिर्म्मोक्षप्रसङ्गादुपरमे च साधनसातत्याभावान्मोक्षस्य विच्छित्तिः स्यादित्यर्थः। यस्मान्निःश्रेयसं ब्रह्मज्ञानं विना दुष्प्रापं तस्मादित्युपसंहारः। ब्रह्मविद्यायामुपनिषच्छब्दप्रसिद्धिरपि विद्याया एव निःश्रेयससाधनत्वे प्रमाणमित्याह। उपनिषदिति॥ निशातनाच्छिथिली-

# तैत्तिरीयोपनिषदारम्भः ॥

हरिः॥ ॐ॥ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि।

---

ब्रह्मणो वोपनिगमयितृत्वात् उपनिषत्। न वाऽस्याः परं श्रेय इति। तदर्थत्वाद्ग्रन्थोऽप्युपनिषत् ॥

शं सुखं प्राणवृत्तेरहश्चाभिमानी देवतात्मा मित्रो नोऽस्माकं भवतु। तथैवापानवृत्तेरात्रेश्चाभिमानी देवतात्मा वरुणः। चक्षुष्यादित्ये चाभिमानी अर्य्यमा। बले इन्द्रः। वाचि बुद्धौ च बृहस्पतिः। विष्णुरुरुक्रमो विस्तीर्णक्रमः पादयोरभिमानी। एवमाद्याध्यात्मदेवता शं नो भवत्विति सर्वत्रानुषङ्गः। तासु हि सुखकृत्सु विद्याश्रवणधारणोपयोगा अप्रतिबन्धेन भविष्यन्तीति तत्सुखकर्तृत्वं प्रार्थ्यते शं नो भवत्विति॥ ब्रह्मविद्याविविदिषुणा नमस्कारवन्दन-

---

करणादित्यर्थः। अस्यां विद्यायां निमित्तभूतायां परं श्रेयो ब्रह्म जीवस्योपनिषत्त्वात्मतयोपस्थितं भवतीत्यर्थः॥

एवमुपनिषदां व्याख्यारम्भं सम्भाव्य प्रतिपदव्याख्यामारभते। शं सुखमित्यादिना॥ शं नो भवत्विति॥ सुखकृद्भवत्वित्यर्थः। अध्यात्मप्राणकरणाभिमानिनां देवतानां सुखकृत्त्वं किमिति प्रार्थ्यते तत्राह। तासु हीति॥ श्रवणं गुरुपादोपसर्पणपूर्वकं वेदान्तानां तात्पर्यावधारणम्। धारणं श्रुतस्याविस्मरणमुपयोगः शिष्येभ्यो निवेदनम्। अन्यद्ब्रह्म वायुस्वान्य इति नाशङ्कनीयमित्याह। परोक्षेति॥ ब्रह्म इति परोक्षेण स

ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ॥१॥ सत्यं वदिष्यामि पञ्च च ॥ १ ॥ इति प्रथमोऽनुवाकः ॥

---

क्रिये वायुविषये ब्रह्मविद्योपसर्गशान्त्यर्थं क्रियते । सर्वक्रियाफलानां तदधीनत्वात् ब्रह्म वायुस्तस्मै ब्रह्मणे नमः । प्रह्वीभावं करोमीति वाक्यशेषः । नमस्ते तुभ्यं हे वायो ! नमस्करोमीति । परोक्षप्रत्यक्षाभ्यां वायुरेवाभिधीयते । किञ्च त्वमेव चक्षुराद्यपेक्ष्य बाह्यं सन्निकृष्टमव्यवहितं प्रत्यक्षं ब्रह्मासि यस्मात्तस्मात्त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं यथाशास्त्रं यथाकर्त्तव्यं बुद्धौ सुपरिनिश्चितमर्थं तदपि त्वदधीनत्वात्त्वामेव वदिष्यामि । सत्यमिति वाक्कायाभ्यां सम्पाद्यमानः सोऽपि त्वदधीन एव सम्पाद्य इति त्वामेव सत्यं वदिष्यामि । तत्सर्व्वात्मकं वाय्वाख्यं ब्रह्म मयैव स्तुतं सत् मां विद्यार्थिनमवतु विद्यासंयोजनेन । तदेव ब्रह्म वक्तार-

---

ब्रह्मेत्याचक्षत इति श्रुतेः । वायुशब्देन च प्रत्यक्षतया निर्देशः । प्राणस्य प्रत्यक्षत्वादित्यर्थः । यद्यपि सूत्रात्मरूपेण वायुः परोक्षस्तथाप्याध्यात्मिकप्राणवायुरूपेण ब्रह्मशब्दवाच्यत्वेऽप्यपरोक्षत्वमित्याह । किञ्चेति ॥ बाह्यं चक्षुरादिरूपदर्शनाद्यनुमेयत्वाद्व्यवहितम् । प्राणस्त्वव्यवधानेन साक्षिवेद्यः सन्निहितस्य भोक्तुरिति चक्षुराद्यपेक्षया प्रत्यक्ष इत्यर्थः । बृंहणाद्ब्रह्म । प्राणकृतेन श्वसनादिना* शरीरादेर्बृंहणं प्रसिद्धमित्यर्थः । यथा राज्ञो

---

* अशनायादिनेति पाठान्तरः ॥

ॐ शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा

माचार्यं वक्तृत्वसामर्थ्यसंयोजनेनावतु। मामवतु वक्तारमिति पुनर्वचनमादरार्थम्। ॐ शान्तिः शान्तिः शान्तिरिति त्रिवचनमध्यात्मिकाधिभौतिकाधिदैविकानां विद्याप्राप्त्युपसर्गाणां प्रशमार्थम्॥ १॥ इति प्रथमोऽनुवाकः॥

अर्थज्ञानप्रधानत्वादुपनिषदो ग्रन्थपाठे यत्नोपरमो मा भूदिति शिक्षाध्याय आरभ्यते॥ शिक्षा शिक्ष्यतेऽनयेति वर्णाद्युच्चारणलक्षणम्। शिक्ष्यन्त इति वा शिक्षा वर्णादयः। शिक्षैव शीक्षा दैर्घ्यं छान्दसं तां शीक्षां व्याख्यास्यामो विस्पष्टमासमन्तात् कथयिष्यामः। चक्षिङो वा ख्याञादिष्टस्य व्याङ्पूर्वस्य व्यक्तत्वात् कर्मण एतद्रूपम्। तत्र वर्णोऽकारादिः। स्वर उदात्तादिः। मात्रा ह्रस्वाद्याः। बलं प्रयत्नविशेषः। साम वर्णानां मध्यमवृत्त्योच्चारणं समता। सन्तानः सन्ततिः। संहितेत्यर्थः। एषो हि शिक्षितव्योऽर्थः। शिक्षा

---

दौवारिकं कश्चिद्राजदिदृक्षुराह त्वमेव राजेति तथा द्याहं स ब्रह्मणो द्वारपालं प्राहं ब्रह्म दिदृक्षुर्मुमुक्षुराह त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामीति। ब्रह्मवदनक्रिया प्राणदेवतास्तुत्यर्था। स्तुत्यन्तरमाह। ऋतमित्यादिना॥ १॥ इति प्रथमोऽनुवाकः॥ ॥

यत्नोपरम इति॥ स्वरोष्मव्यञ्जनप्रमादो माभूदित्यर्थः। अन्यथा विवक्षितार्थसिद्धिरेव न स्यात्तदुक्तम्। मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। सवाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादिति॥ लक्षणमिति॥ लक्षणं शास्त्रम्। अष्टौ स्थानानि वर्णानां मूर्द्धा। इचुयशानां तात्वित्यादि तस्याऽन्यत्रैव सिद्धत्वात्। इह कर्म्मव्युत्पत्तिरेव

बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥१॥ शीक्षां पञ्च ॥ २ ॥ इति द्वितीयोऽनुवाकः ॥ ॥

सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः ॥

---

यस्मिन्नध्याये सोऽयं शीक्षाध्याय इति । एवमुक्त उदित उक्त इत्युपसंहार उत्तरार्थः ॥ २ ॥ इति द्वितीयोऽनुवाकः ॥

अधुना संहितोपनिषदुच्यते । तत्र संहिताद्युपनिषत्परिज्ञाननिमित्तं यद्यशः प्राप्यते तन्नौ आवयोः शिष्याचार्ययोः सहैवास्तु । तन्निमित्तञ्च यद्ब्रह्मवर्चसं तेजस्तच्च सहैवास्त्विति शिष्यवचनमाशीः । शिष्यस्य हि अकृतार्थत्वात्प्रार्थनोपपद्यते । नाचार्यस्य । कृतार्थत्वात् । कृतार्थो हि आचार्यो नाम भवति । अथानन्तरमध्ययनलक्षणविधानस्य पूर्ववृत्तस्य यतोऽत्यर्थं ग्रन्थभाविता बुद्धिर्न शक्यते सहसाऽर्थज्ञानवि-

---

शिक्षाशब्दस्य ग्राह्या । चक्षिङः ख्याज् वालिटीतिसूत्रेण ख्याञादिष्टो यस्य तस्येदं रूपम् । न ख्याप्रकथने इत्यस्य सोपसर्गस्य प्रयोगानभिधानादित्यर्थः ॥ २ ॥ इति द्वितीयोऽनुवाकः ॥

संहितावर्णानां सन्निकर्षस्तद्विषयमुपासनं प्रथमं कथ्यत इत्याह । अधुनेति ॥ सन्निधानात्त स्वशाखासंहितैव ग्राह्या । शं नो मित्र इत्याशीर्वादः कृतस्नोपनिषच्छेषः संहितोपनिषच्छेषमाशीर्वादान्तरमाह । तत्रेति वस्तूपासनं हित्वा प्रथमतः शब्दोपासनविधाने हेतुरतःशब्देनोक्त इत्याह । यतोऽत्यर्थमिति ॥ पञ्चस्विति सप्तमी तृतीयार्थे विपरिणेया । अधिकरणशब्दो विषयपर्यायः । पञ्चभिः पदार्थैर्विशेषितं ज्ञानं वर्णेषु वक्तव्यम् ।

पञ्चस्वधिकरणेषु । अधिलोकमधिज्योतिष-मधिविद्यमधिप्रजमध्यात्मम् । ता महासꣳहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः ॥ १ ॥ वायुः सन्धानम् । इत्यधिलोकम् । अथाधि-ज्योतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तर-रूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधि-ज्योतिषम् । अथाधिविद्यम् । आचार्य्यः पूर्वरूपम्

---

षयेऽवतारयितुमित्यतः संहिताया उपनिषदं संहिता-विषयं दर्शनमित्येतद्ग्रन्थसन्निकृष्टामेव व्याख्यास्यामः ॥ पञ्चस्वधिकरणेष्वाश्रयेषु ज्ञानविषयेष्वित्यर्थः । कानि तानीत्याह । अधिलोकं लोकेष्वधि यद्दर्शनं तदधिलोकम् । तथाऽधिज्योतिषमधिविद्यमधिप्रजमध्यात्ममिति । ता एताः पञ्चविषया उपनिषदो लोकादिमहावस्तुविषयत्वात् संहिताविषयत्वाच्च महत्यश्च ताः संहिताश्च महासंहिता इत्याचक्षते कथयन्ति वेदविदः । अथ तासां यथोपन्यस्ता-

---

यथा विष्णुदर्शनप्रतिमायामित्यर्थः । लोकेष्वधीति ॥ लोकानधिकृत्योपा-दाय ध्येयत्वमित्यर्थः । विद्याशब्देन विद्याप्रतिबद्ध आचार्यादि-र्विवक्षितस्तथैव प्रजाशब्देन प्रजाप्रतिबद्धः पित्रादिर्विवक्षितः । अध्यात्म-मिति । आत्मानं भोक्तारमधिकृत्य यद्वर्त्तते जिह्वादिर्विवक्षितः । सर्वत्र तदभिमानिनी देवतैव ग्राह्या अन्यस्योपास्यत्वासम्भवादिति । विधिशेष-मर्थवादमाह । ता एता इति ॥ संहितोपनिषदः कर्त्तव्या इत्युपलक्षि-

॥ २ ॥ अन्तेऽवास्युत्तररूपम् । विद्या सन्धिः प्रवचनꣳसन्धानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳ सन्धानम् । इत्यधिप्रजम् ॥ ३ ॥ अथाध्यात्मम् । अधराहनुः पूर्वरूपम् । उत्तराहनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्याध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन

---

नामधिलोकं दर्शनमुच्यते । दर्शनक्रमविवक्षार्थोऽथशब्दः सर्वत्र । पृथिवी पूर्वरूपं पूर्वो वर्णः पूर्वरूपम् । संहितायाः पूर्वे वर्णे पृथिवीदृष्टिः कर्त्तव्येत्युक्तं भवति । तथा द्यौरुत्तररूपमाकाशोऽन्तरिक्षलोकः सन्धिर्मध्यमं पूर्वोत्तरयोः सन्धीयेतेऽस्मिन् पूर्वोत्तररूपे इति ॥ १ ॥ वायुः सन्धानम् । सन्धीयतेऽनेनेति सन्धानमित्यधिलोकं । दर्शनमुक्तम् अथाधिज्योतिषमित्यादि समानम् ॥ २ ॥ ३ ॥ इतीमा इत्युक्ता उपप्रदर्श्यन्ते ॥

---

विधिरुक्तः । कथं कर्त्तव्या इत्याकाङ्क्षायां विनियोगविधिमाह । अथ तासामित्यादिना ॥ कर्त्तुरेकत्वादनुष्ठेयानां बहुत्वादवश्यम्भाविनि क्रमे विशेषनियमार्थोऽथशब्दः । हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस इतिवदुपप्रदर्श्यन्ते परामृश्यन्ते अधिकारिविधिप्रदर्शनाय ॥

सुवर्गेण लोकेन ॥ ३ ॥ सन्धिराचार्य्यः पूर्वरूप-
मित्यधिप्रजं लोकेन ॥ ३ ॥ इति तृतीयोऽनु-
वाकः ॥

---

यः कश्चिदेवमेता महासंहिता व्याख्याता वेद उपास्ते।
वेदेत्युपासनं स्याद्विज्ञानाधिकारादिति प्राचीनयोग्योपा-
स्स्वेति वचनात्। उपासनञ्च यथाशास्त्रं तुल्यप्रत्ययसन्ततिर-
सङ्कीर्णा च। अतत्प्रत्ययैः शास्त्रोक्तालम्बनविषया च।
प्रसिद्धश्चोपासनशब्दार्थः। लोके गुरुमुपासते राजानमु-
पास्त इति। यो हि गुर्व्वादीन् सन्ततमुपचरति स उपास्त
इत्युच्यते। स च फलमाप्नोत्युपासनस्य। अतोऽत्रापि य
एवं वेद सन्धीयते प्रजादिभिः स्वर्गान्तैः प्रजादिफलमा-
प्नोतीत्यर्थः ॥ ३ ॥ इति तृतीयोऽनुवाकः ॥

---

यथा दर्शादयः षड्यागाः समुच्चिताः फलसाधनमधिकारांशेनाभेदात्
तथा पञ्चोपनिषदः समुच्चिताः प्रजादिफलकामस्यानुष्ठेया इत्याह। यः
कश्चिदित्यादिना॥ फलकामिनाऽनुष्ठीयमानं संहितोपासनं कामितफलाय
भवति। फलानभिसन्धिना चानुष्ठीयमानं ब्रह्म विद्यार्थं भवति।
मेधाहीनेन ब्रह्मणोऽवगन्तुमशक्यत्वान्मेधाकामस्य जपोऽपि ब्रह्मविद्यार्थो
भवति। श्रीविहीनेन स्वस्वगुरुवर्थं यागाद्यनुष्ठातुं न शक्यत इति।
श्रीकामस्य होमोऽपि परम्परया ब्रह्मविद्योपयोगीति मन्त्रतात्पर्यं
विद्यासन्निधिसमाम्नातानां सर्वत्र द्रष्टव्यम् ॥ ३ ॥ इति तृतीयोऽनुवाकः ॥

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्यो ऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोसि मेधया ऽपिहितः । श्रुतं मे गोपाय । आवहन्ती वित-

---

यश्छन्दसामिति मेधाकामस्य श्रीकामस्य च तत्प्राप्तिसाधनं जपहोमावुच्येते स मेन्द्रो मेधया स्पृणोतु । ततो मे श्रियमावहेति च लिङ्गदर्शनात् । यश्छन्दसां वेदानामृषभ इव ऋषभः प्राधान्यात् । विश्वरूपः सर्वरूपः सर्ववाग्व्याप्तेस्तद्यथा शङ्कुनेत्यादिश्रुत्यन्तरात् । अत एव ऋषभत्वमोङ्कारस्य ओङ्कारो ह्यत्रोपास्य इति ऋषभादिशब्दैः स्तुतिर्न्याय्यैव । ओङ्कारश्छन्दोभ्यो वेदेभ्यो वेदो ह्यमृतं तस्मादमृतादधिसंबभूव । लोकवेदव्याहृतिभ्यः सारिष्ठं जिघृक्षोः प्रजापतेस्तपस्यत ओँकारः सारिष्ठत्वेन प्रत्यभादित्यर्थः । न हि नित्यस्योङ्कारस्याञ्जसैवोत्पत्तिरवकल्पते । स एवम्भूत ओँकार इन्द्रः सर्वकामेशः परमेश्वरो मा मां मेधया प्रज्ञया स्पृणोतु प्रीणयतु बलयतु वा । प्रज्ञा

---

अथान्तरतात्पर्यमभिधेयमाह । यश्छन्दसामित्यादिना ॥ संबभूवेति जन्मवाचके पदे श्रूयमाणे किमिति प्रजापतिर्लोकानभ्यतपदित्यादिश्रुत्यन्तरानुसारेण आत्मप्राप्तियोग्यकार्यत्वेन प्रतिभानं व्याख्यायते तत्राह । न हीति ॥ पुरुषविपरिणाम इति ॥ भूयासमित्युत्तम-

न्वाना ॥ १ ॥ कुर्व्वाणाचीरमात्मनः । वासांꣳ

बलं हि प्रार्थयति ऽमृतस्यामृतत्वहेतुभूतस्य ब्रह्मज्ञानस्य तदधिकारात्। हे देव! धारणो धारयिता भूयासं भवेयम्। किञ्च शरीरं मे मम विचर्षणं विचक्षणं योग्यमित्येतद्भूयादिति प्रथमपुरुषपरिणामः। जिह्वा मे मधुमत्तमा मधुमत्यतिशयेन मधुरभाषिणीत्यर्थः। कर्णाभ्यां श्रोत्राभ्यां भूरि बहु विश्रुवं व्यश्रुवं श्रोता भूयासमित्यर्थः। किञ्चात्मज्ञानयोग्यः कार्य्यकारणसङ्घातोऽस्त्विति वाक्यार्थः। मेधा च तदर्थमेव प्रार्थ्यते। ब्रह्मणः परमात्मनः कोशोऽसि। असेरिवोपलब्ध्यधिष्ठानत्वात्। त्वं हि ब्रह्मणः प्रतीकं त्वयि ब्रह्मोपलभ्यते। मेधया लौकिकप्रज्ञया पिहित आच्छादितः स त्वं सामान्यप्रज्ञैरविदितसत्त्व इत्यर्थः। श्रुतं श्रवणपूर्वकमात्मज्ञानादिकं मे गोपाय रक्ष। तत्प्राप्त्यविस्मरणादिकं कुर्व्वित्यर्थः। जपार्था एते मन्त्रा मेधाकामस्य। होमार्थास्त्वधुना श्रीकामस्य मन्त्रा उच्यन्ते। आवहन्ती आनयन्ती वितन्वाना विस्तारयन्ती तनोतेस्तत्कर्मत्वात् ॥१॥ कुर्व्वाणा निर्वर्त्तयन्ती

---

पुरुषस्य प्रकृतस्य प्रथमपुरुषत्वेन परिणामः कर्त्तव्यः इत्यर्थः ॥ अचेतनशब्दं प्रति प्रार्थना कथम् ॥ कथञ्चेन्द्रशब्देनाभिधानमित्याशङ्क्य ब्रह्माऽभेदविवक्षयेत्यभिप्रेत्याह। ब्रह्मण इति ॥ ब्रह्माभेदेन प्रार्थितदाने समर्थस्ते दोङ्कारः किमिति सर्व्वैर्नोपास्यत इत्याशङ्क्याह। मेधयेति ॥

सि. मम गावश्च। अन्नपाने च सर्वदा। ततो मे
श्रियमावह। लोमशां पशुभिः सह स्वाहा।
आमायन्तु ब्रह्मचारिणः स्वाहा। विमायन्तु
ब्रह्मचारिणः स्वाहा। प्रमायन्तु ब्रह्मचारिणः
स्वाहा। दमायन्तु ब्रह्मचारिणः स्वाहा।
शमायन्तु ब्रह्मचारिणः स्वाहा॥ ३॥ यशो जने
ऽसानि स्वाहा। श्रेयान् वस्यसोऽसानि स्वाहा।
तं त्वा भग प्रविशानि स्वाहा। स मा भग

---

अचीरं अचिरं क्षिप्रमेव छान्दसो दीर्घः। चिरं वा कुर्व्वाणा
आत्मनो मम किमित्याह। वासांसि वस्त्राणि मम गावश्च
गोश्चेति यावत्। अन्नपाने च सर्वदा एकमादीनि कुर्व्वाणा
श्रीर्या तां ततो मेधानिर्वर्त्तनात्परमावह। आनय।
अमेधसो हि श्रीरनर्थायैवेति। किंविशिष्टां लोमशां
अजाव्यादियुक्तां अन्यैश्च पशुभिः संयुक्तामावहेत्यधिकारादो-
ङ्कार एवाभिसम्बध्यते स्वाहा स्वाहाकारो होमान्तमन्त्रा-
र्थज्ञापनार्थः। आयन्तु मामिति व्यवहितेन सम्बन्धः ब्रह्मचा-
रिणो विमायन्तु प्रमायन्तु शमायन्त्वित्यादि॥ २॥ यशो
यशस्वी जने जनसमूहेऽसानि भवानि। श्रेयान् प्रशस्यतरो

---

वौविकमप्यवेति॥ यावत्पामादिष्विव देवतानुबोत्यर्थः। नैतेष्वार्षेष्वादि
त्यम्। ब्रह्मचोत्पन्नत्वात्। वस निवासे वस आच्छादने इति धातु
द्वयादुप्रत्ययः। मोक्षार्थे वसुर्वसनशीलः। पराच्छादनशीलो वा वसुः।

प्रविश स्वाहा। तस्मिन्त्सहस्रशाखे। निभगा ऽहं त्वयि मृजे स्वाहा। यथाऽऽपः प्रवता यन्ति। यथा मासा अहर्जरम्। एवं मां ब्रह्मचारिणः। धातरायन्तु सर्व्वतः स्वाहा। प्रतिवेशोऽसि प्र मा

---

वस्यसो वसीयसो वसुतराद्वसुमत्तराद्वा असानीत्यन्वयः। किञ्च तं ब्रह्मणः कोशभूतं त्वा त्वां हे भग! भगवन्! पूजा-वन् प्रविशानि प्रविश्य च अनन्यस्त्वदात्मैव भवानीत्यर्थः। स त्वमपि मा मां भग! भगवन् पूजावन् प्रविश आवयोरे-कात्मत्वमेवास्तु। तस्मिन् त्वयि सहस्रशाखे बहुभेदे निमृजे शोधयाम्यहं पापकृत्याम्। यथा लोके आपः प्रवता प्रवणवता निम्नवता देशेन यन्ति गच्छन्ति। यथा वा मासा अहर्जरं संवत्सरोऽहर्जरोऽहोभिः परिवर्त्तमानो लोकान् जरयतीति अहानि वाऽस्मिञ्जीर्य्यन्त्यन्तर्भवन्ती-त्यहर्जरस्तञ्च यथा मासा यन्ति एवं मां ब्रह्मचारिणः। हे धातः! सर्व्वस्य विधातः मामायन्तु आगच्छन्तु सर्व्वतः सर्व्वदिग्भ्यः। प्रतिवेशः श्रमापनयनस्थानमासन्नं गृह-मित्यर्थः। एवं त्वं प्रतिवेश इव प्रतिवेशस्त्वच्छीलिनां सर्व्वपापदुःखापनयनस्थानमसि अतो मां प्रभाहि प्रका-शयात्मानं प्रपद्यस्व च मां रसविद्धमिव लोहं त्वन्मयं

---

अतिशयेन वसुर्वसीयान्। तस्माद्वसीयसः। ईलोपश्छान्दसः। वसु-मान्वसुशब्देन कथ्यत इत्यभिप्रेत्याह। वसुमत्तराद्वेति॥ पूर्व्वोक्तस्य

भाहि प्र मा पद्यस्व ॥ ३ ॥ वितन्वाना शमायन्तु ब्रह्मचारिणः स्वाहा धातरायन्तु सर्वतः स्वाहेकस्त्व ॥ ४ ॥ इति चतुर्थोऽनुवाकः ॥

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मैतां चतुर्थीं । माहाचमस्य

---

स्वदात्मानं कुर्वित्यर्थः ॥ श्रीकामोऽस्मिन् विद्याप्रकरणेऽभिधीयमानो धनार्थः । धनञ्च कर्म्मार्थम् । कर्म्म चोपात्तदुरितक्षयाय । तत्क्षये हि विद्या प्रकाशते । तथाच स्मृतिः । ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथाऽऽदर्शतले प्रख्ये पश्यन्त्यात्मानमात्मनीति ॥४॥ इति चतुर्थोऽनुवाकः ॥४॥

संहिताविषयमुपासनमुक्त्वा तदनु मेधाकामस्य श्रीकामस्य मन्त्रानुक्रान्तास्ते च पारम्पर्य्येण विद्योपयोगार्था एव । अनन्तरं व्याहृत्यात्मनो ब्रह्मणोऽन्तरुपासनं* स्वाराज्यफलं प्रस्तूयते भूर्भुवःसुवरिति । इतीत्युक्तोपप्रदर्शनार्थः । एतास्तिस्र इति प्रदर्शितानां परामर्शार्थः ।

---

प्रयोजनमाह । किञ्चेति ॥ यदुक्तं ब्रह्मचारिणो मामायन्त्विति तत्र दृष्टान्तमाह । यथेति ॥ इति चतुर्थोऽनुवाकः ॥ ४ ॥

वृत्तानुवादपूर्व्वकमुत्तरानुवाकस्य सम्बन्ध माह । संहिताविषयमित्यादिना ॥ व्याहृतीनां अङ्गाग्टहीतत्वात्तत्परित्यागेनोपदिश्यमानं ब्रह्म न बुद्धिमारोहेदिति । ततो व्याहृतिशरीरं हिरण्यगर्भाख्यं ब्रह्मान्तरहृदयध्येयत्वेनोपदिश्यत इत्यर्थः । मह इति व्याहृतावङ्गिब्रह्मदृष्टिः

---

* ब्रह्मान्तरोपासनमिति पुस्तकान्तरपाठः ।

प्रवेदयते। मह इति तद्ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः। भूरिति वा अयं लोकः॥

---

पराचष्टाः स्मर्यन्ते वै इत्यनेन। तिस्र एताः प्रसिद्धा व्याहृतयः स्मर्यन्ते तावत्। तासामियं चतुर्थी व्याहृतिर्मह इति। तामेतां चतुर्थीं महाचमसस्यापत्यं माहाचमस्यः प्रवेदयते उ ह स्म इत्येतेषां वृत्तानुकथनार्थत्वाद्विदितवान् ददर्श इत्यर्थः। माहाचमस्यग्रहणमार्षानुस्मरणार्थम्। ऋषिस्मरणमप्युपासनाङ्गमिति गम्यते। इहोपदेशाद्येयं माहाचमस्येन दृष्टा व्याहृतिर्मह इति तद्ब्रह्म महद्धि ब्रह्म। महश्च व्याहृतिः। किं पुनस्तत्। स आत्मा आप्नोतेर्व्याप्तिकर्मणः। आत्मा इतराश्च व्याहृतयो लोका देवा वेदाः। प्राणाश्च मह इत्यनेन व्याहृत्यात्मना देवलोकादयः सर्वेऽवयवभूता यतः। आदित्यचन्द्रब्रह्मान्नभूतेन व्याप्यन्ते यतः। अतोऽङ्गान्यवयवा अन्या देवताः। देवताग्रहणमुपलक्षणार्थम्। लोकादीनां मह इत्येतस्य व्याहृत्यात्मनो देवलोकादयः सर्वेऽवयवभूताः यत आहाऽऽ

---

कर्त्तव्या। तत्र किं साम्यमित्यत आह। महश्चेति। यथा देवदत्तस्य पादादीन्यङ्गानि मध्यभागस्याङ्गी इतरेषामङ्गानामात्मा कथ्यते व्यापकत्वात्॥ तथा महाव्याहृतिर्हिरण्यगर्भस्य ब्रह्मणो मध्यभाग आत्मेति कल्प्यते। इतराश्च व्याहृतयः पादाद्यवयवत्वेन कल्प्यते। प्रथमव्याहृतिः पादौ द्वितीया बाहू तृतीया शिर इत्यर्थः। व्याहृत्यवयवं ब्रह्म उपासी-

भुव इत्यन्तरिक्षम् । भुव इत्यसौ लोकः ॥१॥ मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते । भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि ॥ २ ॥ मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्च

---

दित्यादिभिर्लोकादयो महीयन्त इति । आत्मनो ह्यङ्गानि महीयन्ते महनं वृद्धिरुपचयो महीयन्ते वर्द्धन्त इत्यर्थः ॥

अयं लोकोऽग्निर्ऋग्वेदः प्राण इति प्रथमा व्याहृतिर्भूरिति । एवमुत्तरोत्तरा एकैका चतुर्द्धा भवति । ॥१॥२॥ मह इति ब्रह्म । ब्रह्मेत्योङ्कारः शब्दाधिकारेऽन्यस्यासम्भवादुक्तार्थमन्यत् ता वा एताश्चतस्रश्चतुर्द्धेति । ता वा एता भूर्भुवः सुवर्मह इति चतस्र एकैकशश्चतुर्धा चतुःप्रकाराः ।

---

तेत्युत्पत्तिविधिरुक्तः । इदानीमङ्गविशेषविधि कथ्यते । भूरिति वा लोक इत्यादिना ॥

तत्रैकैका व्याहृतिश्चतुर्धा चतुःप्रकारा अवगन्तव्येति तात्पर्यमाह । अयं लोक इत्यादिना ॥ एकैका व्याहृतयो यदा चतुःप्रकाराश्चिन्त्यन्ते षोडशकलः पुरुष उपासितो भवतीत्यभिप्रेत्य सङ्क्षेपमाह । ता वा एता

र्धा। चतस्रश्चतस्रो व्याहृतयः। ता यो वेद।
स वेद ब्रह्म। सर्वेऽस्मै देवा बलिमावहन्ति॥

---

धाशब्दः प्रकारवचनः। चतस्रश्चतस्रः सत्यश्चतुर्धा भवन्तीत्यर्थः। तासां यथाक्लृप्तानां पुनरुपदेशस्तथैवोपासननियमार्थः। ता यथोक्ता व्याहृतीर्यो वेद स वेद विजानाति। किम्। ब्रह्म। ननु तद्ब्रह्म स आप्नोति ज्ञाते ब्रह्मणि न वक्तव्यमविज्ञातवत्स वेद ब्रह्मेति। न। तद्विशेषविवक्षुत्वाददोषः। सत्यं विज्ञातं चतुर्थव्याहृत्यात्मकं ब्रह्मेति न तु तद्विशेषो हृदयान्तरुपलभ्यत्वं मनोमयत्वादिश्च। शान्तिसमृद्धमित्येवमन्तो विशेषणविशेष्यरूपो धर्मपूगो विज्ञापयत इति। तद्विवक्षुर्हि शास्त्रमविज्ञातमिव ब्रह्म मत्वा स वेद ब्रह्मेत्याह। अतो न दोषः। यो हि वक्ष्यमाणेन धर्मपूगेन विशिष्टं ब्रह्म वेद स वेद ब्रह्मेत्यभिप्रायः। अतो वक्ष्यमाणानुवाकेनैकवाक्यताऽस्योभयोर्ह्यनुवाकयोरेकमुपासनं लिङ्गाच्च। भूरित्यग्नौ प्रतितिष्ठतीत्यादिकं लिङ्गमुपासनैकत्वे विधायकाभावाच्च। न हि वेदोपासितव्य इति विधायकः कश्चिच्छब्दोऽस्ति।

---

इति॥ स वेदब्रह्मेति॥ ब्रह्मवेदनं फलत्वेन न सङ्कीर्त्यतेऽधिकारावधिवाक्ये। किन्तु वक्ष्यमाणानुवाकेनास्मिन्नेव ब्रह्मोपासने गुणविधानं भविष्यतीति सूचयितुमित्याह। न तद्विशेषविवक्षुत्वादित्यादिना॥ यदि व्याहृत्यवयव एव ब्रह्मोत्तरत्रोपास्यते तदैवोपासकस्य प्रथमव्याहृत्यात्मकेऽग्नौ प्रतिष्ठाभिधानं घटते तस्माद्व्याहृत्यात्मकदेवताप्राप्त्यभिधानमुपासनैकत्वे लिङ्गमाह। लिङ्गाच्चेति॥ किञ्चैकत्र प्रधानविद्याविधिरपरत्र गुणविधि-

३ ॥ असौ लोको यजूꣳषि वेद द्वे च ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥

स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं

---

व्याहृत्यनुवाके ता यो वेदेति वक्ष्यमाणार्थत्वाच्चोपासनभेदको वक्ष्यमाणार्थत्वञ्च तद्विशेषविवक्षुत्वादित्यादिनोक्तम् । सर्वे देवा अस्मै एवंविदुषेऽङ्गभूता आवहन्ति आनयन्ति बलिं स्वाराज्यप्राप्तौ सत्यामित्यर्थः ॥३॥ इति पञ्चमोऽनुवाकः ॥५॥

भूर्भुवः सुवःस्वरूपा मह इत्येतस्य हिरण्यगर्भस्य व्याहृत्यात्मनो ब्रह्मणोऽङ्गान्यन्यदेवता इत्युक्तम् । यस्य ताऽङ्गभूतास्तस्यैतस्य ब्रह्मणः साक्षादुपलब्ध्यर्थमुपासनार्थञ्च हृदयाकाशस्थानमुच्यते शालग्राम इव विष्णोः । तस्मिन् हि तद्ब्रह्मोपास्यमानं मनोमयत्वादिधर्म्मविशिष्टं साक्षादुपलभ्यते पाणाविवामलकम् । मार्गश्च सर्व्वात्मभावप्रतिपत्तये वक्तव्य इत्यनुवाक आरभ्यते ॥ स इति ॥ व्युत्क्रम्यायं पुरुष इत्यनेन सम्बध्यते । य एषोऽन्तर्हृदये हृदयस्यान्त-
हृदयमिति पुण्डरीकाकारो मांसपिण्डः प्राणायतनोऽने-

---

रित्येवमनुवाकभेदे चरितार्थेनानन्यथासिद्धं भेदकं प्रमाणमुपलभ्य इत्याह । विधायकाभावाच्चेति ॥ विधायकात्मक इति भिन्नविद्याबोधक इत्यर्थः इति पञ्चमोऽनुवाकः ॥ ५ ॥

तदुपलब्ध्यत्वादिति ज्ञानाकारपरिणामिनि मनस्येवोपलभ्यत्वाद्याप्तेरित्यर्थः* । तस्य† मनसः प्रवृत्तिं दृष्ट्वा तदधिष्ठातृतया

---

* ध्यायिभिरित्यर्थ इति पुस्तकान्तरपाठः । † जडस्येति पाठान्तरः ।

पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्त्तते। व्यपोह्य शीर्षकपाले। भूरित्यग्नौ प्रतितिष्ठति। भुव इति वायौ ॥१॥

---

कनाडीसुषिर ऊर्द्ध्वनालाधोमुखे विशस्यमाने पशौ प्रसिद्ध उपलभ्यते। तस्यान्तर्य एष आकाशः प्रसिद्ध एव करकाकाशवत्। तस्मिन् सोऽयं पुरुषः पुरि शयानात्पूर्णा वा भूरादयो लोका येनेति पुरुषो मनोमयः। मनो विज्ञानम्। मनुतेर्ज्ञानकर्म्मणस्तन्मयस्तदुपलभ्यत्वात्। मनुतेऽनेनेति वा मनोऽन्तःकरणं तदभिमानी तन्मयस्तल्लिङ्गो वा। अमृतोऽमरणधर्म्मा हिरण्मयो ज्योतिर्म्मयस्तस्यैवंलक्षणस्य हृदयाकाशे साक्षात्कृतस्य विदुष आत्मभूतस्येश्वरस्वरूपप्रतिपत्तये मार्गोऽभिधीयते। हृदयादूर्द्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी योगशास्त्रेषु च प्रसिद्धा। सा चान्तरेण मध्ये प्रसिद्धे तालुके तालुकयोर्गता। यश्चैष तालुकयोर्म्मध्ये स्तन इवावलम्बते मांसखण्डस्तस्य चान्तरेणेत्येतत्। यत्र केशान्तः केशानामन्तो मूलं विवर्त्तते विभागेन वर्त्तते मूर्द्धप्रदेश इत्यर्थः। तं देशं प्राप्य तत्र विनिःसृता व्यपोह्य विभज्य विदार्य्य शीर्षकपाले शिरः-

---

हिरण्मनाड़ी योगशास्त्रे बोध्यते*। तत्र शास्त्रे करणाधिष्ठातृत्वेन

---

* हिरण्यगर्भोऽनुमीयत इति पुस्तकान्तरपाठः।

सुवरित्यादित्ये। मह इति ब्रह्मणि। आप्नोति स्वाराज्यम्। आप्नोति मनसस्पतिम् वाक्पतिश्चक्षुष्पतिः। श्रोत्रपतिर्विज्ञानपतिः। एतत्ततो

भवति। आकाशशरीरं ब्रह्म। सत्यात्म प्राणा-

कपाले विनिर्गता या सेन्द्रयोनिरिन्द्रस्य ब्रह्मणो योनिमार्गः स्वरूपप्रतिपत्तिद्वारमित्यर्थः। तथैव विद्वान्मनोमयात्मदर्शी मूर्ध्नो विनिष्क्रम्यास्य लोकस्याधिष्ठाता भूरिति व्याहृतिरूपो यो ऽग्निर्महतो ब्रह्मणोऽङ्गभूतस्तस्मिन्नग्नौ प्रतितिष्ठत्यग्न्यात्मना इमं लोकमाप्नोतीत्यर्थः। तथा भुव इति द्वितीयव्याहृत्यात्मनि वायौ प्रतितिष्ठतीत्यनुवर्त्तते॥ १॥ सुवरिति तृतीयव्याहृत्यात्मनि आदित्ये। मह इत्यङ्गिनि चतुर्थव्याहृत्यात्मनि ब्रह्मणि प्रतितिष्ठति। तेष्वात्मभावेन स्थित्वाऽऽप्नोति ब्रह्मभूतः स्वाराज्यं स्वराड्भावं स्वयमेव राजा धिपतिर्भवति अङ्गभूतानां देवानां यथा ब्रह्म। देवाश्च सर्व्वेऽस्मै बलिमावहन्त्यङ्गभूता यथा ब्रह्मणे॥ आप्नोति मनसस्पतिम्। सर्वेषां हि मनसां पतिः सर्व्वात्मकत्वाद्ब्रह्मणः। सर्व्वैर्हि मनोभिस्तन्मनुते। तदाप्नोत्येवं विद्वान्। किञ्च वाक्पतिः सर्व्वासां वाचां पतिर्भवति। तथैव चक्षुष्पतिश्चक्षुषां पतिः। श्रोत्रपतिः श्रोत्राणां पतिर्विज्ञानपतिर्विज्ञानानां पतिः। सर्व्वात्मकत्वात्सर्वप्राणिनां

प्रसिद्धत्वादिति तद्विज्ञानलक्षणमित्यर्थः। स्वाराज्यं निरङ्कुशमैश्वर्यं जगत्स्रष्टृत्वादिलक्षणं न भवतीत्याह। अङ्गभूतानां देवानामिति॥

भवति। आकाशशरीरं ब्रह्म। सत्यात्म प्राणा-
रामं मन आनन्दम्। शान्तिसमृद्धममृत। इति
प्राचीनयोग्योपास्स्व॥२॥ वायावमृतमेकञ्च॥
षष्ठोऽनुवाकः॥६॥

---

करणैस्तद्वान् भवतीत्यर्थः। किञ्च ततोऽप्यधिकतरमेतद्भवति।
किन्तत। उच्यते। आकाशशरीरं आकाशः शरीरमस्य
आकाशवद्वा सूक्ष्मं शरीरमस्येत्याकाशशरीरम्। किन्तत्प्रकृतं
ब्रह्म सत्यात्म सत्यं मूर्त्तामूर्त्तमवितथं स्वरूपञ्चात्मा स्वभा-
वोऽस्य तदिदं सत्यात्म प्राणारामं प्राणेष्वारमणमाक्रीडा
यस्य तत्प्राणारामं प्राणानां वाऽरामो यस्मिन् तत्प्राणा-
रामम्। मन आनन्दभूतं सुखकृदेव यस्य मनस्तन्मन
आनन्दम्। शान्तिसमृद्धं शान्तिरुपशमः शान्तिश्च तत्समृद्धं
च शान्तिसमृद्धम्। शान्त्या वा समृद्धं तदुपलभ्यत इति।
शान्तिसमृद्धममरणधर्म्मि एतच्चाधिकतरं विशेषणं तत्रैव
मनोमय इत्यादौ द्रष्टव्यमिति। एवं मनोमयत्वादिध-
र्म्मैर्विशिष्टं यथोक्तं ब्रह्म हे प्राचीनयोग्य उपास्स्वेत्याचार्य-
वचनोक्तिरादरार्था॥२॥॥ षष्ठोऽनुवाकः॥६॥

---

वावधिकमैश्वर्य्यमत एवाह। आप्नोतीत्यादिना॥ इति षष्ठोऽनुवाकः
॥६॥

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः। अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि। आप ओषधयो वनस्पतयः। आकाश आत्मा। इत्यधिभूतम्॥ अथाध्यात्मम्। प्राणोऽपानो व्यान उदानः समानः। चक्षुः श्रोत्रं मनो वाक्त्वक्। चर्म्म मांसं

---

यदेतद्व्याहृत्यात्मकब्रह्मोपास्यमुक्तं तस्यैवेदानीं पृथिव्यादिपाङ्क्तस्वरूपेणोपासनमुच्यते। पञ्चसङ्ख्यायोगात्पङ्क्तिच्छन्दःसम्पत्तिस्ततः पाङ्क्तत्वं सर्वस्य। पाङ्क्तश्च यज्ञः पञ्चपादा पङ्क्तिः। पाङ्क्तो यज्ञ इति श्रुतेः। तेन यत्सर्वं लोकाद्यात्मान्तञ्च पाङ्क्तं परिकल्पयन्ति। तेन यज्ञेन परिकल्पितेन पाङ्क्तात्मकं प्रजापतिमभिसम्पद्यते। तत्कथं पाङ्क्तमिदं सर्वमित्यत आह। पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिश इति लोकपाङ्क्तम्। अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणीति देवतापाङ्क्तम्। आप ओषधयो वनस्पतय आकाश आत्मेति भूतपाङ्क्तम्। आत्मेति विराड्भूताधिकारादित्यधिभूतमित्यधिलोकाधिदैवतपाङ्क्तद्वयोपलक्षणार्थम्। लोकदेवतापाङ्क्तयोश्चाभिहितत्वात्। अथानन्तरमध्यात्मं पाङ्क्तत्रयमुच्यते।

---

उत्तरोऽप्यनुवाकः प्रकारान्तरेण हिरण्यगर्भोपासनविषय इत्याह। यदेतदित्यादिना॥ पृथिव्यादेः कथं पाङ्क्तत्वमित्याकाङ्क्षायां पङ्क्त्याख्यस्य छन्दसः सम्पादनादित्याह। पञ्चसङ्ख्येति॥ न केवलं पञ्चसङ्ख्यायोगात्पङ्क्तिच्छन्दःसम्पादनं यज्ञत्वसम्पादनमपि कर्त्तुं शक्यत इत्याह। पाङ्क्तश्च यज्ञ इति॥ पत्नीयजमानदेवमानुषवित्तैः पञ्चभिः सम्पाद्यत इति यज्ञः

स्नावास्थि मज्जा। एतदधिविधाय ऋषिरवोचत्। पाङ्क्तं वा इदꣳसर्वम्। पाङ्क्तेनैव पाङ्क्तꣳस्पृणो-तीति॥ १॥ सर्वमेकञ्च। इति सप्तमोऽनुवाकः ॥ ७॥

ओमिति ब्रह्म। ओमितीदꣳसर्वम्। ओमित्ये-

---

प्राणादि वायुपाङ्क्तम्। चक्षुरादीन्द्रियपाङ्क्तम्। चर्म्मादि धातुपाङ्क्तम्। एतावद्धीदं सर्वमध्यात्मम्। वाह्यञ्च पाङ्क्तमेवे-त्येतदवं अधिविधाय परिकल्प्य ऋषिर्वेदस्तद्दर्शनसम्पन्नो वा कश्चिदृषिरवोचदुक्तवान्। किमित्याह। पाङ्क्तं वा इदं सर्व्वं पाङ्क्तेनैवाध्यात्मिकेन सङ्ख्यासामान्यात्पाङ्क्तं वाह्यं स्पृणोति वलयति पूरयति। एकात्मतयोपलभ्यत इत्येतदेव पाङ्क्तमिदं सर्वमिति यो वेद स प्रजापत्या-त्मैव भवतीत्यर्थः॥ १॥ इति सप्तमोऽनुवाकः॥ ७॥

व्याहृत्यात्मनो ब्रह्मण उपासनमुक्तम्। अनन्तरं पाङ्क्तस्व-रूपेणेदानीं सर्व्वोपासनाङ्गभूतस्योङ्कारस्योपासनं विधि-त्सते। परापरब्रह्मदृष्ट्या ह्युपास्यमान ओङ्कारः शब्दमात्रो ऽपि परापरब्रह्मप्राप्तिसाधनं भवति। स ह्यालम्बनं

---

पाङ्क्त इत्यर्थः॥ उत्कृष्टदृष्टिर्निकृष्टे फलवतीति न्यायाद्वाह्यपाङ्क्तरूपेणा-ध्यात्मिकपाङ्क्तत्वमवगन्तव्यमित्यभिप्रेत्याह। एकात्मतयेति॥ इति सप्त-मोऽनुवाकः॥ ७॥

वृत्तानुवादपूर्व्वकमुत्तरानुवाकमवतारयति। व्याहृत्यात्मन इत्या-दिना॥ वेदविदां हि सर्व्वाः क्रिया ओङ्कारमुच्चार्य्य प्रवर्त्तन्ते तस्य ब्रह्माभ्यर्हितत्वात्तत्परिहारेणोपदिष्टं ब्रह्म न बुद्धिमारोहेदतस्तमादाये-

तदनुकृतिर्ह स्म वा अप्यो३ श्रावयेत्याश्रावयन्ति । ओमिति सामानि गायन्ति । ओ३ँ शोमिति शस्त्राणि शंसन्ति ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति ॥ ओमित्यग्निहोत्रमनुजानाति । ओमिति ब्राह्मणः प्रव-

---

ब्रह्मणः परस्यापरस्य च प्रतिमेव विष्णोः । एतेनैवायतनेनैकतरमन्वेतीति श्रुतेः । ओमिति । इतिशब्दः स्वरूपपरिच्छेदार्थः ओमित्येतच्छब्दरूपं ब्रह्मेति मनसा धारयेदुपासीत । यत ओमितीदं सर्वं हि शब्दरूपमोङ्कारेण व्याप्तम् । तद्यथा शङ्कुना इति श्रुत्यन्तरात् । अभिधानतन्त्रं ह्यभिधेयमित्यत इदं सर्वमोङ्कार इत्युच्यते । ओङ्कारस्तुत्यर्थमुत्तरो ग्रन्थः । उपास्यत्वात्तस्य । ओमित्येतदनुकृतिरनुकरणम् । करोमि यास्यामि वेति । कृतमुक्त ओमित्यनुकरोत्यन्यः । अत ओङ्कारोऽनुकृतिः । ह स्म वै इति प्रसिद्धावद्योतकाः । प्रसिद्धं ह्योङ्कारस्यानुकृतित्वम् अपि चोश्रावयेति तत्पूर्वकमाश्रावयति प्रतिश्रावयति । तथोमिति सामानि गायन्ति सामगाः । ओमिति शस्त्राणि शंसन्ति शस्त्रशंसितारोऽपि । तथौमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौत्यनुजानाति । ओमित्यग्निहोत्रमनुजानाति जुहोमीत्युक्तः । ओमित्येवानुज्ञां प्रयच्छति । ओमित्येव ब्राह्मणः

---

वोपासनं निर्धार्यत इत्यर्थः । नन्वोङ्कारस्य शब्दमात्रस्याचेतनत्वादहमनेनोपासित इति ज्ञानाभावात्कथं फलदातृत्वं स्यादित्याशङ्क्याह ।

च्यन्नाह । ब्रह्मोपाप्नुवानीति । ब्रह्मैवोपाप्नोति ॥ १ ॥ ॐ दश ॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥

ऋतञ्च स्वाध्यायप्रवचने च । सत्यञ्च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च

---

प्रवक्ष्यन् प्रवचनं करिष्यन्नध्येष्यमाण ओमित्येवाह। ओमिति प्रतिपद्यतेऽध्येतुमित्यर्थः । ब्रह्म वेद उपाप्नुवानीति प्राप्नुयां ग्रहिष्यामीति । उपाप्नोत्येव ब्रह्म । अथवा ब्रह्म परमात्मा तमुपाप्नुवानीत्यात्मानं प्रवक्ष्यन् प्रापयिष्यन्नोमित्येवाह । सचेतनोङ्कारेण ब्रह्म प्राप्नोत्येव । ओङ्कारपूर्व्वं प्रवृत्तानां क्रियाणां फलवत्त्वं यस्मात्तस्मादोङ्कारं ब्रह्मोपासीतेति वाक्यार्थः ॥ १ ॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥

विज्ञानादेवाप्नोति स्वाराज्यमित्युक्तत्वात् श्रौतस्मार्त्तानां कर्मणामानर्थक्यं प्राप्तमित्यतस्तन्मा प्रापदिति

---

परापरेति ॥ प्रतिमाद्यर्चनमिव सर्व्वत्र ईश्वर एव फलदातेति भावः । ओङ्कारे ब्रह्मत्वाध्यासे किं सादृश्यमित्यत आह । ओमितीदमिति ॥ सर्व्वात्मत्वमोङ्कारस्य ब्रह्मणा सादृश्यमित्यर्थः । यस्मादपि गीतिरहिता ऋच उच्यन्ते । प्रतिगरमित्योंशोंसामो दैवेतिशब्दमध्वर्युः प्रतिजानाति होतुः शंसनं प्रति । प्रतिशंसनमनुज्ञापयतीत्यर्थः ॥ प्रवक्ष्यन्निति ॥ वच परिभाषण इत्यस्य रूपं प्रथमव्याख्याने । द्वितीये वह प्रापण इत्यस्य द्रष्टव्यम् ॥ १ ॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥

व्यवहितानुवाकेन सम्बन्धमाह । विज्ञानादेवेत्यादिना ॥ अपरविद्यासहकारितया तत्फलेनैव फलवत्त्वसिद्ध्यर्थमुत्तरानुवाकारम्भ इ-

स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रञ्च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रववने च। मानुषञ्च स्वाध्यायप्रवचने च। प्रजा च स्वाध्या-

---

कर्मणां पुरुषार्थं प्रति साधनत्वप्रदर्शनार्थमिहोपन्यासः। ऋतमिति व्याख्यातं। स्वाध्यायोऽध्ययनम्। प्रवचनमध्ययनं ब्रह्मयज्ञो वा। एतान्यृतादीनि अनुष्ठेयानीति वाक्यशेषः। सत्यं सत्यप्रवचनं यथा व्याख्यातार्थं वा। तपः कृच्छ्रादि। दमो वाह्यकरणोपशमः। अग्नय आधातव्याः। अग्निहोत्रं होतव्यम्। अतिथयश्च पूज्याः। मानुषमिति लौकिकः संव्यवहारः। तच्च यथाप्राप्तमनुष्ठेयम्। प्रजाश्चोत्पाद्याः। प्रजनश्च प्रजननमृतौ भार्य्यागमनमित्यर्थः। प्रजातिः पौत्रोत्पत्तिः पुत्रो निवेशयितव्य इत्येतत्सर्वैरेतैः कर्मभिर्युक्तस्यापि स्वाध्यायप्रवचने यत्नतोऽनुष्ठेये इत्येवमर्थं सर्वेण सह स्वाध्यायप्रवचनग्रहणम्। स्वाध्यायाधीनं हि अर्थज्ञानम्। अर्थज्ञानायत्तं च परं श्रेयः प्रवचनञ्च तदविस्मरणार्थं धर्मवृद्ध्यर्थञ्च अतः स्वाध्यायप्रवचनयोरादरः कार्य्यः॥ सत्य-

---

त्यर्थः। लौकिकसंव्यवहारो विवाहादिः। पुनः पुनः स्वाध्यायप्रवचनग्रहणस्य तात्पर्य्यमाह। सर्व्वैरेतैरिति॥ किमिति यत्नतोऽनुष्ठेये तत्राह। स्वाध्यायाधीनमिति॥

यप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवचा राथीतरः । तपइति तपो नित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ॥ १ ॥ प्रजा च स्वाध्यायप्रवचने च षट् च ॥ इति नवमोऽनुवाकः ॥९॥

---

मिति । सत्यमेवानुष्ठातव्यमिति । सत्यवचः सत्यमेव वचो यस्य सोऽयं सत्यवचा नाम वा तस्य । राथीतरः रथीतरस्य गोत्रो राथीतराचार्य्यो मन्यते । तप एव कर्त्तव्यमिति । तपोनित्यस्तपः परस्तपो नित्य इति वा नाम । पौरुशिष्टिः पुरुशिष्टस्यापत्यं पौरुशिष्टिराचार्य्यो मन्यते । स्वाध्यायप्रवचने एवानुष्ठेये इति नाको नामतो मुद्गलस्यापत्यं मौद्गल्य आचार्य्यो मन्यते । तद्धि तपस्तद्धि तपः । तद्धि तपो हि यस्मात्स्वाध्यायप्रवचने एव तपस्तस्मात्तेऽनुष्ठेये इति । उक्तानामपि सत्यतपः स्वाध्यायप्रवचनानां पुनर्ग्रहणमादरार्थम् ॥ १ ॥ इति नवमोऽनुवाकः ॥ ९ ॥

---

तथाचाप्यृषीणां मतभेदोपन्यासेन स्वाध्यायप्रवचनयोरेवादरं विदधातीति । सत्यमित्यादिना ॥ स्वाध्यायार्थ इति जपार्थः । इषे त्वेति शाखां छिनत्तीति वत् ॥ इति नवमोऽनुवाकः ॥ ९ ॥

अहं वृक्षस्य रेरिवा कीर्त्तिः पृष्ठं गिरेरिव। ऊर्द्धपवित्रो वाजिनीव स्वमृतमस्मि। द्रविणꣳ सुवर्चसम्। सुमेधा अमृतोक्षितः इति त्रिशङ्को-

---

अहं वृक्षस्य रेरिवेति स्वाध्यायार्थो मन्त्राम्नायः। स्वाध्यायश्च विद्योत्पत्तये प्रकरणात्। विद्यार्थं हि इदं प्रकरणम्। न चान्यार्थत्वमवगम्यते। स्वाध्यायेन च विशुद्धसत्त्वस्य विद्योत्पत्तिरवकल्पते। अहं वृक्षस्योच्छेदात्मकस्य संसारवृक्षस्य रेरिवा प्रेरयिता अन्तर्याम्यात्मना। कीर्त्तिः ख्यातिर्गिरेः पृष्ठमिवोत्थिता मम। ऊर्द्धपवित्र ऊर्द्धं कारणं पवित्रं पावनं ज्ञानं प्रकाश्यं पवित्रं परमं च ब्रह्म यस्य सर्व्वात्मनो मम सोऽहं ऊर्द्धपवित्रो वाजिनीव वाजवतीव। वाजमन्नं तद्वति सवितरीत्यर्थः। यथा सवितर्य्यमृतमात्मतत्त्वं विशुद्धं श्रुतिस्मृतिशतेभ्यः एवं स्वमृतं शोभनं विशुद्धमात्मतत्त्वमस्मि भवामि। द्रविणं धनं सुवर्चसं दीप्तिमदेवात्मतत्त्वमस्मीत्यनुवर्त्तते। ब्रह्मज्ञानं वा आत्मतत्त्वप्रकाशकत्वात्। सुवर्चसं द्रविणमिव द्रविणं मोक्षसुखहेतुत्वात्। अस्मिन्पक्षे प्राप्तं मयेत्यध्याहारः कर्त्तव्यः। सुमेधाः शोभना मेधा सर्वज्ञलक्षणा यस्य मम सोऽहं सुमेधाः। संसारस्थित्युत्पत्त्युपसंहारकौशलयोगात्सुमेधस्त्वम्। अत

---

अन्यत्र विनियोजकश्रुत्यादिप्रमाणमपि नोपलभ्यत इत्याह। न चान्यार्थत्वमिति॥ अमृतमस्मीत्यादिवदुपासनाविधिशेषत्वं वा वक्तुं न शक्यते। ज्ञानक्रियासाधनविधेः प्रक्रान्तत्वादित्यर्थः। अहं वृक्षस्येति

वेदानुवचनम् ॥ १ ॥ अह९ षट् ॥ इति दश-मोऽनुवाकः ॥ १० ॥

वेदमनूच्याचार्य्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्म्मञ्चर ।

---

एवाच्युतोऽमरणधर्म्मा अक्षितोऽक्षीणोऽव्ययः । उक्षितो वा अमृतेन वेक्षितः सिक्तोऽमृतेक्षितोऽहमित्यादि ब्राह्मण-मिति । एवं त्रिशङ्कोरार्षेर्ब्रह्मभूतस्य ब्रह्मविदो वेदानु-वचनम् । वेदो वेदनमात्मैकत्वविज्ञानं तस्य प्राप्तिमनुवचनं वेदानुवचनम् । आत्मनः कृतकृत्यताख्यापनार्थं वामदेववत्त्रि-शङ्कुनार्षेण दर्शनेन दृष्टो मन्त्राम्नाय आत्मविद्याप्रकाश इत्यर्थः । अस्य च जपो विद्योत्पत्त्यर्थोऽवगम्यते । ऋतञ्चेत्यादिकर्मोपन्यासादनन्तरञ्च वेदानुवचनपाठादेतदवग-म्यते । एवं श्रौतस्मार्त्तेषु नित्येषु कर्मसु युक्तस्य निष्कामस्य परंब्रह्म विविदिषोरार्षाणि दर्शनानि प्रादुर्भवन्त्यात्मादि-विषयाणीति ॥ १ ॥ इति दशमोऽनुवाकः ॥ १० ॥

वेदमनूच्येत्येवमादिकर्त्तव्यतोपदेशारम्भः प्राग्ब्रह्मवि-ज्ञानान्नियमेन कर्त्तव्यानि श्रौतस्मार्त्तकर्म्माणीत्येवमर्थः ।

---

मन्त्रस्य ऋषिस्त्रिशङ्कुः पङ्क्तिश्छन्दः परमात्मा देवता ब्रह्मविद्यार्थो जपे विनियोगः ॥ न केवलमस्य जपो विद्यार्थः पूर्व्वोक्तानि कर्म्माण्यपीत्याह ऋतञ्चेत्यादिना ॥ १ ॥ इति दशमोऽनुवाकः ॥ १० ॥

उत्तरानुवाकस्य तात्पर्य्यमाह । वेदमनूच्येत्यादिना ॥ विद्योत्पत्त्यर्थं नित्यनैमित्तिकान्यनुष्ठेयानीत्येको नियम उक्तः ॥ प्रागेव वाचानुष्ठेया-नीति नियमान्तरमाह । प्रागिति ॥ प्रागुपन्यासाच्च कर्म्मणामिति

अनुशासनश्रुतेः पुरुषसंस्कारार्थत्वात्। संस्कृतस्य हि विशुद्धसत्त्वस्यात्मज्ञानमञ्जसैवोत्पद्यते। तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुत इति स्मृतिः। वक्ष्यति च। तपसा ब्रह्म विजिज्ञासस्वेति। अतो विद्योत्पत्त्यर्थमनुष्ठेयानि कर्म्माणि। अनुशास्तीत्यनुशासनशब्दादनुशासनातिक्रमे हि दोषोत्पत्तिः। प्रागुपन्यासाच्च कर्मणां केवलब्रह्मविद्यारम्भाच्च पूर्वं कर्म्माण्युपन्यस्तानि। उदितायाञ्च विद्यायामभयं प्रतिष्ठां विन्दते। न बिभेति कुतश्चनेति। किमहं साधु नाकरवमित्येवमादिना कर्मनैष्किञ्चन्यं दर्शयिष्यतीत्यतोऽवगम्यते। पूर्वोपचितदुरितक्षयद्वारेण विद्योत्पत्त्यर्थानि कर्म्माणीति मन्त्रवर्णाच्च। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इति ऋतादीनां पूर्वत्रोपदेशआनर्थक्यपरिहारार्थः। इह तु ज्ञानोत्पत्त्यर्थत्वात्कर्त्तव्यनियमार्थः। वेदमनूच्याचार्य्योऽन्तेवासिनमनुशास्ति ग्रन्थग्रहणादनु पश्चाच्छास्ति तदर्थं ग्राहयतीत्यर्थः। अतोऽवगम्यते अधीतवेदस्य धर्मजिज्ञासामकृत्वा गुरुकुलान्न समावर्त्तितव्यमिति बुद्ध्वा कर्म्माणि चारभेदिति स्मृतेश्च। कथमनु-

---

संग्रहवाक्यं विवृणोति। केवलेत्यादिना॥ अविद्यया कर्म्मणा मृत्युं तीर्त्वेति मन्त्रोऽपि विद्योत्पत्तेः प्रागेव कर्म्मानुष्ठानं सूचयतीत्यर्थः॥ ऋतञ्च स्वाध्यायप्रवचने चेत्यादिना पूर्व्वत्र कर्म्मानुष्ठानमुक्तमेवातः पुनरुक्तमित्याशङ्क्याह। ऋतादीनामिति॥ विचारमकृत्वा गुरुकुलान्न निवर्त्तितव्यम्। किन्त्वध्ययनविधेरर्थावबोधद्वारेण पुरुषार्थपर्य्यवसायितासिद्ध्यर्थमक्षरग्रहणानन्तरमर्थावबोधे प्रयतितव्यमित्याह। ग्रन्थग्रहणादन्विति॥

स्वाध्यायान्मा प्रमदः। आचार्य्याय प्रियं धन-
माहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न
प्रमदितव्यम्। धर्म्मान्न प्रमदितम्। कुशलान्न
प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्याय-
प्रवचनाभ्यां न प्रमदितव्यम्॥ १ ॥ देवपितृका-
र्य्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृ-

---

शास्तीत्याह। सत्यं वद यथा प्रमाणावगतं वक्तव्यं वद।
तद्वद्धर्मं चर। धर्म इत्यनुष्ठेयानां सामान्यवचनं सत्यादि-
विशेषनिर्द्देशात्॥ स्वाध्यायादध्ययनान्मा प्रमदः प्रमादं
माकार्षीः। आचार्य्यायाऽऽचार्य्यार्थं प्रियमिष्टं धनमाहृत्या-
नीय दत्त्वा विद्यानिष्क्रियार्थमाचार्य्येण चानुज्ञातोऽनुरूपा-
न्दारानाहृत्य प्रजातन्तुं सन्तानं मा व्यवच्छेत्सीः प्रजा-
सन्ततेर्विच्छित्तिर्न कर्त्तव्या। अनुत्पद्यमानेऽपि पुत्रे
पुत्रकाम्यादिकर्म्मणा तदुत्पत्तौ यत्नः कर्त्तव्य इत्यभिप्रायः।
प्रजा प्रजननप्रजातित्रयनिर्द्देशसामर्थ्यात्। अन्यथा प्रज-
ननश्चेत्येतदेकमेवावक्ष्यत्। सत्यान्न प्रमदितव्यं प्रमादो न
कर्त्तव्यः। सत्याच्च प्रमदनमनृतप्रसङ्गः। प्रमादशब्दसाम-
र्थ्यात्। विस्मृत्याप्यनृतं न कर्त्तव्यमित्यर्थः। अन्यथाऽस-
त्यवचनप्रतिषेध एव स्यात्। धर्म्मान्न प्रमदितव्यम्। धर्मश-

---

वेदमधीत्य स्नायादिति स्मृतिरप्येतच्छ्रुतिनिबद्धेत्याह। अतोऽवगम्यत
इति॥ वक्तव्यमिति वचनार्हं परस्य हितमित्यर्थः॥ सर्व्वमेतत् स्पष्ट-

देवो भव। आचार्य्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्म्माणि तानि सेवितव्यानि। नो इतराणि। यान्यस्माकꣳ सुचरितानि। तानि त्वयोपास्यानि ॥ २ ॥ नो इतराणि। एके चास्मच्छ्रेयाꣳसो ब्राह्मणाः। तेषां त्वयासनेन प्रश्वसि-

---

ष्टस्यानुष्ठेयविषयत्वात्। अननुष्ठानं प्रमादः स न कर्त्तव्योऽनुष्ठातव्य एव। कुशलादात्मरक्षार्थात् कर्म्मणो न प्रमदितव्यम्। भूतिर्विभूतिस्तस्यै भूत्यै भूत्यर्थान्मङ्गलयुक्तात्कर्मणो न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ते हि नियमेन कर्त्तव्ये इत्यर्थः। देवपितृकार्य्याभ्यां न प्रमदितव्यं देवपित्र्ये कर्मणी कर्त्तव्ये। मातृदेवो माता देवो यस्य स त्वं भव स्याः। एवं पितृदेवः आचार्य्यदेवोऽतिथिदेवो भव। देवतावदुपास्या एते इत्यर्थः। यान्यपि चान्यान्यनवद्यानि अनिन्दितानि शिष्टाचारलक्षणानि कर्म्माणि तानि सेवितव्यानि कर्त्तव्यानि त्वया नो कर्त्तव्यानीतराणि सावद्यानि शिष्टकृतान्यपि। यान्यस्माकमाचार्य्याणां सुचरितानि शोभनचरितानि आम्नायाद्यविरुद्धानि तान्येव त्वयोपास्यानि अदृष्टार्थान्यनुष्ठेयानि नियमेन कर्त्तव्यानीत्येतत्। नो इतराणि विपरीतान्याचार्य्यकृतान्यपि। ये के च विशेषिता आचार्य्यत्वादिधर्मैरस्मदस्मत्तः

---

मिति ॥ एवं कर्त्तव्यमर्थमुपदिश्यानुष्ठानकाले सदुत्पन्नसंशयनिवृत्त्यर्थं

तव्यम्। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। अथ यदि ते कर्म्मविचिकित्सा वा वृत्त-विचिकित्सा वा स्यात्॥ ३ ॥ ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्म्मकामाः स्युः। यथा ते तत्र वर्त्तेरन्। तथा तत्र वर्त्तेथाः। अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्म्मकामाः स्युः।

---

श्रेयांसः प्रशस्यतरास्ते च ब्राह्मणा न त्वत्तादयस्तेषामासनेनाऽऽसनदानादिना त्वया प्रश्वसितव्यं प्रश्वसनं प्रश्वासः श्रमापनयस्तेषां श्रमस्त्वयाऽपनेतव्य इत्यर्थः। तेषां वाऽऽसने गोष्ठीनिमित्ते समुदिते तेषु न प्रश्वसितव्यम्। प्रश्वासोऽपि न कर्त्तव्यः केवलं तदुक्तसारग्राहिणा भवितव्यम्। किञ्च यत्किञ्चिद्देयं तच्छ्रद्धयैव देयम्। अश्रद्धयाऽदेयं न दातव्यम्। श्रिया विभूत्या देयं दातव्यम्। ह्रिया लज्जया च देयम्। भिया च भयेन देयम्। संविदा च। संविन्मित्रादिकार्य्यम्। अथैवं वर्त्तमाने त्वयि यदि कदाचित्ते तव श्रौते स्मार्त्ते वा कर्मणि वृत्ते वा आचारलक्षणे विचिकित्सा संशयः स्याद्भवेत्। ये तत्र तस्मिन्देशे काले वा ब्राह्मणास्तत्र कर्म्मादौ युक्ता इति व्यवहितेन

---

शिष्टाचारः प्रमाणयितव्य इत्याह। अथ यमित्यादिना॥ इत्येवा-

यथा ते तेषु वर्त्तेरन् । तथा तेषु वर्त्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमुचैतदुपास्यम् ॥ ४ ॥ स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् तानि त्वयोपास्यानि विचिकित्सा वा स्यात्तेषु वर्त्तेरन् सप्त च ॥ इत्येकादशोऽनुवाकः ॥ ११ ॥

---

सम्बन्धः कर्त्तव्यः । सम्मर्शिनो विचारक्षमाः युक्ता अभियुक्ताः कर्मणि वृत्ते वा । अयुक्ता अपरप्रयुक्ताः । अलूक्षा अरूक्षा अक्रूरमतयः । धर्मकामा अदृष्टार्थिन अकामहता इत्येतत् । ते यथा तत्र तस्मिन् कर्मणि वृत्ते वा वर्त्तेरन् तथा त्वमपि वर्त्तेथाः । अथाभ्याख्यातेष्वभ्युक्तदोषेण सन्दिह्यमानेन संयोजिताः केनचित्तेषु च यथोक्तं सर्वमुपनयेत् ये तत्रेत्यादि । एष आदेशो विधिः । एष उपदेशः पुत्रादीनाम् । एषा वेदोपनिषद्वेदरहस्यं वेदार्थ इत्येतत् । एतदेवानुशासनमीश्वरवचनम् । आदेशवाक्यस्य विधेरुक्तत्वात्सर्वेषां वा प्रमाणभूतानामनुशासनमेतत् । यस्मादेवं यथोक्तं सर्वमुपासितव्यं कर्त्तव्यम् एवमु चैतदुपास्यमेव चैतान्नानुपास्यमित्यादरार्थम् । पुनर्वचनम् ॥ इत्येकादशोऽनुवाकः ॥ ११ ॥

---

दशोऽनुवाकः ॥ ११ ॥

शन्नो मित्रः शं वरुणः । शन्नो भवत्वर्य्यमा । शन्न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋत-मवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ॥ १ ॥ सत्यमवादिषं पञ्च च ॥ ॐ शान्तिः शान्तिः॥ इति द्वादशोऽनुवाकः ॥ १२ ॥

---

अतीतविद्याप्राप्त्युपसर्गशमनार्थं शान्तिं पठति । शन्नो मित्र इति । व्याख्यातमेतत्पूर्वम् । अतैतच्चिन्त्यते विद्या-कर्मणोर्विवेकार्थम् । किं कर्मभ्य एव केवलेभ्यः परं श्रेय उत विद्यासव्यपेक्षेभ्यः । आहोस्विद्विद्याकर्मभ्यां संहताभ्यां विद्याया वा कर्म्मापेक्षाया उत केवलाया एव विद्याया इति । तत्र केवलेभ्य एव कर्मभ्यः स्यात् समस्त-वेदार्थज्ञानवतः कर्म्माधिकाराद्वेदः कृत्स्नोऽधिगन्तव्यः । स रहस्यो द्विजन्मनेति स्मरणात् । अधिगमश्चसहोपनिष-

---

अपरप्रयुक्ता इति स्वतन्त्रा इत्यर्थः । मन्वादौ आद्यवादे केवलाया विद्याया निःश्रेयसहेतुत्वमुक्तमपि स्फुटीकर्त्तुं कर्मविधिमुपलभ्य प्रसङ्गात् पुनर्विचारयितुमुपक्रमते । अतैतच्चिन्त्यत इत्यादिना ॥ विवेकार्थमिति पृथक्फलताज्ञापनार्थमित्यर्थः । भूतं भव्यायोपदिश्यत इति न्यायेन ज्ञानस्यापि कर्मकर्त्तुः संस्कारतया कर्मविधिशेषत्वाच्च तस्यापि फल-श्रुतेरर्थवादमात्रत्वात्कर्मभ्य एव परोऽर्थ इति पूर्वपक्षसिद्धान्तमाह । नित्य-

शन्नः शीक्षाᳫं सह नौ यश्छन्दसां भूः स यः पृथिव्योमित्यृतञ्चाहं वेदमनूच्य शन्नो द्वादश ॥ १२ ॥ शन्नो मह इत्यादित्यो नो इतराणि त्रयोविᳫंशतिः ॥ २३ ॥ हरिः ॐ ॥ शन्नो वक्तारम् ॥ इति शिक्षाध्यायः प्रथमा वल्ली ॥ ॥

---

दर्शनात्मज्ञानादिना । विद्वान् यजते विद्वान् याजयति इति च विदुष एव कर्मण्यधिकारः प्रदर्श्यते । सर्वत्र ज्ञात्वा चानुष्ठानमिति च । कृत्स्नश्च वेदः कर्म्मार्थ इति हि मन्यन्ते । केचित्कर्मभ्यश्चेत्परं श्रेयो नावाप्यते वेदोऽनर्थकः स्यान्न । नित्यत्वान्मोक्षस्य । नित्यो हि मोक्ष इष्यते । कर्मकार्यस्यानित्यत्वं प्रसिद्धम् । लोके कर्मभ्यश्चेच्छ्रेयोऽनित्यं स्यात् तच्चानिष्टं काम्यप्रतिषिद्धयोरनारम्भात् । आरब्धस्य च कर्मण उपभोगेन क्षयान्नित्यानुष्ठानाच्च प्रत्यवायानुपपन्नो ज्ञाननिरपेक्ष एव मोक्ष इति चेत् । तच्च न । शेषकर्मसम्भवात् । तन्निमित्तशरीरान्तरोत्पत्तिः प्राप्नोतीत्युक्तम् । कर्मशेषस्य च नित्यत्वानुष्ठानेनाविरोधात्क्षयानुपपत्तिरिति च । यदुक्तं समस्तवेदार्थज्ञानवतः कर्म्माधिकारादित्यादि । तच्च न ।

---

त्वादित्यादिना ॥ यद्यप्यध्ययनविधिप्रयुक्तः कृत्स्नो वेदार्थ एकेन विचारितव्यस्तथाप्यध्ययनविधौ प्रतिवाक्याध्यापनं प्रतिवाक्यार्थविचारश्च व्यापारभेदात्तत्तत्प्रयुक्ताभ्युदयकामस्य कर्मोपयोगिवाक्यार्थज्ञानवत्त्वमात्रेण कर्मण्यधिकारसम्भवाद्ब्रह्मसाक्षात्कारस्य तत्रानुपयोगित्वाच्च समस्तवेदार्थज्ञानवतः कर्माधिकारे प्रमाणमस्तीत्याह । तच्च नेति ॥ यद्यपि चाध्ययनविधिप्रयुक्तो वेदान्तविचारोऽपि कृतो गुरुकुल एव तथापि न

श्रुतज्ञानव्यतिरेकादुपासनस्य। श्रुतज्ञानमात्रेण हि कर्मण्यधिक्रियते नोपासनामपेक्षते। उपासनञ्च श्रुतज्ञानादर्थान्तरं विधीयते। मोक्षफलं अर्थान्तरप्रसिद्धञ्च स्यात् श्रोतव्येत्युक्त्वा तद्व्यतिरेकेण मन्तव्यो निदिध्यासितव्य इति यत्नान्तरविधानान्मनननिदिध्यासनयोश्च प्रसिद्धं श्रवणज्ञानादर्थान्तरत्वम्। एवं तर्हि विद्यासव्यपेक्षेभ्यः कर्मभ्यः स्यान्मोक्षः। विद्यासहितानाञ्च कर्मणां भवेत्कार्यान्तरारम्भसामर्थ्यम्। यथा स्वतोऽमरणज्वरादिकार्यारम्भसामर्थ्यानामपि विषदध्यादीनां मन्त्रशर्करादिसंयुक्तानां कार्यान्तरारम्भसामर्थ्यम्। एवं विद्यासहितैः कर्मभिर्मोक्ष आरभ्यत इति चेन्न। आरभ्यस्यानित्यत्वादित्युक्तदोषः। वचनादारभ्योऽपि नित्य एवेति चेत्। न। ज्ञापकत्वाद्वचनस्य। वचनं

---

समस्तवेदार्थज्ञानवतोऽधिकारः। उपासनासाध्यस्य ब्रह्मसाक्षात्कारस्य पृथगभावादित्याह। श्रुतज्ञानेति॥ श्रुताद्गुरुकुले विचारिताद्वाक्यादनुष्ठानोपयोगि यज्ज्ञानं तावन्मात्रेण कर्मण्यधिक्रियते न ब्रह्मसाक्षात्कारफलमुपासनमपेक्षते व्यतिरेकाभावादित्यर्थः। अध्यापनविधिव्यापारोपरमेऽनुष्ठेयतया भूतब्रह्मोपासनमेव नास्ति मानाभावादिति न वक्तव्यमित्याह। उपासनञ्चेति॥ एतच्च कर्ममीमांसान्यायाङ्गीकारमात्रेणोक्तम्। वस्तुतस्तु श्रोतव्यविधिप्रयुक्त एवोपनिषद्विचारारम्भो भिन्नाधिकारः। कर्मकाण्डविचारोऽप्युत्तरविधिप्रयुक्त एवेति प्रकटार्थे प्रतिष्ठितम्॥ केवलं कर्म मोक्षसाधनमिति पक्षं निरस्य विद्यासमुच्चितं मोक्षसाधनमिति पक्षान्तरमाशङ्क्य निषेधति। एवं तर्हीत्यादिना॥ न स पुनरावर्त्तत इति वचनादारभ्योऽपि मोक्षो नित्य इति न शक्यं वक्तुम्। प्रसिद्धपदार्थयोग्यत्वमुपादाय वचनस्य संसर्गज्ञापकत्वात्। न चारभ्यस्य नित्यत्वयोग्यत्वं प्रसिद्धम्। अन्यथा वचनस्य कारकत्वप्रसङ्गात्। अन्यो

नाम यथा भूतस्यार्थस्य ज्ञापकं नाविद्यमानस्य कर्तृ। न हि वचनशतेनापि नित्यमारभ्यते आरब्धं वा विनाशि भवेत्।

एतेन विद्याकर्मणोः संहतयोर्मोक्षारम्भकत्वं प्रत्युक्तम्। विद्याकर्मणी मोक्षप्रतिबन्धहेतुनिवर्त्तके इति चेत्। न। कर्मणः फलान्तरदर्शनात्। उत्पत्तिसंस्कारविकाराप्तयो हि फलं कर्मणो दृश्यते। उत्पत्त्यादिफलविपरीतश्च मोक्षो गतिश्रुतेराप्य इति चेत् सूर्य्यद्वारेण तयोर्द्ध्वमायन्नित्येवमादिगतिश्रुतिभ्यः प्राप्यो मोक्ष इति चेत्। न। सर्वगतत्वाद्गन्तृभ्यश्चानन्यत्वादाकाशादिकारणत्वात्सर्वगतं ब्रह्म। ब्रह्मव्यतिरिक्ताश्च सर्वे विज्ञानात्मानोऽतो नाप्यो मोक्षः। गन्तुरन्यद्विभिन्नं देशं भवति गन्तव्यम्। न हि येनैवाव्यतिरिक्तं यत्तेनैव गम्यते तदनन्यत्वप्रसिद्धेश्च। तत्सृष्ट्वा तदेवानुप्राविशत्। क्षेत्रज्ञं चापि मां विद्धि। इत्येवमादिश्रुतिस्मृतिशतेभ्यः। गत्यैश्वर्य्यादिश्रुतिविरोध इति चेत्। अथापि

---

नचिभविन्ददित्यादिष्वपि योग्यताकल्पनप्रसङ्गादित्याह। न ज्ञापकत्वादित्यादिना॥

कर्म प्रधानं विद्या चोपसर्जनमिति समसमुच्चयं निरस्य समुच्चयेऽप्यतिदिशति। एतेनेति॥ अनित्यत्वादिदोषप्रसङ्गेनेत्यर्थः। मोक्षेति॥ मोक्षस्य प्रतिबन्धहेतुरविद्याऽधर्मादिस्तन्निवर्त्तके विद्याकर्मणी न स्वरूपोत्पादिके। ततः स्वरूपावस्थानस्य नित्यत्वम्। प्रध्वंसस्य च कृतकस्यापि नित्यत्वं प्रसिद्धमित्यर्थः। भिद्यते हृदयग्रन्थिरित्यादिश्रुतेः। केवलविद्यासाध्यैवाविद्यानिवृत्तिः। न तत्र विद्यायाः सहकार्य्यपेक्षा॥ कर्मफलन्त्वन्यदेव प्रसिद्धमित्याह। न कर्मण इति॥ उत्पत्तिः पुरोडाशादेः। संस्कारो व्रीह्यादेः। विकारः सोमस्य। आप्तिर्वेदस्य। कर्मफलं प्रसि-

स्याद्यद्यप्राप्यो मोक्षो गतिश्रुतीनां स एकधा स यदि पितृ-
लोककामो भवति स्त्रीभिर्वा यानैर्वा इत्यादिश्रुतीनाञ्च
कोपः स्यादिति चेन्न। कार्य्यब्रह्मविषयत्वात्तासाम्। कार्य्ये
हि ब्रह्मणि स्त्र्यादयःस्युर्न कारणे। एकमेवाद्वितीयं यत्र
नान्यत्पश्यति तत्केन कं पश्येदित्यादिश्रुतिभ्यो विरोधाच्च।
विद्याकर्मणोः समुच्चयानुपपत्तिः। प्रविलीनकर्त्रादि-
कारकविशेषतत्त्वविषया हि विद्या तद्विपरीतकारकसाध्येन
कर्मणा विरुध्यते। न ह्येकं वस्तु परमार्थतः कर्त्रादिविशेष-
वत् तच्छून्यञ्चेत्युभयथा द्रष्टुं शक्यते। अवश्यं ह्यन्यतरन्मिथ्या
स्यादन्यतरस्य च मिथ्यात्वप्रसङ्गे युक्तं यत् स्वाभाविका-
ज्ञानविषयस्य द्वैतस्य मिथ्यात्वम्। यत्र हि द्वैतमिव भवति
मृत्योः स मृत्युमाप्नोति। अथ यत्रान्यत् पश्यति तदल्पम्।
अन्योऽसावन्योऽहमस्मि। उदरमन्तरं कुरुते। अथ तस्य भयं
भवतीत्यादिश्रुतिशतेभ्यः। सत्यत्वं चैकत्वस्यैकधैवानुद्रष्टव्य-

---

त्वम्। आत्मस्वरूपस्य तु मोक्षस्यानादित्वादनादेयातिशयत्वादविकार्य्य-
त्वान्नित्याप्तत्वाच्च कर्मफलाद्वैपरीत्यमित्यर्थः। गतिश्रुतेरिति॥ अर्चि-
रादिगतिश्रवणाद्ब्रह्माण्डाद्बहिस्थितब्रह्मप्राप्तिर्मोक्षस्ततो नित्याप्तत्व-
मप्रसिद्धमित्यर्थः। गत्या प्राप्तिः किं संयोगलक्षणा तादात्म्यलक्षणा वा
नोभयथापीत्याह। न सर्व्वगतत्वादिति॥ गत्यादिश्रुतेस्त्वर्थं शङ्का-
पूर्व्वकं दर्शयति। गत्यैश्वर्य्येत्यादिना॥ समुच्चयमभ्युपगम्य कर्मकार्य्यं
कश्चिन्मोक्षो न सम्भवतीत्युक्तम्। सोऽपि न सम्भवतीत्याह। विरोधा-
च्चेत्यादिना॥

यदि कर्त्रादिकारकभेदस्य सत्यत्वांशमयबोध्यब्रह्मज्ञानमनुपदिश्यते
तदा मिथ्यार्थत्वात्कर्मविधीनामप्रामाण्यं स्यादित्याह। विहितत्वादिति॥
शङ्कां विवृणोति। यदित्यादिना॥ अध्ययनविधिगृहीतानां श्रुतीनां

मेकमेवाद्वितीयम् ब्रह्मैवेदं सर्वमात्मैवेदं सर्वमित्यादिश्रुतिभ्यः। न च सम्प्रदानादिकारकभेदादर्शने कर्मोपपद्यते। अन्ये त्वदर्शनापवादाश्च विद्याविषये सहस्रशः श्रूयन्ते। अतो विरोधो विद्याकर्मणोः। अतश्च समुच्चयानुपपत्तिः। तत्र यदुक्तं संहिताभ्यां विद्याकर्मभ्यां मोक्ष इति। अनुपपन्नं तत्। विहितत्वात्कर्मणाम्। श्रुतिविरोध इति चेत् यद्युपमृद्य कर्त्रादिकारकविशेषमात्मैकत्वविज्ञानं विधीयते। सर्पादि भ्रान्तिज्ञानोपमर्दकरज्ज्वादिविषयविज्ञानवत्प्राप्तः कर्मविधिः श्रुतीनां निर्विषयत्वाद्विरोधः। विहितानि च कर्माणि। स च विरोधो न युक्तः। प्रमाणत्वाच्छ्रुतीनामिति चेत् न। पुरुषार्थोपदेशपरत्वाच्छ्रुतीनाम्। विद्योपदेशपरा तावच्छ्रुतिः। संसारात्पुरुषो मोक्षयितव्य इति संसारहेतोरविद्याया निवृत्तिः कर्त्तव्येति विद्याप्रकाशकत्वेन प्रवृत्तेति न विरोधः। एवमपि कर्त्रादिकारकसद्भावप्रतिपादनपरं शास्त्रं विरुध्यत एवेति चेन्न। यथा प्राप्तमेव कारकास्तित्वमुपादायोपात्तदुरितक्षयार्थं कर्म्माणि विदधच्छास्त्रं मुमुक्षूणां फलार्थिनाञ्च फलसाधनं न कारकास्तित्वे व्याप्रियते। उपचितदुरितप्रतिबन्धस्य हि विद्योत्पत्तिर्नावकल्पते। तत्क्षये च विद्योत्पत्तिः स्यात्ततश्चावि-

---

पुरुषार्थोपदेशकत्वेन प्रामाण्यं वक्तव्यम्। ननु भेदस्य सत्यत्वेन ततः प्रसिद्धिविधं कारकादिभेदमर्थक्रियावमर्थमादाय प्रवृत्तानां प्रामाण्यं न विरुध्यत इत्याह। न पुरुषार्थेति॥ सङ्कृद्वाक्यं विवृणोति। विद्योपदेशपरा तावदित्यादिना॥ पूर्वं सत्यमिथ्याविषयत्वेन विद्याकर्मणो-

द्यानिवृत्तिस्तत आत्यन्तिकसंसारोपरमः। अपि च नात्म-
दर्शिनो ह्यनात्मविषयः कामः। कामयमानश्च करोति
कर्म्माणि। तत्फलोपभोगाय शरीराद्युपादानलक्षणः
संसारः। तद्व्यतिरेकेणात्मैकत्वदर्शिनो विषयाभावात्। कामा-
नुपपत्तिः। आत्मनि चानन्यत्वात्कामानुपपत्तेः स्वात्मन्य-
वस्थानं मोक्ष इत्यतोऽपि विद्याकर्मणोर्विरोधः॥

विरोधादेव च विद्या मोक्षं प्रति न कर्माण्यपेक्षते। स्वात्म-
लाभे तु पूर्व्वोपचितप्रतिबन्धापनयद्वारेण विद्याहेतुत्वं
प्रतिपद्यन्ते कर्माणि नित्यानीति। अत एवास्मिन् प्रकरणे
उपन्यस्तानि कर्माणीत्यवोचाम। एवञ्चाविरोधः कर्मविधि-
श्रुतीनाम्। अतः केवलाया एव विद्यायाः परं श्रेय इति
सिद्धम्। एवं तर्ह्याश्रमान्तरानुपपत्तिः। कर्मनिमित्तत्वा-
द्विद्योत्पत्तेः। गार्हस्थ्ये च विहितानि कर्माणीत्यैकाश्रम्यमेव।
अतश्च यावज्जीवादिश्रुतयोऽनुकूलतराः स्युः। न कर्म्मानेक-
त्वात् न ह्यग्निहोत्रादीन्येव कर्म्माणि। ब्रह्मचर्य्यं तपः सत्य-
वदनं शमो दमोऽहिंसा इत्येवमादीन्यपि कर्म्माणीतराश्रम-

---

विरोधमादाय समुच्चयो निरस्तः इदानीं काम्यकामिविषयत्वेनाविरोध-
माह। अपि चेत्यादिना॥

समसमुच्चयं निरस्य गुणप्रधानभावेनापि तं निरस्यति। विरोधादेव
चेति॥ विद्या चेत्कर्माणि स्वरूपफलेनापेक्षते विरुद्धत्वादविरुद्धधर्म-
वदनुगमनं कथं तर्हि विद्यासन्निधाने कर्मणां पाठ इत्यत आह। स्वात्म-
लाभे त्विति॥ कर्मणो विद्यासाधनत्वं श्रुत्वा गार्हस्थ्यमेवैकमनुष्ठेय-
मिति प्रत्यवतिष्ठन्ते कर्मजडाः। एवं तर्हीति॥ श्रुतिस्मृत्यन्तराणा-

प्रसिद्धानि विद्योत्पत्तौ साधकतमान्यसङ्कीर्णत्वाद्विद्यान्त-
ध्यानधारणादिलक्षणादीनि च। वक्ष्यति च। तपसा ब्रह्म
विजिज्ञासस्वेति। जन्मान्तरकृतकर्मभ्यश्च प्रागपि गार्हस्थ्या-
द्विद्योत्पत्तिसम्भवात् कर्म्मार्थत्वाच्च गार्हस्थ्यप्रतिपत्तेः कर्म-
साध्यायाश्च विद्यायां सत्यां गार्हस्थ्यप्रतिपत्तिरनर्थिकैव।
लोकार्थत्वाच्च पुत्रादीनाम्। पुत्रादिसाध्येभ्यश्चायं लोकः
पितृलोक इत्येतेभ्यो व्यावृत्तकामस्य नित्यसिद्धात्मदर्शिनः
कर्मणि प्रयोजनमपश्यतः कथं प्रवृत्तिरुपपद्यते। प्रतिपन्न-
गार्हस्थ्यस्यापि विद्योत्पत्तौ विद्यापरिपाकाद्विरक्तस्य कर्मसु
प्रयोजनमपश्यतः कर्मभ्यो निवृत्तिरेव स्यात्। प्रवर्त्स्यि-
ष्यन् वा अरेऽहमस्मात् स्थानादस्मीत्येवमादिश्रुतिलिङ्ग-
दर्शनात्। कर्मप्रतिश्रुतेर्यत्नाधिक्यदर्शनादयुक्तमिति चेद-
ग्निहोत्रादिकर्मप्रतिश्रुतेरधिको यत्नो महांश्च कर्मण्या-
यासोऽनेकसाधनसाध्यत्वादग्निहोत्रादीनाम्। तपो ब्रह्म-
चर्य्यादीनाञ्चेतराश्रमकर्मणां गार्हस्थ्येऽपि समानत्वादल्प
साधनापेक्षत्वाच्चेतरेषां न युक्तस्तुल्यवद्विकल्प आश्रमि-

---

मपि विहितत्वाविशेषाद्दीपकर्मसु कर्मत्वाविशेषाच्च याम्यधर्मरागिणामे-
वैतच्चोद्यमित्याह। न कर्म्मानेकत्वादिति॥ असङ्कीर्णत्वादिति॥ हिंसा-
द्यमिश्रितत्वादित्यर्थः। इतश्च विद्याकर्मणोः साधनत्वेऽपि न गार्हस्थ्य-
मावश्यकमित्याह। जन्मान्तरेति॥ कामिनां गार्हस्थ्यस्यानुष्ठेयत्वेऽपि न
सर्वैरनुष्ठेयत्वमित्यत्र हेत्वन्तरमाह। लोकार्थत्वाच्चेत्यादिना॥ गार्हस्थ्य-
स्यानावश्यकत्वेन वैकल्पिकमनुष्ठानमुक्तं तत्रातुल्यत्वेन विकल्पमाक्षि-
पति। कर्मप्रतिश्रुतेरिति॥ जन्मान्तरकृतानुग्रहादिति परिहाराय

भिन्नस्येति चेन्न। जन्मान्तरकृतानुग्रहात्। यदुक्तं कर्मणि श्रुतेरधिको यत्न इत्यादि। नाऽसौ दोषः॥

यतो जन्मान्तरकृतमप्यग्निहोत्रादिलक्षणं ब्रह्मचर्यादिलक्षणञ्चानुग्राहकं भवति विद्योत्पत्तिं प्रति। ये च जन्मनैव विरक्ता दृश्यन्ते केचित्। केचित्तु कर्मसु प्रवृत्ता अविरक्ता विद्याविद्वेषिणस्तस्माज्जन्मान्तरकृतसंस्कारेभ्यो विरक्तानामाश्रमान्तरप्रतिपत्तिरेवेष्यते कर्म्मफलबाहुल्याच्च पुत्रस्वर्गब्रह्मवर्चसादिलक्षणस्य कर्मफलस्यासङ्ख्येयत्वात्। तच्च प्रतिपुरुषाणां कामबाहुल्यात्तदर्थः श्रुतेरधिको यत्नः कर्मसूपपद्यते। आशिषां बाहुल्यदर्शनादिदं मे स्यादिदं मे स्यादित्युपायत्वाच्च। उपायभूतानि हि कर्म्माणि विद्यां प्रतीत्यवोचाम। उपायेऽधिको यत्नः कर्त्तव्यो नोपेये। कर्म-निमित्तत्वाद्विद्याया यत्नान्तरानर्थक्यमिति चेत्कर्मभ्य एव सर्व्वोपचितदुरितप्रतिबन्धक्षयाद्विद्योत्पद्यते चेत् कर्म्मभ्यः पृथगुपनिषच्छ्रवणादियत्नोऽनर्थक इति चेत्। नियमाभावात्। नहि प्रतिबन्धक्षयादेव विद्योत्पद्यते नत्वी-

---

भाव्यं विवृणोति। यदुक्तमित्यादिना॥ कर्म्मणि यत्नाधिक्यस्यान्यथा-सिद्धत्वाद्विकल्पविद्योतकत्वं न सम्भवतीत्यर्थः।

इदानीं गृहस्थाश्रमकर्म्मणां बहिरङ्गत्वं सन्न्यासाश्रमकर्मणां त्वन्तर-ङ्गत्वं विद्यासाधनत्वमिति विशेषं दर्शयितुं चोद्यमुद्भावयति। कर्म्म-निमित्तत्वादित्यादिना॥ शान्तिद्वयस्यापौनरुक्त्यमाह। शन्नो मित्र इति॥ तदपरं ब्रह्म मामपरविद्यार्थिनमावीदरक्षदित्यर्थः॥ इति द्वादशोऽनुवाकः॥ १२॥ इति श्रीपरमहंस परिव्राजकाचार्य्य श्रीम-

हरिः ॐ। सह नाववतु। सह नौ भुनक्तु। सह वीर्य्यं करवावहै। तेजस्वि नावधीतमस्तु। मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः॥

---

श्वरप्रसादतया ध्यानाद्यनुष्ठानादिति नियमोऽस्ति अहिंसा ब्रह्मचर्य्यादीनाञ्च विद्यां प्रत्युपकारकत्वात्साक्षादेव कारणत्वाच्छ्रवणमनननिदिध्यासनानाम्। अतः सिद्धान्याश्रमान्तराणि सर्व्वेषाञ्चाधिकारो विद्यायां परञ्च श्रेयः केवलाया विद्याया एवेति सिद्धम्। शन्नो मित्र इत्यादि पूर्व्ववत् स्पष्टम्॥ इति द्वादशोऽनुवाकः॥ १२॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीमद्गोविन्द भगवत्पूज्यपादशिष्यस्य शङ्करभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्ये प्रथमोऽध्यायः शिक्षावल्ली॥ ॥ ॐ तत्सत्॥

अतीतविद्याप्राप्त्युपसर्गप्रशमनार्था शान्तिः पठिता। इदानीन्तु वक्ष्यमाणब्रह्मविद्याप्राप्त्युपसर्गोपशमनार्था शान्तिः पठ्यते। सह नाववत्विति॥ सह नाववतु नौ शिष्याचार्य्यौ सहैवावतु रक्षतु। सह नौ भुनक्तु भोजयतु। सह वीर्य्यं विद्यानिमित्तं सामर्थ्यं करवावहै निर्वर्त्तयावहै। तेजस्वि नौ आवयोस्तेजस्विनोरधीतं स्वधीतमस्त्वर्थज्ञानयोग्यमस्त्वित्यर्थः। मा विद्विषावहै विद्याग्रहणनिमित्तं शिष्यस्या

---

शुद्धानन्दपूज्यपादशिष्य श्रीभगवदानन्दज्ञानविरचितानां तैत्तिरीयोपनिषद्भाष्यटीकायां प्रथमोऽध्यायः॥ १॥

इदानीं परविद्यार्थिनमप्यवतु साधारण्येन यथा पूर्व्वं प्रार्थितत्वा-

# ॐ ब्रह्मविदाप्नोति परम् ॥

चार्य्यस्य वा प्रमादकृतादन्यायाद्विद्वेषः प्राप्तस्तच्छमनायेय-माशीर्मा विद्विषावहा इति । मैवेतरेतरं विद्वेषमापद्या-वहै । शान्तिः शान्तिः शान्तिरिति त्रिर्वचनमुक्तार्थं वक्ष्य-माणविद्याविघ्नप्रशमनार्थश्चेयं शान्तिः । अविघ्नेनात्मविद्या-प्राप्तिराशास्यते । तन्मूलं हि परं श्रेय इति ॥

संहितादिविषयाणि कर्म्मभिरविरुद्धान्युपासनान्युक्तानि । अनन्तरञ्चान्तः सोपाधिकात्मदर्शनमुक्तं व्याहृतिद्वारेण स्वाराज्यफलेन च । एतावताऽशेषतः संसारबीजस्योपमर्द-नमस्तीत्यतोऽशेषोपद्रवबीजस्याज्ञानस्य निवृत्त्यर्थं विधूत-सर्व्वोपाधिविशेषात्मदर्शनार्थमिदमारभ्यते । ब्रह्मविदा-प्नोति परमित्यादि ॥ प्रयोजनञ्चास्या ब्रह्मविद्यायां अविद्यानिवृत्तिस्ततः आत्यन्तिकः संसाराभावः । वक्ष्यति च विद्वान्न बिभेति कुतश्चनेति । संसारनिमित्ते च सत्यभयं प्रतिष्ठाञ्च विन्दत इत्यनुपपन्नम् । कृताकृते पुण्यपापे न तपत

---

दित्यर्थः । असाधारण्येन परविद्योपसर्गशान्त्यर्थमाह । सह नाव-वत्विति ॥ नौ आवयोस्तेजस्विनोरधीतं तेजस्वस्त्विति ॥

वृत्तानुवादपूर्व्वकमानन्दवल्ल्यास्तात्पर्य्यमाह । संहितादीत्यादिना । ननु यथापूर्व्वमाप्नोति स्वाराज्यमित्यपरविद्याफलमुक्तं संसारगोचरमेव तथाऽपरविद्याफलमपि । सोऽश्नुते सर्व्वान् कामानिति सर्वविषयसाध्या-नन्दान् संसारगोचरानेव दर्शयिष्यन् कथमात्यन्तिकसंसाराभाव इत्यत आह । प्रयोजनञ्चास्या इति ॥ सर्वकामशब्देन निरतिशयानन्दाभि-व्यक्तिर्विवक्षिता । सा च स्वभावानन्दाभिव्यक्तिरूपाविद्यानिवृत्तिरे-

इति च । अतोऽवगम्यतेऽस्माद्विज्ञानात्मैकत्वब्रह्मविषया-दात्यन्तिकः संसाराभाव इति स्वयमेव प्रयोजनमाह । ब्रह्मविदाप्नोति परमित्यादावेव सम्बन्धप्रयोजनज्ञापनार्थम् । निर्ज्ञातयोर्हि सम्बन्धप्रयोजनयोर्विद्याश्रवणग्रहणधारणा-भ्यासार्थं प्रवर्त्तते । श्रवणादिपूर्वकं हि विद्याफलम् । श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिश्रुत्यन्तरेभ्यः । ब्रह्मविद्ब्रह्मेति वक्ष्यमाणलक्षणम् । बृहत्तमत्वाद्ब्रह्म तद्वेत्ति विजानातीति ब्रह्मविदाप्नोति परं निरतिशयं तदेव ब्रह्म परम् । न ह्यन्यस्य विज्ञानादन्यस्य प्राप्तिः । स्पष्टञ्च श्रुत्यन्तरं ब्रह्मप्राप्तिमेव ब्रह्मविदो दर्शयति स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवतीत्यादि ॥

ननु सर्वगतं सर्वस्यात्मभूतं ब्रह्म वक्ष्यति अतो नाप्यं प्राप्तिश्चान्यस्यान्येन परिच्छिन्नस्य च परिच्छिन्नेन दृष्टा । अपरिच्छिन्नं सर्व्वात्मकत्वञ्च ब्रह्मेत्यतः परिच्छिन्नवदना-

---

वेति संसारगोचरफलमित्यर्थः ॥ आद्यवाक्यस्यावान्तरतात्पर्यमाह । स्वय-मेव चेति ॥ विद्ययैव केवलया मोक्षः साधयितुं शक्यते । ब्रह्मविदिति विशेषणात्सम्बन्धज्ञानस्य पुरुषाकाङ्क्षाविषयतया परप्राप्तिः प्रयोजनं विद्याया इति । ज्ञानस्य वा क्वोपयोग इत्याशङ्क्य यज्ञादिपरित्यागेन वेदान्तश्रवणादावेव मुमुक्षुणा प्रवर्त्तितव्यमित्याह । निर्ज्ञातयोर्हीति ॥ परशब्देनोत्कृष्टमुच्यते । कथं ब्रह्मेति व्याख्यायते तत्राह । न हीति ॥

आप्नोतिशब्दस्यौपचारिकमर्थं दर्शयितुं शङ्कामुखेन मुख्यार्थे बाधक-माह । ननु सर्वगतमित्यादिना ॥ परमार्थतो ब्रह्मस्वरूपस्यापि सतो जीवस्याविद्यया ब्रह्मानाप्तं स्यादिति सम्बन्धः । भूतमात्राभिर्भूतार्थः

त्मवत्त्व तस्याप्तिरनुपपन्ना । नायं दोषः । कथं दर्शनादर्शनापेक्षत्वाद्ब्रह्मण आप्त्यनाप्त्योः परमार्थतो ब्रह्मरूपस्यापि सतोऽस्य जीवस्य भूतमात्राकृतबाह्यपरिच्छिन्नान्नमयाद्यात्मदर्शिनस्तदासक्तचेतसः प्रकृतसङ्ख्यापूरणस्यात्मनोऽव्यवहितस्यापि बाह्यसङ्ख्येयविषयासक्तचित्ततया स्वरूपाभावदर्शनवत्परमार्थब्रह्मस्वरूपाभावदर्शनलक्षणयाऽविद्यया अन्नमयादीन् बाह्याननात्मन आत्मत्वेन प्रतिपन्नत्वादन्नमयाद्यनात्मभ्यो नान्योऽहमस्मीत्यभिमन्यते । एवमविद्ययाऽऽत्मभूतमपि ब्रह्म नाप्तं स्यात् । तस्यैवमविद्ययाऽनाप्तब्रह्मस्वरूपस्य प्रकृतसङ्ख्यापूरणस्यात्मनोऽविद्ययाऽनाप्तस्य सतः केनचित्स्मारितस्य पुनस्तस्यैव विद्यया आप्तिर्यथा तथा श्रुत्युपदिष्टस्य सर्व्वात्मब्रह्मण आत्मत्वदर्शनेन विद्यया तदाप्तिरुपपद्यत एव । ब्रह्मविदाप्नोति

---

कृता ये बाह्याः परिच्छिन्नाश्चान्नमयादयस्तदात्मत्वदर्शिन इत्यविद्याया विक्षेपकत्वरूपमुक्तं परमार्थं ब्रह्मरूपं वास्तीत्यभावदर्शनमावरणलक्षणं लिङ्गं यस्याः सा तथोक्ता ॥ स्वरूपेऽप्यपह्नवविपर्य्ययौ भवत इत्यत्र दृष्टान्तमाह । प्रकृतेति ॥ प्रकृतसङ्ख्यापूरणस्य दशमस्य नवैव वयं वर्त्तामह इति विपर्य्ययस्वरूपदर्शनस्य यथेत्यर्थः । अदर्शननिमित्तामनाप्तिं विविच्य दर्शननिमित्तामाप्तिं विवृणोति । तस्यैवमिति ॥ आद्यं ब्राह्मणवाक्यं व्याख्यायोत्तरं मन्त्रं संक्षेपतोऽर्थकथनेनावतारयति । ब्रह्मविदाप्नोतीत्यादिना ॥ सर्वतो व्यावृत्तो यः स्वरूपविशेषस्तत्समर्पणे समर्थस्य लक्षणस्याभिधानेन स्वरूपनिर्द्धारणायैषा ऋगुदाहृियत इति सम्बन्धः । बृहत्त्वाद्ब्रह्मेति व्युत्पत्तिबलेनास्ति किमपि महद्वस्त्वित्यविशेषेण प्रतीयते । ततो लक्ष्योद्देशेन लक्षणविधानमिति प्रसिद्धिरुपपद्यते । अव्याकृतादि

## तदेषाभ्युक्ता ।

परमिति वाक्यं सूत्रभूतं सर्वस्य वल्ल्यर्थस्य ब्रह्मविदाप्नोति परमित्यनेन वाक्येन वेद्यतया सूत्रितस्य ब्रह्मणोऽनिर्धारितस्वरूपविशेषस्य सर्वतो व्यावृत्तस्वरूपविशेषसमर्पणसमर्थस्य लक्षणस्याभिधानेन स्वरूपनिर्धारणाय अविशेषेण चोक्तवेदनस्य ब्रह्मणो वक्ष्यमाणलक्षणस्य विशेषेण प्रत्यगात्मतया अनन्यरूपेण विज्ञेयत्वाय ब्रह्मविद्याफलस्य ब्रह्मविदो यत्परब्रह्मप्राप्तिलक्षणमुक्तम् ॥

स सर्वात्मभावः सर्वसंसारधर्म्मातीतब्रह्मस्वरूपत्वमेव नान्यदित्येतत् प्रदर्शनायैषा ऋगुदाह्रियते तदेषाभ्युक्तेति । तत्तस्मिन्नेव ब्राह्मणवाक्योक्तेऽर्थे एषा ऋगभ्युक्ताऽऽम्नाता सत्यं ज्ञानमनन्तं ब्रह्मेति। ब्रह्मणो लक्षणार्थं वाक्यम् । सत्यादीनि हि त्रीणि विशेषणार्थानि पदानि विशेष्यस्य ब्रह्मणोविशेष्यं

---

ब्रह्मशब्दवाच्यतया सजातीयं घटादि विजातीयम् । तस्मात्सजातीयविजातीयव्यावर्त्तकतया सत्यादिलक्षणस्य लक्षणत्वप्रसिद्धिरुपपद्यते । लक्षणाभिधानद्वारेण स्वरूपविशेषप्रतिपादने तात्पर्य्यमिति वाक्यस्य व्यर्थतादोषः परिहृतः । पूर्वत्र ब्रह्मविदित्यनेनाविशेषेणोक्तं वेदनं यस्य ब्रह्मणस्तस्य यो वेद निहितं गुहायामित्यनेन प्रत्यगात्मतया वेदनं वक्तव्यमित्येवमर्थात् ऋगुदाह्रियत इत्याह । अविशेषेण चेति ॥

आपातप्रतिपन्नविशेषणविशेष्यभावमादाय पदानि विभजते । सत्यादीनि हि त्रीणीति । विशेषणार्थानीति व्यावृत्त्यर्थानि । कुतो विशेषणविशेष्यभावप्रतीतिरित्यत आह । विशेषणविशेष्यत्वादेवेति ॥ नीलं

ब्रह्मविवक्षितत्वाद्विशेष्यतया वेद्यत्वेन यतो ब्रह्म प्राधान्येन विवक्षितं तस्माद्विशेष्यं विज्ञेयम्। यतोऽन्यस्माद्विशेषणविशेष्यत्वादेव सत्यादीन्येकविभक्त्यन्तानि पदानि समानाधिकरणानि सत्यादिभिस्त्रिभिर्विशेषणैर्विशेष्यमाणं ब्रह्म विशेष्यान्तरेभ्यो निर्धार्यते। एवं हि तज्ज्ञातं भवति यदन्येभ्यो निर्धारितम्। यथा लोके नीलं महत्सुगन्ध्युत्पलमिति। ननु विशेष्यं विशेषणान्तरं व्यभिचरद्विशेष्यते। यथा नीलं रक्तञ्चोत्पलमिति। यदा ह्यनेकानि द्रव्याण्येकजातीयान्यनेकविशेषणयोगीनि तदा विशेषणस्यार्थवत्त्वम्। न ह्येकस्मिन्नेव वस्तुनि विशेषणान्तरायोगाद्यथाऽसावेक आदित्य इति तथैकमेव च ब्रह्म न ब्रह्मान्तराणि येभ्यो विशेष्यते नीलोत्पलवत्। न लक्षणार्थत्वाद्विशेषणानाम्। नायं दोषः। कस्मात् लक्षणार्थप्रधानानि विशेषणानि न विशेषणप्रधानान्येव कः पुनर्लक्षणलक्ष्ययोर्विशेषणविशेष्य-

---

महत्सुगन्ध्युत्पलमित्यादौ सत्येव विशेषणविशेष्यभावे समानाधिकरणतयैकविभक्त्यन्तानि प्रसिद्धान्येतान्यपि च तथाभूतानि नानार्थगतविशेषणविशेष्यभावनिबन्धनानीति गम्यत इत्यर्थः॥ विशेषणविशेष्यभावस्य फलमाह। एवंहीति॥ विशेषणविशेष्यभावमाक्षिपति। नन्विति॥ नीलत्वं व्यभिचरदुत्पलं रक्तमपि सम्भवतीति नीलं विशेषणं घटते न तथा सत्यत्वादिकं व्यभिचरद्ब्रह्मान्तरं लोकप्रसिद्धम्। ततः सजातीयव्यवच्छेद्यस्याभावाद्विशेषणविशेष्यभावो न घटत इत्यर्थः। विशेषणविशेष्यभावस्य तात्पर्य्येण प्रतिपाद्यत्वाद्व्याकृतादिशास्त्रीयब्रह्मपदार्थव्यवच्छेदेनानिर्वाच्य विशेषणविशेष्यभावसम्भवात्तद्द्वारेण ब्रह्मलक्षणं विवक्षितमित्याह। नेति॥ संपद्वाक्यं विवृणोति। नायं दोष इत्यादिना॥

## सत्यं ज्ञानमनन्तं ब्रह्म ॥

योर्वा विशेष इत्युच्यते समानजातीयेभ्य एव निवर्त्तकानि विशेषणानि विशेष्यस्य लक्षणं तु सर्वत एव यथावकाशदातृ आकाशमिति लक्षणार्थञ्च वाक्यमित्यवोचाम ॥

सत्यादिशब्दा न परस्परं सम्बध्यन्ते परार्थत्वाद्विशेष्यार्था हि ते अत एकैको विशेषणशब्दः परस्परं निरपेक्षो ब्रह्मशब्देन सम्बध्यते । सत्यं ब्रह्म ज्ञानं ब्रह्म अनन्तं ब्रह्मेति सत्यमिति यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यं यद्रूपेण निश्चितं यत्तद्रूपं व्यभिचरदनृतमित्युच्यते । अतो विकारोऽनृतं वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । एवं सदेव सत्यमित्यवधारणादतः सत्यं

---

सर्वत एवेति ॥ सजातीयाद्विजातीयाच्च यथा महाभूतत्वेन सदृशः पृथिव्यादेर्विसदृशाच्चात्मादेराकाशस्य व्यावर्त्तकमवकाशदातृत्वमित्यर्थः ॥

एतदुक्तं भवति अतिव्याप्त्यादिरहितो व्यावर्त्तको धर्मो लक्षणं न्यायविशेषमीमांसकाः ब्रह्मपदव्युत्पत्तिबलेन पदविशेषतः प्रतिपन्नं किञ्चिन्महदस्तीति तत्सत्यं ज्ञानमनन्तमन्तजडपरिच्छेदविरोधिस्वरूपमिति विशेषतः प्रतिपत्तव्यमिति विशेषावगतिविशेषभूतं लक्षणम् । प्रमितिस्तु प्रमाणादेवेति तार्किकाः । पुनर्लक्षणं केवलव्यतिरेकानुमानमापद्यते तदा लक्षणादेव स्वभावविशेषप्रमितिः । यथा गुणवद्द्रव्यमिति लक्षणाद्गुणाश्रयत्वयोग्यस्वभावविशेषस्य प्रमितिः सामान्यप्रतिपन्नस्य द्रव्यपदाभिधेयस्य भवति । यद्वा व्यवहारसिद्धिः फलं गुणवद्द्रव्यमिति व्यवहर्त्तव्यं गुणवत्त्वान्न यदेवं न तदेवं यथा रूपं तथा सत्यत्वादिमत् ब्रह्मेति व्यवहर्त्तव्यम् । सत्यत्वादिमत्त्वान्न यदेवं न तदेवं यथा घटादय इति

ब्रह्मेति ब्रह्मविकारान्निवर्त्तयति। अतः कारणत्वं प्राप्तं ब्रह्मणः। कारणस्य च कारकत्वं वस्तुत्वात् मृद्वदचिद्रूपता च प्राप्ताऽत इदमुच्यते ज्ञानं ब्रह्मेति। ज्ञानं ज्ञप्तिरवबोधो भावसाधनो ज्ञानशब्दो ब्रह्मविशेषणत्वात्सत्यानन्ताभ्यां सह। न हि सत्यताऽनन्तता च ज्ञानकर्त्तृत्वे सत्युपपद्येते। ज्ञानकर्त्तृत्वेन हि विक्रियमाणं कथं सत्यं भवेदनन्तञ्च। यद्धि न कुतश्चित्प्रविभज्यते तदनन्तं। ज्ञानकर्त्तृत्वे च ज्ञेयज्ञानाभ्यां प्रविभक्तमित्यनन्तता न स्यात्। यत्र नान्यद्विजानाति स भूमा अथ यत्रान्यद्विजानाति तदल्पमिति श्रुत्यन्तरात्। नान्यद्विजानातीति विशेषप्रतिषेधादात्मानं विजानातीति चेन्न। भूमलक्षणविधिपरत्वाद्वाक्यस्य। यत्र नान्यत्पश्यतीत्यादि भूम्नो लक्षणविधिपरं वाक्यम्। यथाप्रसिद्धमेवान्यत्पश्यतीत्येतदुपादाय यत्र तन्नास्ति स भूमेति

---

एतच्च वस्तु न युक्त्याऽसहमानमपि व्यवहाराङ्गं भवतीति नातीव सूक्ष्म-ग्रहा कार्या पुनर्विशेषणविशेष्यभावं पक्षद्वयमवलम्ब्याह। सत्यादिशब्दा इति। सत्यं ब्रह्मेत्युक्ते जाड्यव्यावृत्तिः परिच्छेदव्यावृत्तिश्च यद्यपि लभ्यते जडस्य परिच्छिन्नस्य सर्वस्यानृतत्वात् ज्ञानं ब्रह्मेत्युक्तेऽनृतपरि-च्छेदव्यावृत्तिर्लभ्यते स्वप्रकाशस्य बोधाविषयत्वात्परिच्छेदग्राहकस्य प्र-माणाविषयत्वाच्च लक्षणमपि चानेकं वैकल्पिकमदुष्टम्। तथापि मन्द-मतिव्युत्पादनाय यथायथं सत्यादिपदार्थव्याख्यानपूर्वकं प्रत्येकं व्यावर्त्य-माह। सत्यमिति। यद्रूपेणेत्यादिना भावसाधन इति भावव्युत्प-त्तिकः। क्रियासामान्यं यद्यप्यन्यत्र भाव उच्यते तथाप्यत्र निर्विशेषं चिन्मात्रं भावव्युत्पत्त्या लभ्यते सत्यादिशब्दसन्निधानादिति द्रष्टव्यम्। विशेषनिषेधः शेषाभ्यनुज्ञाविषय इति न्यायेन प्राशङ्कितं स्वज्ञातृत्वे

भूमस्वरूपं तत्र ज्ञाप्यते अन्यग्रहणस्य प्राप्तिप्रतिषेधार्थत्वान्न स्वात्मनि क्रियास्तित्वपरं वाक्यम्। स्वात्मनि च भेदाभावाद्विज्ञानानुपपत्तिः। आत्मनश्च विज्ञेयत्वे ज्ञात्रभावप्रसङ्गः। ज्ञेयत्वेनैव विनियुक्तत्वात्॥

एक एवात्मा ज्ञेयत्वेन चोभयथा भवतीति चेन्न। युगपदनंशत्वात्। न हि निरवयवस्य युगपज्ज्ञातृत्वोपपत्तिः। आत्मनश्च घटादिवद्विज्ञेयत्वे ज्ञानोपदेशानर्थक्यम्। न हि घटादिवत्प्रसिद्धस्य ज्ञानोपदेशोऽर्थवान्। तस्माज्ज्ञातृत्वे सत्यानन्त्यानुपपत्तिः। सन्मात्रत्वञ्चानुपपन्नं ज्ञानकर्तृत्वादिविशेषवत्त्वे सति सन्मात्रत्वञ्च सत्यम्। तत्सत्यमिति श्रुत्यन्तरात्॥ तस्मात्सत्यानन्तशब्दाभ्यां सह विशेषणत्वेन ज्ञानशब्दस्य प्रयोगाद्भावसाधनो ज्ञानशब्दः। ज्ञानं ब्रह्मेति कर्तृत्वादिकारकनिवृत्त्यर्थं मृदादिवदचिद्रूपतानिवृत्त्यर्थञ्च

---

तात्पर्यमाशङ्क्य निषेधति। नान्यद्विजानातीत्यादिना॥ कर्तृत्वं कर्मत्वं चैकक्रियावच्छिन्नधर्मद्वयं भिन्नाधिकरणं प्रसिद्धम्। स्वात्मनि च भेदाभावान्निरुपपत्तिके स्वज्ञातृत्वे तात्पर्यं कल्पयितुं न शक्यत इत्याह। स्वात्मनि चेति॥

सत्यादीनि व्यावृत्त्यर्थानीत्युक्तं तत्र शङ्कते। सत्यादीनामिति॥ प्रमाणान्तरसिद्धनीलत्वादिविशेष्यं दृष्टं ब्रह्म तु प्रमाणान्तरसिद्धम्। पदमात्रस्याप्रमाणत्वात्सत्यादीनां च व्यावृत्त्यर्थत्वादसमर्थं वाक्यं स्यादित्यर्थः। सिद्धत्वमात्रेण विशेष्यत्वे सम्भवति प्रमाणान्तरविशेषणमनर्थकं केवलव्यतिरेकाभावान्मिथ्या[illegible]स्य रज्जुसर्पादेः सदधिष्ठानत्वदर्शनात्प्रपञ्चस्यापि दृश्यत्वादिहेतुभिर्मिथ्यात्वेनावगतस्य सदधिष्ठानत्वं सम्भाव्यते तस्य प्रपञ्चाधिष्ठानतया सम्भावितस्य स्वरूपविशेषलक्षणार्थमिदं वाक्यं ततो नासदर्थत्वमित्याह। न लक्षणार्थत्वादिति॥ विशेषणार्थत्वमभ्युपगम्याह।

प्रयुज्यत। ज्ञानं ब्रह्मेति वचनात्प्राप्तमन्तवत्त्वम्। लौकिकस्य ज्ञानस्यान्तवत्त्वदर्शनात्। अतस्तन्निवृत्त्यर्थमाह। अनन्तमिति॥ सत्यादीनामनृतादिधर्मनिवृत्तिपरत्वाद्विशेष्यस्य ब्रह्मण उत्पलादिवदप्रसिद्धत्वात्। मृगतृष्णाम्भसि स्नातः। खपुष्पकृतशेखरः। एष वन्ध्यासुतो याति शशशृङ्गधनुर्धर इति वच्छून्यार्थतैव प्राप्ता सत्यादिवाक्यस्येति चेन्न। लक्षणार्थत्वात्। विशेषणत्वेऽपि सत्यादीनां लक्षणार्थप्राधान्यमित्यवोचाम। शून्ये हि लक्ष्येऽनर्थकं लक्षणवचनं लक्षणार्थत्वान्मन्यामहे न शून्यार्थतेति। विशेषणार्थत्वेऽपि च सत्यादीनां स्वार्थापरित्याग एव। शून्यार्थत्वे हि सत्यादिशब्दानां विशेष्यनियन्तृत्वानुपपत्तिः। सत्याद्यर्थैरर्थवत्त्वे तु तद्विपरीतधर्मवद्भ्यो विशेष्येभ्यो ब्रह्मणो विशेष्यस्य नियन्तृत्वमुपपद्यते ब्रह्मशब्दोऽपि स्वार्थेनार्थवानेव। तत्रा-

---

विशेषणार्थत्वेऽपि चेति॥ नीलं महत्सुगन्धमिति विशेषणपदानि स्वार्थसमर्पणेन तद्विरुद्धव्यावर्त्तकानि प्रसिद्धानि। तथा सत्यशब्दोऽप्यबाधितसत्त्वे व्युत्पन्नो ज्ञानशब्दः स्वप्रकाशे विषयसंवेदनेऽनन्तोपमाकाश इत्यादावनन्तशब्दो व्यापके। ततः स्वार्थसमर्पणेन विरोधिव्यावर्त्तकत्वाच्च व्यावृत्तिमात्रपर्य्यवसानमित्यर्थः। किञ्च विशेषणस्य व्यावर्त्तकत्वं प्रति व्यावर्त्त्यै घटतेऽतोविशेषणत्वानुपपत्त्यैव सदर्थत्वं वाच्यमित्याह। शून्यार्थत्वे हीति॥ यच्चोक्तं ब्रह्मशब्दोऽप्रसिद्धार्थ इति तत्राह। ब्रह्मशब्दोऽपीति॥ बृह बृहि वृद्धाविति धातोर्ब्रह्मेतिशब्दो निष्पन्नो वृद्धौ महत्त्वे च वर्त्तते। तच्च महत्त्वं देशतः कालतो वस्तुतश्चानवच्छिन्नत्वं सङ्कोचे मानान्तराभावात् निरतिशयमहत्त्वे सम्पन्ने धर्म्मिणि पर्य्यवस्यति। ततो

नन्तशब्दोऽन्तवत्त्वप्रतिषेधद्वारेण विशेषणम्। सत्यज्ञान-
शब्दौ तु स्वार्थसमर्पणेनैव विशेषणे भवतः॥

तस्माद्वा एतस्मादात्मन इति ब्रह्मण्येवात्मशब्दप्रयोगाद्-
वेदितुरात्मैव ब्रह्म। एतमानन्दमयमात्मानमुपसङ्क्राम-
तीति च तत्प्रवेशाच्च। तत्सृष्ट्वा तदेवानुप्राविशदिति च।
तस्यैव जीवरूपेण शरीरप्रवेशं दर्शयति। अतो वेदितुः
स्वरूपं ब्रह्म। एवं तर्ह्यात्मत्वाज्ज्ञानकर्तृत्वमात्मा ज्ञातेति
हि प्रसिद्धम्। सोऽकामयत इति च कामिनो ज्ञानकर्तृत्वं
प्रसिद्धम्। अतो ज्ञानकर्तृत्वाज्ज्ञप्तिर्ब्रह्मेत्ययुक्तमनित्यत्व-
प्रसङ्गाच्च। यदि नाम ज्ञप्तिर्ज्ञानमिति भावरूपता ब्रह्मण-
स्तथाप्यनित्यत्वं प्रसज्यते पारतन्त्र्यञ्च। धात्वर्थानां कारका-
पेक्षत्वात्। ज्ञानञ्च धात्वर्थोऽतोऽस्यानित्यत्वं परतन्त्रता च।
न स्वरूपव्यतिरेकेण कार्य्यत्वोपचारात्। आत्मनः स्वरूपं
ज्ञप्तिर्न ततो व्यतिरिच्यतेऽतो नित्यैव तथापि बुद्धेरु-
पाधिलक्षणायाश्चक्षुरादिद्वारैर्विषयाकारपरिणामिन्या ये

---

वन्ध्यासुतादिशब्दविलक्षणो ब्रह्मशब्द इत्यर्थः॥ सत्यादिषु त्रिषु विशे-
षणेष्ववान्तरभेदमाह। तत्रानन्तेति॥

अनन्तमित्यनेन चात्मैक्यं ब्रह्मण उक्तमभिप्रेत्यैक्ये शास्त्रतात्पर्यं
दर्शयति। तस्माद्वा इत्यादिना॥ ब्रह्मण आत्मैक्यं चेद्विवक्षितं तर्हि
ज्ञानशब्दस्य भावसाधनत्वव्याख्या हीयेतेत्याह। एवं तर्हीति॥ इतश्च
भावव्युत्पत्तिरयुक्तेत्याह। अनित्यत्वप्रसङ्गाच्चेति। वृत्तिमदन्तःकर-
णोपहितत्वेनात्मनो ज्ञातृत्वं न स्वतः कार्य्यत्वञ्च ज्ञानस्यान्तःकरणवृत्त्यु-
पहितत्वेन तत आत्माभिन्नत्वेऽपि ब्रह्मणो न ज्ञानकर्तृत्वं नापि कार्य्यत्वं
प्रसज्यत इत्याह। न स्वरूपेति॥ नित्यञ्चेज्ज्ञानं तर्हि तत्र ब्रह्मणः
कर्तृत्वाभावे कथं सर्वज्ञत्वमित्यत आह। सर्वभावानाञ्चेति॥ संविद्व्यव-

शब्दाद्याकारावभासास्त आत्मविज्ञानस्य विषयभूता उत्प-द्यमाना एवात्मविज्ञानेन व्याप्ता उपपद्यन्ते। तस्मादात्म-विज्ञानावभास्याश्च ते विज्ञानशब्दवाच्याश्च धात्वर्थभूता आत्मन एव धर्म्मा विक्रियारूपा इत्यविवेकिभिः परिक-ल्प्यन्ते। यत्तु तद्ब्रह्मणो विज्ञानं तत्सवितृप्रकाशवदग्न्युष्ण-वच्च ब्रह्मस्वरूपाव्यतिरिक्तं स्वरूपमेव तन्न तत्कारणा-न्तरसव्यपेक्षं नित्यस्वरूपत्वात्। सर्वभावानां च तेनावि-भक्तदेशकालाकाशादिकारणत्वाच्च निरतिशयसूक्ष्मत्वाच्च न तस्यान्यदविज्ञेयं सूक्ष्मं व्यवहितं विप्रकृष्टं भूतम्भवद्भ-विष्यद्वास्ति तस्मात्सर्वज्ञं तद्ब्रह्म। मन्त्रवर्णाच्च। अपाणि-पादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महा-न्तमिति। न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽ-विनाशित्वान्न तु तद्द्वितीयोऽस्तीत्यादिश्रुतेश्च। विज्ञातृ-स्वरूपाव्यतिरेकात्करणादिनिमित्तानपेक्षितत्वाच्च ब्रह्मणो

---

धामेनैव वह्निर्विषयस्य सिद्धिः सर्व्वस्य संवित्स्वभावेन ब्रह्मणा व्यवहृत-मिति। सर्व्वज्ञं ब्रह्मोपचर्य्यत इत्यर्थः। नित्यं ज्ञानं ब्रह्मणि विद्यत इत्यत्र मन्त्रसम्मतिमाह। मन्त्रवर्णाच्चेति॥ ब्रह्म नित्यं ज्ञानत्वाल्लौ-किकज्ञानवदित्यादि चोद्यमुक्तन्यायेन निरस्तमित्याह। विज्ञातृस्वरू-पेति॥ लौकिकज्ञानस्य करणादिसापेक्षत्वादनित्यत्वम्। आत्मस्वरूपन्तु ज्ञानं न करणादिसापेक्षं सकलकरणव्यापारोपरमेऽपि सुषुप्तभावाद-न्यथा सुषुप्तिसिद्ध्यनुपपत्तेः परामर्शासम्भवप्रसङ्गादतः श्रुतितात्पर्य्यगम्ये-ऽर्थे न सामान्यतो दृष्टस्य प्रवेश इति भावः। आत्मस्वरूपभूतं ज्ञानं

## यो वेद निहितं गुहायां परमे व्योमन् ।

ज्ञानस्वरूपत्वेऽपि नित्यत्वप्रसिद्धिरतो नैव धात्वर्थस्तदक्रियरूपत्वात् ॥

अत एव च ज्ञानकर्तृ तस्मादेव च न ज्ञानशब्दवाच्यमपि तद्ब्रह्म तथापि तदाभासवाचकेन बुद्धिधर्म्मविशेषेण ज्ञानशब्देन तल्लक्ष्यते नतूच्यते शब्दप्रवृत्तिहेतुजात्यादिधर्मरहितत्वात्तथा सत्यशब्देनापि सर्वविशेषप्रत्यस्तमितस्वरूपत्वाद्ब्रह्मणो बाह्यसत्तासामान्यविषयेण सत्यशब्देन लक्ष्यते सत्यं ब्रह्मेति नतु सत्यशब्दवाच्यं ब्रह्म । एवं सत्यादिशब्दा इतरेतरसन्निधावन्योन्यनियम्यनियामकाः सन्तः सत्यादिशब्दवाच्यत्वान्निवर्त्तका ब्रह्मणो लक्षणार्थाश्च

---

कारकसाध्यं धात्वर्थत्वादिति चासिद्धमित्याह । अत इति ॥ नित्यात्मस्वरूपत्वादेवेत्यर्थः ॥

अतएव चेति नित्यत्वादेव ज्ञानस्य न तत्कर्तृत्वमपि ब्रह्मण आपादयितुं शक्यते लौकिकानित्यज्ञानविलक्षणादेव ज्ञानशब्दवाच्यमपि ब्रह्म न भवतीत्याह । तस्मादेव चेति ॥ कथं तर्हि ज्ञानं ब्रह्मेति प्रयोगस्तत्राह । तथापीति ॥ शब्दस्य प्रवृत्तिहेतवो जात्यादिधर्म्मा गौः शुक्ल इत्यादौ तदभावाच्छब्दान्तरेणापि वाच्यं न भवतीत्याह । तथेति ॥ तथा सत्यशब्देनापि न वाच्यं ब्रह्मेति शेषः ॥ एतत्स्फोरयति । सर्वविशेषेति ॥ सत्ता यस्यास्ति तत्सत्यमिति लोकरूढिः । सत्ता चानुगतरूपं सामान्यं व्यावृत्तः सत्ताविशेषः । स चायमनुवृत्तव्यावृत्तभावेनावस्तुपरस्परापेक्षसिद्धत्वादतो यस्मिन्नप्रव्यावृत्तानुवृत्तभावस्तदव्यावृत्तानुगतं ब्रह्म लक्ष्यत इत्यर्थः । एवमेकैकस्य शब्दस्यार्थमुक्त्वा वाक्यार्थमाह । एवं सत्यादिति ॥ यद्यपि सत्यादिशब्दानां ब्रह्मणा सम्बन्धोऽन्वयस्तथाप्यारण्यैकच्छायन्यादिवत्पार्ष्ठिकान्वयेनेतरेतरसन्निधावन्योन्यव्यावृत्तिनियामका भ-

# सोऽश्नुते सर्व्वान् कामान् सह। ब्रह्मणा विपश्चितेति

भवन्ति इत्यतः सिद्धम्। यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सहाऽनिरुक्तेऽनिलयनेति चावाच्यत्वं नीलोत्पलवदवाक्यार्थत्वं च ब्रह्मणस्तद्यथा व्याख्यातं ब्रह्म यो वेद विजानाति निहितं स्थितं गुहायाम्। गुहतेःसंवरणार्थस्य निगूढा अस्यां ज्ञानज्ञेयज्ञातृपदार्था इति गुहा बुद्धिर्गूढावस्यां भोगापवर्गौ पुरुषार्थाविति वा तस्यां परमे प्रकृष्टे व्योमन् व्योम्न्याकाशेऽव्याकृताख्ये॥

तद्धि परमं व्योम एतस्मिन् खल्वक्षरे गार्ग्याकाश इत्यक्षरसन्निकर्षाद्गुहायां व्योम्नीति वा सामानाधिकरण्यादव्याकृताकाशमेव गुहा तत्रापि निगूढाः सर्व्वे पदार्थास्त्रिषु कालेषु कारणत्वात् सूक्ष्मत्वाच्च तस्मिन्नन्तर्हितं ब्रह्म

---

वन्ति ज्ञानेन विशेषणात्सत्यशब्दो न जडे कारणे वर्त्तते सत्येन विशेषणाज्ज्ञानशब्दो न विषयसापेक्षे ज्ञाने वर्त्तते। ज्ञानेन विशेषणादानन्तशब्दो ज्ञातृव्यतिरिक्ते वर्त्तते। ततश्च सत्यादिशब्देन लौकिकं वाच्यं तद्भिन्नत्वेन भवितव्यमिति सम्भावयन्तः सकललौकिकाध्यासाधिष्ठानं ब्रह्मत्वेन लक्षयन्तीत्यर्थः। ततः किं फलतीत्यत आह। अतः सिद्धमिति॥ वाचकशक्त्या बोधकत्वानङ्गीकारादवाच्यत्वं प्रकृतानिष्टव्यवच्छेदेनैकस्यैव लक्ष्यत्वाभ्युपगमाच्च गुणगुण्यादिसम्भेदरूपवाक्यार्थवैलक्षण्यं च ब्रह्मणः सिद्धमित्यर्थः॥

बुद्धौ कार्य्ये यदनुगतं परमं व्योमाव्याकृताख्यं तस्मिन्निहितमिति सप्तमीद्वयं वैयधिकरण्येन व्याख्यातम्॥ व्योमशब्दस्य भूताकाशे रूढिं परित्यज्य किमित्यव्याकृतविषयत्वं व्याख्यातं तत्राह। तद्धीति॥ भूताकाशस्य कार्य्यत्वेनापरत्वादव्याकृताकाशस्य कारणत्वेन परमत्वविशेषण-

हार्द्दमेव तु परमं व्योमेति न्याय्यं विज्ञानाङ्गत्वेन व्योम्नो विवक्षितत्वात् । यो वै स बहिर्द्धा पुरुषाकाशो यो वै सोऽन्तःपुरुषाकाशःसोऽयमन्तर्हृदयाकाश इति श्रुत्यन्तराच्च सिद्धं हार्द्दस्य व्योम्नः परमं तत्त्वं तस्मिन्हार्द्दे व्योम्नि या बुद्धिर्गुहा तस्यां निहितं ब्रह्म तद्वृत्त्या विविक्ततयोपलभ्यत इति । न ह्यन्यथा विशिष्टदेशकालसम्बन्धोऽस्ति ब्रह्मणः सर्वगतत्वान्निर्विशेषत्वाच्च । स एवं ब्रह्म विजानन् किमित्याह । अश्नुते भुङ्क्ते सर्व्वान्निर्विशेषान् कामान् भोगानित्यर्थः । किमस्मदादिवत्पुत्रस्वर्गादीन्पर्य्यायेणेत्याह। स ह युगपदेकक्षणोपारूढानेवैकयोपलब्ध्या सवितृप्रकाशवन्नित्यया ब्रह्मस्वरूपया व्यतिरिक्तया यामवोचाम सत्यं ज्ञानमिति। एतत्तदुच्यते । ब्रह्मणा सहेति ॥ ब्रह्मभूतो विद्वान् ब्रह्मस्वरूपेणैव सर्व्वान् कामान् सहाश्नुते न यथोपाधिकृतेन स्वरूपेणात्मना जलसूर्य्यकाशादिवत्प्रतिबिम्बभूतेन संसारिकेण धर्म्मादिनिमित्तापेक्षांश्चक्षुरादिकरणापेक्षांश्च कामान्

---

सम्भवाच्छाखान्तरशतपथे चाक्षरेण ब्रह्मणा सामीप्यावगमादव्याकृतं व्योमशब्देन लक्ष्यत इत्यर्थः । एवं पराभिप्रायेण व्याख्याय स्वाभिप्रायं व्याचष्टे । हार्द्दमेवत्विति ॥ हृदयावच्छिन्ने भूताकाशे या गुहा तस्यां बुद्धौ साक्षितया निहितमभिव्यक्तं ब्रह्मेति व्याख्यानं युक्तम् । द्रष्टृभेदेन ब्रह्मण आपरोक्ष्यलाभादन्यथासमष्टिरूपेऽव्याकृते मायातत्त्वेऽवस्थितं ब्रह्मेत्युक्ते ब्रह्मणः परोक्ष्यं प्रसज्येत परोक्षेण च ज्ञानं नापरोक्ष्यसंसाराध्यासनिवर्त्तकम् । तस्मादपरोक्षद्रष्टृचैतन्याभेदेन ब्रह्मणः स्वहृदये प्रत्यक्षतया विवक्षितत्वात् हृदयाकाशमेव विज्ञानशेषभूतं विवक्षितमित्यर्थः ॥ यदुक्तं भूताकाशस्य परमत्वानुपपत्तिरिति तत्राह । यो वै

पर्य्यायेणाश्नुते लोके। कथं तर्हि यथोक्तेन प्रकारेण सर्वज्ञेन सर्व्वात्मना नित्यब्रह्मात्मस्वरूपेण धर्म्मादिनिमित्तानपेक्षांश्चक्षुरादिनिरपेक्षांश्च सर्व्वान् कामान् सहैवाश्नुत इत्यर्थः। विपश्चिता मेधाविना सर्वज्ञेन। तद्धि वैपश्चित्यं यत्सर्व्वज्ञस्वरूपेण ब्रह्मणाऽश्नुत इति। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः। सर्व एव वल्ल्यर्थो ब्रह्मविदाप्नोति परमिति ब्राह्मणवाक्येन सूत्रितोऽर्थः संक्षेपतो मन्त्रेण व्याख्यातः पुनस्तस्यैव विस्तरेण निर्णयः कर्त्तव्य इत्युत्तरस्तद्वृत्तिस्थानीयो ग्रन्थ आरभ्यते तस्माद्वा एतस्मादित्यादिः॥ तत्र च सत्यं ज्ञानमनन्तं ब्रह्मेत्युक्तं मन्त्रादौ तत्कथं सत्यं ज्ञानमनन्तञ्चेत्यत आह। त्रिविधं हि आनन्त्यं देशतः कालतो वस्तुतश्चेति। तद्यथा देशतोऽनन्त आकाशो न हि देशतस्तस्य परिच्छेदोऽस्ति। न तु कालतश्चानन्त्यं वस्तुतश्चाकाशस्य। कस्मात्कार्य्यत्वात्। नैवं ब्रह्मण आकाशवत्कालतोऽप्यन्तवत्त्वमकार्य्यत्वात्। कार्य्यं हि वस्तु कालेन परिच्छिद्यते। अकार्य्यञ्च ब्रह्म। तस्मात्कालतोऽप्यनन्तम्। तथा

---

इति॥ ननु निश्चितशब्दः स्थितिं ब्रूते कथं विविक्ततया स्फुटतयोपलम्भाभिप्रायेण व्याख्यायते तत्राह। न हीति॥ अन्यथेत्युपलम्भव्यतिरेकेणाविद्यावस्थायां ये सुखविशेषा हिरण्यगर्भाद्युपाधिषु भेदेनात्मत्वेनाभिमतास्तेषां सर्व्वेषां ब्रह्मानन्दाव्यतिरेकाद्ब्रह्मीभूतो विद्वान् सर्व्वानेवानन्दानश्नुत इत्युपचारेण बहुवचनमित्यर्थः। वृत्तमनुवदन्नुत्तरग्रन्थावतारणाय सर्व एवेत्यादिना आकाशादिकारणत्वाभिधानेनानन्त्यप्रपञ्चः क्रियत इति समनन्तरग्रन्थतात्पर्य्यं दर्शयितुं पूर्वोक्तं स्वार्थविशेषमनुवदति। तत्र चेति॥ वस्तुत आनन्त्यं व्याख्यातुं वस्तुतोऽन्तवत्त्वं तावदाह। भिन्नं

वस्तुतः। कथं पुनर्वस्तुत आनन्त्यं सर्व्वानन्यत्वात्। भिन्नं हि वस्तु वस्त्वन्तरस्यान्तो भवति वस्त्वन्तरबुद्धिर्हि प्रसक्ता वस्त्वन्तरान्निवर्त्तते। यतो यतो यस्य बुद्धेर्निवृत्तिः स तस्यान्तः। तद्यथा गोत्वबुद्धिरश्वत्वान्निवर्त्तते इत्यश्वत्वान्तं गोत्वमित्यन्तवदेव भवति। स चान्तो भिन्नेषु वस्तुषु दृष्टो नैवं ब्रह्मणो भेदोऽतो वस्तुतोऽप्यानन्त्यं कथं पुनः सर्व्वानन्यत्वं ब्रह्मण इत्युच्यते सर्ववस्तुकारणत्वात्। सर्वेषां हि वस्तूनां कालाकाशादीनां कारणं ब्रह्म। कार्य्यापेक्षया वस्तुतोऽन्तवत्त्वमिति चेन्न। अनृतत्वात्कार्य्यवस्तुनः। न हि कारणव्यतिरेकेण कार्य्यं नाम वस्तुतोऽस्ति। यतः कारणबुद्धिर्निवर्त्तते। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमेवं सदेव सत्यमिति श्रुत्यन्तरात्। तस्मादाकाशादिकारणत्वाद्देशतस्तावदनन्तं ब्रह्म। आकाशो ह्यनन्त इति प्रसिद्धं देशतस्तस्येदं कारणं तस्मात्सिद्धं देशत आत्मन आनन्त्यम्। न हि सर्वगतात्सर्वगतमुत्पद्यमानं किञ्चिद्दृश्यतेऽतोनिरतिशयमात्मन आनन्त्यं देशतस्तथाऽकार्य्यत्वात्कालतस्तद्भिन्नवस्त्वन्तराभावाच्च वस्तुत अत एव निरतिशयसत्यत्वम् ॥

---

हीत्यादिना॥ विस्तरेणोक्तमानन्त्यं सङ्क्षिप्याह। तस्मात्सिद्धमिति॥ देशतोऽनवच्छिन्नस्याकाशस्य कारणत्वाद्व्यापकत्वान्निरतिशयमात्मनो देशत आनन्त्यमकार्य्यत्वाच्च कालत आनन्त्यं यद्यतोऽव्यावर्त्तेत तस्य पृथगसत्वात्कार्य्यस्योपादानादन्यत्र सत्त्वायोगाद्वस्तुतोऽप्यानन्त्यं सिद्धमित्यर्थः। अत इति निरतिशयानन्त्यादेव सत्यत्वमपि सिद्धमनृतस्य एव रज्जुसर्पादिवदसत्यत्वादित्यर्थः॥

**तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः।**

---

तस्मादिति मूलवाक्यसूत्रितं ब्रह्म परामृश्यते। एतस्मादिति। मन्त्रवाक्येन अनन्तरं यथा लक्षितं यद्ब्रह्मैव ब्राह्मणवाक्येन सूचितम्। यद्ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेत्यनन्तरमेव। लक्षितं तस्मादेतस्माद्ब्रह्मण आत्मन आत्मशब्दवाच्यत्वात् आत्मा हि तत्सर्वस्य तत्सत्यं स आत्मेतिश्रुत्यन्तरादतो ब्रह्मात्मा। तस्मादेतस्माद्ब्रह्मण आत्मस्वरूपादाकाशः सम्भूतः समुत्पन्नः। आकाशो नाम शब्दगुणोऽवकाशकरो मूर्त्तद्रव्याणां तस्मादाकाशात्स्वेन स्पर्शगुणेन पूर्व्वेण च कारणगुणेन शब्देन द्विगुणो वायुः सम्भूत इत्यनुवर्त्तते वायोश्च स्वेन रूपगुणेन पूर्व्वाभ्याञ्च त्रिगुणोऽग्निः सम्भूतः। अग्नेः स्वेन रसगुणेन पूर्व्वैश्च त्रिभिश्चतुर्गुणा आपः सम्भूताः। अद्भ्यः स्वेन गन्धगुणेन पूर्व्वैश्चतुर्भिः पञ्चगुणा पृथिवी सम्भूता। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नाद्रेतोरूपेण परिणतात्पुरुषः शिरःपाण्याद्याकृतिमान्। स वा एष पुरुषोऽन्नरसमयोऽन्नरस-

---

एवं सृष्टिवाक्यतात्पर्य्यमुक्त्वा पदानि विभजते। तस्मादित्यादिना॥ अन्त्यकार्य्यपर्य्यन्तं परमात्मनः सर्व्वस्योपादानत्वादाकाशभावापन्नात्परमात्मन एव वायुः सम्भूतोऽत एव तद्गुणस्योत्तरत्रानुवृत्तिर्गुणशब्दप्रयोगेऽपि भेदकल्पनया तत्त्वम्। तत्त्वाभिप्रायेण न वैशेषिकपक्षवत्तत्त्वभेदाभिप्रायेण तत्त्वतो भेदे प्रमाणाभावादिति द्रष्टव्यम्। पुरुषप्रकृपस्य तात्पर्य-

अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधी-भ्योऽन्नम्। अन्नाद्रेतः। रेतसः पुरुषः। स वा एष पुरुषोऽन्नरसमयः।

---

विकारः। पुरुषाकृतिभावितं हि सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतं रेतो बीजं तस्माद्यो जायते सोऽपि तथा पुरुषाकृतिरेव स्यात् सर्वजातिषु जायमानानां जनकाकृतिनियमदर्शनात् सर्वेषामप्यन्नरसविकारत्वे ब्रह्मवंश्यत्वे चाविशिष्टे कस्मात्-- पुरुष एव गृह्यते प्राधान्यात्। किं पुनः प्राधान्यं कर्म्म-ज्ञानाधिकारः पुरुषएव हि शक्तत्वादर्थित्वाच्च अर्थी विद्वान् समर्थः कर्मज्ञानयोरधिक्रियते। पुरुषत्वे वाऽवि-स्तरात्मा स हि विज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्त्ये-नामृतमीप्सतीत्येवं सम्पन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिज्ञानमित्यादिश्रुत्यन्तरदर्शनात्॥

---

माह। सर्वेषामपीति॥ प्राधान्यादिति विधिनिषेधविवेकसामर्थ्यापे-क्षत्वादित्युक्तं तत्रैतरेयकश्रुतिसम्मतिमाह। पुरुषे त्वेवेति॥ ब्राह्म-णत्वादिजातिमति मनुष्यादिदेहे आविस्तरामतिशयेन प्रकट आत्मा ज्ञानातिशयदर्शनादित्यर्थः। मर्त्त्येन ज्ञानकर्म्मादिसाधनेनाक्षयफलं प्राप्नु-मिच्छतीत्यर्थः। येन विवेकज्ञानेन पुरुषस्य प्राधान्यं विवक्षितं तत्पश्वा-दीनां नास्तीत्याह। अथेतरेषामिति॥

तस्येदमेव शिरः। अयं दक्षिणः पक्षः। अयमुत्तरः पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ इति प्रथमोऽनुवाकः॥ १॥

---

स हि पुरुष इह विद्ययान्तरतमं ब्रह्म सङ्क्रामयितुमिष्टस्तस्य च बाह्याकारविशेषेष्वनात्मस्वात्मभाविता बुद्धिरनालम्ब्य विशेषं कञ्चित्सहसान्तरतमप्रत्यगात्मविषया निरालम्बना च कर्त्तुमशक्येति दृष्टशरीरात्मसामान्यकल्पनया शाखाचन्द्रनिदर्शनवदन्तः प्रवेशयन्नाह। तस्येदमेव शिरः। तस्यास्य पुरुषस्यान्नरसमयस्येदमेव शिरः प्रसिद्धम्। प्राणमयादिष्वशिरस्कां शिरस्त्वदर्शनादिहापि तत्प्रसङ्गो मा भूदितीदमेव शिर इत्युच्यते। एवं पक्षादिषु योजना। अयं दक्षिणो बाहुः पूर्वाभिमुखस्य दक्षिणः पक्षोऽयं सव्यो बाहुरुत्तरः पक्षोऽयं मध्यमो देहभाग आत्माऽङ्गानाम्। मध्यं ह्येषामङ्गानामात्मेतिश्रुतेः। इदमिति नाभेरधस्ताद्यदङ्गं तत्पुच्छं प्रतिष्ठा। प्रतितिष्ठत्यनयेति प्रतिष्ठा पुच्छमिव पुच्छमधोऽवलम्बनसामान्याद्यथा गोः पुच्छम्। एतत्प्रकृत्योत्तरेषां प्राणमयादीनां रूपकत्वसिद्धिः। मूषानिषिक्तद्रुतताम्रप्रतिमावत्। तदप्येष श्लोको भवति। तत्तस्मि-

---

कोशपञ्चकोपन्यासस्य तात्पर्यमाह। स हीत्यादिना॥ पक्षपुच्छशब्दप्रयोगात्सुपर्णाकारकृतिं दर्शयति। उत्तरत्व दलत्सगया बाह्यवि-

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीᳯ श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नᳯ हि भूतानां ज्येष्ठम् । तस्मात्सर्व्वौषधमुच्यते ।

---

तदेवार्थे ब्राह्मणोक्तेऽन्नमयात्मप्रकाशकः एष श्लोको मन्त्रो भवति ॥ इति प्रथमोऽनुवाकः ॥ १ ॥

अन्नाद्रसादिभावपरिणतात् । वै इति स्मरणार्थः । प्रजाः स्थावरजङ्गमात्मकाः प्रजायन्ते । याः काश्चाविशिष्टाः पृथिवीं श्रिताः पृथिवीमाश्रितास्ताः सर्व्वा अन्नादेव प्रजायन्ते । अथोऽपि जाता अन्नेनैव जीवन्ति प्राणान्धारयन्ति वर्द्धन्त इत्यर्थः । अथाप्येनदन्नमपि यन्त्यपिगच्छन्ति । अपिशब्दः प्रतिशब्दार्थेऽन्नं प्रति प्रलीयन्त इत्यर्थः । अन्ततोऽन्ते जीवनलक्षणाया वृत्तेः परिसमाप्तौ । कस्मादन्नम् । हि यस्माद्भूतानां प्राणिनां ज्येष्ठं प्रथमजम् । अन्नमयादीनां हीतरेषां भूतानां कारणमन्नमतोऽन्नप्रभवा अन्नजीवना अन्नप्रलयाश्च सर्व्वाः प्रजाः । यस्माच्चैवं तस्मात्सर्व्वौषधं सर्व्वप्राणिनां देहदाहप्रशममन्नमुच्यते ॥

---

यथासङ्कल्पोपोद्धरेतुबुद्धेरात्मनि स्थिरीकरणार्थं नोपासनविधानमिह विवक्षितम् ॥ इति प्रथमोऽनुवाकः ॥ १ ॥

उपक्रमोपसंहारयोर्ब्रह्मात्मैकत्वप्रतिपादनेनैवोपक्षयात् मध्ये पञ्चस्योपासनविधौ तात्पर्य्ये च वाक्यभेदप्रसङ्गादत एवाङ्गे स्तुतिपरार्थत्वादिति न्यायेन यथा प्रयाजादिफलश्रवणमर्थवादस्तथान्नमयादिप्रतिपत्तेरपि फलश्रवणमर्थवाद एव तत्तद्बुद्धिस्थिरीकारस्य पूर्वपूर्वबुद्धिविलापनेनात्मनः प्रतिपत्तिशेषत्वादिति द्रष्टव्यम् ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥

सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते ।
अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते ।
अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्द्धन्ते ।
अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति ।

---

अन्नब्रह्मविदः फलमुच्यते । सर्वं वै ते समस्तमन्नजातमाप्नुवन्ति । के । येऽन्नं ब्रह्म यथोक्तमुपासते । कथमन्नजोऽन्नात्माऽन्नप्रलयोऽहं तस्मादन्नं ब्रह्मेति । कुतः पुनः सर्वान्नाप्तिफलमन्नात्मोपासनमित्युच्यते । अन्नं हि भूतानां ज्येष्ठम् । भूतेभ्यः पूर्वं निष्पन्नत्वाज्ज्येष्ठं हि यस्मात्तस्मात्सर्वौषधमुच्यते । तस्मादुपपन्ना सर्वान्नात्मोपासकस्य सर्वान्नप्राप्तिः । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्द्धन्त इत्युपसंहारार्थं पुनर्वचनम् । इदानीमन्ननिर्वचनमुच्यते । अद्यते चैव यद्भूतैरत्ति च भूतानि स्वयं तस्मादन्नं तदुच्यते । इतिशब्दः प्रथमकोशपरिसमाप्त्यर्थः ॥ अन्नमयादिभ्य आनन्दमयान्तेभ्य आत्मभ्योऽभ्यन्तरतमं ब्रह्म विद्यया प्रत्यगात्मत्वेन दिदर्शयिषुः शास्त्रमविद्याकृतं पञ्चकोशापनयनेनानेकतुषकोद्रववितुषीकरणेनेव तण्डुलान् प्रस्तौति । तस्माद्वा एतस्मादन्नरसमयादित्यादि । तस्मादेतस्माद्यथोक्तादन्नरसमयात्पिण्डादन्यो व्यतिरिक्तोऽन्तरोऽभ्यन्तर आत्मा पिण्डवदेव मिथ्यापरिकल्पित आत्मत्वेन प्राणमयः । प्राणो वायुस्तन्मयस्तत्प्रायस्तेन प्राणमयेनान्नरसमय आत्मा एष पूर्णो वायुनेव दृतिः । स वा

तस्माद्वा एतस्मादन्नरसमयात्। अन्योऽन्तरात्मा प्राणमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य प्राण एव शिरः। व्यानो दक्षिणः पक्षः। अपान उत्तरः पक्षः। आकाश

---

एष प्राणमय आत्मा पुरुषविध एव पुरुषाकार एव शिरःपक्षादिभिः किं स्वत एव नेत्याह। प्रसिद्धं तावदन्नमयस्यात्मनः पुरुषविधत्वम्। तस्यान्नरसस्य पुरुषविधतां पुरुषाकारताम्। अन्वयं प्राणमयः पुरुषविधो मूषानिषिक्तप्रतिमावन्न स्वत एव। एवं पूर्वस्य पूर्व्वस्य पुरुषविधतामनूत्तरोत्तरः पुरुषविधो भवति पूर्वः पूर्व्वश्चोत्तरोत्तरेण पूर्णः। कथं पुनः पुरुषविधताऽस्येत्युच्यते। तस्य प्राणमयस्य प्राण एव शिरः प्राणमयस्य वायुविकारस्य प्राणो मुखनासिकानिःसरणो वृत्तिविशेषः शिर इव परिकल्प्यते वचनात्। सर्वत्र वचनादेव पक्षादिकल्पना। व्यानो व्यानवृत्तिर्दक्षिणः। पक्षः अपान उत्तरः पक्षः। आकाश आत्मा य आकाशस्थो वृत्तिविशेषः स समानाख्यः स आत्मेवात्मा प्राणवृत्त्यधिकारान्मध्यस्थत्वादितराः पर्य्यन्ता वृत्तीरपेक्ष्यात्मा। मध्यं ह्येषामङ्गानामात्मेति प्रसिद्धं मध्यमस्यस्यात्मत्वम्। पृथिवीपुच्छं प्रतिष्ठा। पृथिवीति पृथिवीदेवताऽध्यात्मिकस्य प्राणस्य धारयित्री स्थितिहेतुत्वात्सैषा पुरुषस्यापानमवष्टभ्येति हि श्रुत्यन्तरम्। अन्यथो-

आत्मा। पृथिवी पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ इति द्वितीयोऽनुवाकः॥ २॥

प्राणं देवा अनु प्राणन्ति। मनुष्याः पशवश्च ये। प्राणो हि भूतानामायुः। तस्मात्सर्वायुष-

---

दानदृष्ट्योर्ध्वगमनं गुरुत्वाच्च पतनं वा स्याच्छरीरस्य तस्मात् पृथिवी देवता पुच्छं प्रतिष्ठा प्राणमयस्यात्मनः॥ तत्तस्मिन्नेवार्थे प्राणमयात्मविषय एष श्लोको भवति॥ इति द्वितीयोऽनुवाकः॥ २॥

प्राणं देवा अनुप्राणन्ति। अग्न्यादयः प्राणं वाय्वात्मानं प्राणनशक्तिमन्तमनु तदात्मभूताः सन्तः प्राणन्ति प्राणनकर्म कुर्वन्ति प्राणनक्रियया क्रियावन्तो भवन्ति। अध्यात्माधिकाराद्देवा इन्द्रियाणि प्राणमनुप्राणन्ति मुख्यप्राणमनुचेष्टन्त इति वा। तथा मनुष्याः पशवश्च ये ते प्राणनकर्मणैव चेष्टावन्तो भवन्ति। अतश्च नान्नमयेनैव परिच्छिन्नेनात्मना आत्मवन्तः प्राणिनः। किन्तर्हि तदन्तर्गतेन प्राणमयेनापि साधारणेनैव सर्वपिण्डव्यापिनात्मवन्तो मनुष्यादयः। एवं मनोमयादिभिः पूर्वपूर्वव्यापि-

---

पूर्व्वपूर्व्वकोशस्योऽन्तरोत्तरः कोश एवात्मेति व्याख्यातमापातदर्शनेन। तदसत्॥ इति द्वितीयोऽनुवाकः॥ २॥

आत्मशब्दस्यामुख्यार्थत्वप्रसङ्गात् प्रकृतपरामर्शकैतच्छब्दकोपाश्चातः सर्व्वकोशाध्यासाधिष्ठानभूतश्चिदात्मैवात्मात्मशब्देन विवक्षित इति तात्पर्य्यमाह। तथा स्वाभाविकेनेति॥ अर्थादित्यात्मशब्दसामर्थ्यात्कल्पितस्याधिष्ठानत्वानुपपत्तेरित्यर्थः। असाधारणादिति॥ व्याहृत्तस्वरूपा-

मुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मो-पासते । प्राणो हि भूतानामायुः । तस्मात्सर्वा-युषमुच्यत इति । तस्यैष एव शारीर आत्मा ।

---

भिन्नतरोत्तरैः सूक्ष्मैरानन्दमयान्तैराकाशादिभूतारब्धै-र्विद्याकृतैरात्मवन्तः सर्वे प्राणिनः । तथा स्वाभाविकेना-प्याकाशादिकारणेन नित्येनाविकृतेन सर्वगतेन सत्यज्ञा-नानन्तलक्षणेन पञ्चकोशातिगेन सर्वात्मनात्मवन्तः । स हि परमार्थत आत्मा सर्वेषामित्येतदप्युक्तं भवति । प्राणं देवा अनुप्राणन्तीत्युक्तम् । तत्कस्मादित्याह । प्राणो हि यस्माद्भूतानां प्राणिनामायुर्जीवनं यावद्ध्यस्मिञ्छरीरे प्राणं वसति तावदायुरिति श्रुत्यन्तरात् । तस्मात्सर्वायुषम् । सर्वेषामायुः सर्वायुः सर्वायुरेव सर्वायुषमित्युच्यते । प्राणापगमे मरणप्रसिद्धेः । प्रसिद्धं हि लोके सर्वायुष्ट्वं प्राणस्य । अतोऽस्माद्बाह्यादसाधारणादन्नमयादात्मनोऽप-संक्रम्यान्तः साधारणं प्राणमयमात्मानं ब्रह्मोपासते येऽह-मस्मि प्राणः सर्वभूतानामात्मायुर्जीवनहेतुत्वादिति ते सर्वमेवायुरस्मिंल्लोके यन्ति नापमृत्युना म्रियन्ते प्राक्प्राप्ता-दायुष इत्यर्थः । शतं वर्षाणीति तु युक्तम् । सर्वमायुरिति

---

दपक्रम्य तत्रात्मबुद्धिं हित्वेत्यर्थः । साधारणमिति सर्वेन्द्रियसाधारणम् । प्राणकृतमशनादिना सर्वेषां पुष्ट्यादिदर्शनादित्यर्थः । सर्वभूतानामा-त्मेति सूत्रात्मना पूर्वस्य य आत्मा चिद्धातुरेष एव तस्य प्राणमयस्यात्मेति योजना ॥

यः पूर्वस्य। तस्माद्वा एतस्मात्प्राणमयात्। अन्योऽन्तर आत्मा मनोमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्।

---

श्रुतिप्रसिद्धेः किं कारणं प्राणो हि भूतानामायुस्तस्मात्सर्वायुषमुच्यत इति। यो यद्गुणकं ब्रह्मोपास्ते स तद्गुणभाग्भवतीति विद्याफलप्राप्तेर्हेत्वर्थं पुनर्वचनं प्राणो हीत्यादि। तस्य पूर्वस्यान्नमयस्यैष शरीरेऽन्नमये भवः शारीर आत्मा। क एषः। प्राणमयः॥ तस्माद्वा एतस्मादित्युक्तार्थमन्यत्। अन्योऽन्तरात्मा मनोमयः। मन इति सङ्कल्पविकल्पात्मकमन्तःकरणं तन्मयो मनोमयः। सोऽयं प्राणमयस्याभ्यन्तर आत्मा। तस्य यजुरेव शिरः। यजुरित्यनियताक्षरपादावसानो मन्त्रविशेषस्तज्जातीयवचनो यजुःशब्दस्तस्य शिरस्त्वं प्राधान्यात्। प्राधान्यञ्च यागादौ सन्निपत्योपकारात्। यजुषा हि हविर्दीयते स्वाहाकारादिना वाचनिको वा शिरआदिकल्पना। सर्वत्र मनसो हि स्थानप्रयत्ननादस्वरवर्णपदवाक्यविषया

---

यजुःशब्देन वाच्यो यजुर्वेद उच्यते। तस्य कथमान्तरं मनोमयं प्रति शिरस्त्वमित्याशङ्क्याह। मनसो हीति॥ यद्यपि यजुःशब्दो बाह्ये शब्दराशौ रूढस्तथापि श्रुतेरनतिशङ्कनीयत्वात्तत्प्रामाण्याद्विशिष्टमनोवृत्तेर्यजुःशब्दे तद्विषयभूता यजुर्वेदसधीमहे एतदात्मका वर्णा यजुर्वेदतयाऽध्येतव्या इत्येवं शब्दस्वरूपा वाच्यत्वर्थः। स्वल्पत्वपादिकां युक्तिमप्याह। एवञ्चेति॥ अन्यथेति शब्दानां घटादिवद्बाह्यद्रव्यत्वे मनोविषयत्वासम्भवान्मनसो बाह्योऽर्थोऽस्यात्तस्मान्मनसो जपो न स्यादित्यर्थः। इवच मनो-

अन्वयं पुरुषविधः। तस्य यजुरेव शिरः। ऋग्दक्षिणः पक्षः। सामोत्तरः पक्षः। आदेश

---

तत्सङ्कल्पात्मिका तद्भाविता वृत्तिः श्रोत्रादिकरणद्वारा यजुःसङ्केतेन विशिष्टा यजुरित्युच्यते। एवमृगेवं साम। एवञ्च मनोवृत्तित्वे मन्त्राणां वृत्तिरेवावर्त्त्यत इति मानसो जप उपपद्यते। अन्यथा विषयत्वान्मन्त्रो नावर्त्तयितुं शक्यो घटादिवदिति मानसो जपो नोपपद्यते। मन्त्रावृत्तिश्चोद्यते बहुशः कर्मसु। अक्षरविषयस्मृत्यावृत्त्या मन्त्रावृत्तिः स्यादिति चेन्न। मुख्यार्थासम्भवात्। त्रिः प्रथमामन्वाह त्रिरुत्तमामिति ऋगावृत्तिः श्रूयते। तत्रर्चो विषयत्वे तद्विषयस्मृत्यावृत्त्या मन्त्रावृत्तौ च क्रियमाणायां त्रिः प्रथमामन्वाहेति ऋगावृत्तिर्मुख्योऽर्थश्चोदितः परि-

---

वृत्तित्वं मन्त्राणां वाच्यमित्याह। मन्त्रावृत्तिश्चेति॥ शब्दानां घटादिवद्बाह्यद्रव्यत्वे मन्त्राणां घटादिवदावृत्तिर्नोपपद्येत क्रियैव ह्यावर्त्त्येत आवृत्तिविध्यनुपपत्त्याऽक्रियात्वं वाच्यमित्युक्तम्॥ तत्रान्यथाप्युपपत्तिमाशङ्कते। अक्षरविषयेति॥ मन्त्रेभ्यः स्मृतेरन्यत्वादन्याऽऽवृत्तिर्गौणी प्रसज्यते अतो नान्यथाप्युपपत्तिरित्युक्तमेतत् स्फुटयति॥ त्रिः प्रथमामित्यादिना॥ सामिधेन्यः समिधो यदा अध्वर्युणा हूयन्ते तदा प्रवोवाजा अभिद्यव इत्यष्टादशर्चं कृत्स्नं होता शंसति तासामृचां मध्ये प्रथमामृचं कृत्स्नामन्त्यामृचं होता त्रिरनुब्रूयादित्यावृत्तिः श्रूयत इत्यर्थः॥ मन्त्राणां मनोवृत्तित्वमुक्त्वा मनोवृत्तीनां सदा चिद्ग्राह्यत्वेनैव चिद्वेद्यचिदात्मतामाह। तस्मादिति॥ मन्त्राणां मनोवृत्तित्वेनावृत्ति-

आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ इति तृतीयोऽनुवाकः ॥ ३ ॥

---

त्यक्तः स्यात् । तस्मान्मनोवृत्त्युपाधिपरिच्छिन्नं मनोवृत्ति-निष्ठमात्मचैतन्यमनादिनिधनं यजुःशब्दवाच्यं आत्मवि-ज्ञानं मन्त्रा इति। एवं च नित्यत्वोपपत्तिर्वेदानाम्। अन्यथा विषयत्वे रूपादिवदनित्यत्वं च स्यान्नैतद्युक्तम् । सर्वे वेदा यत्रैकं भवन्ति समानसीन आत्मेति च श्रुतिर्नित्यात्मनैकत्वं ब्रुवन्ती ऋगादीनां नित्यत्वे समञ्जसा स्यात् । ऋचोऽक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुरिति च मन्त्र-वर्णः । आदेशोऽत्र ब्राह्मणमतिदेष्टव्यविशेषानतिदिश-तीति । अथर्वाङ्गिरसा च दृष्टा मन्त्रा ब्राह्मणं च शान्ति-कपौष्टिकादिप्रतिष्ठाहेतुकर्मप्रधानत्वात्पुच्छं प्रतिष्ठा तद-

---

घटते । परम्परया चिदात्मत्वेन नित्यत्वमपि घटत इत्याह । एवञ्चेति ॥ अन्यथेति ॥ स्वप्रकाशचिदात्मत्वानङ्गीकारे रूपादिवद्विषयत्वादनित्य-त्वमपि प्रसज्येत । कालिदासादिवाक्यानामप्येतेन न्यायेन नित्यत्वा-पत्त्याद्युक्त्याभासश्चैतत् । अस्त्वनित्यमिति । न वाच्यमित्याह । नैतद्युक्त-मिति । वाचा विरूपनित्ययेति श्रुत्या नित्यत्वस्यावेदितत्वाद्वेदानित्यत्वं युक्तं न भवतीत्यर्थः । वेदानां जडत्वे स्वप्रकाशेनात्मना एकत्वं न सम्भ-वति जडाजडयोर्विरोधादतो मनोवृत्तिव्यापकचिदात्मत्वं सूचित-मित्यर्थः । साक्षितया मनसि भवो मानसीनोऽक्षरे परमे व्योमकल्पे सत्यपि ऋचो विधिनिषेधरूपा निषेदुस्तादात्म्येन व्यवस्थिता इति॥

यतो वाचो निवर्त्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचनेति। तस्यैष एव शारीर आत्मा। यः पूर्व्वस्य। तस्माद्वा एतस्मान्मनोमयात्। अन्योऽन्तर आत्मा विज्ञानमयः। तेनैष पूर्णः। स

---

प्येष श्लोको भवति॥ मनोमयात्मप्रकाशकः पूर्व्ववत्॥ इति तृतीयोऽनुवाकः॥ ३॥

यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सहेत्यादि। तस्य पूर्वस्य प्राणमयस्यैष एवात्मा शारीरः। शरीरे प्राणमये भवः शारीरः। कः। य एष मनोमयः। तस्माद्वा एतस्मादिति पूर्व्ववत्। अन्योऽन्तर आत्मा विज्ञानमयो मनोमयस्याभ्यन्तरो विज्ञानमयो मनोमयो वेदात्मोक्तः। वेदार्थविषया बुद्धिर्निश्चयात्मिका विज्ञानं तच्चाध्यवसायलक्षणमन्तःकरणस्य धर्मः। तन्मयो निश्चयविज्ञानैः प्रमाणस्वरूपैर्निर्वर्त्तित आत्मा विज्ञानमयः। प्रमाणविज्ञानपूर्वको हि यज्ञादिस्तायते। यज्ञादिहेतुत्वञ्च वक्ष्यति श्लोकेन। निश्चयविज्ञानवतो हि कर्त्तव्येष्वर्थेषु पूर्वं श्रद्धोपपद्यते। सा सर्वकर्त्तव्यानां प्राथम्याच्छिर

---

मन्त्रवर्ण एकत्वं दर्शयतीत्यर्थः। अतिदेष्टव्यविशेषान् कर्त्तव्यविशेषादिदमेवं कर्त्तव्यमित्युपदिशतीत्यर्थः॥ इति तृतीयोऽनुवाकः॥ ३॥

वाङ्मनसगोचरत्वं नोपपद्यते स्वात्मनिवृत्तिविरोधादतो वाङ्मनोविशिष्टान्मनोमयाद्वाचो मनसा सह निवर्त्तन्त इत्यर्थः। तस्य च मनो-

वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य श्रद्धैव शिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ इति चतुर्थोऽनुवाकः॥ ४॥

---

इव शिरः। ऋतसत्ये यथा व्याख्यात एव। योगो युक्तिः समाधानम्। आत्मैवात्मा। आत्मवतो हि युक्तस्य समाधानवतोऽङ्गानीव श्रद्धादीनि यथार्थप्रतिपत्तिक्षमाणि भवन्ति तस्मात्समाधानम्। योग आत्मा विज्ञानमयस्य। महः पुच्छं प्रतिष्ठा। मह इति महत्तत्त्वं प्रथमजम्। महद्यक्षं प्रथमजमिति श्रुत्यन्तरात्। पुच्छं प्रतिष्ठाकारणात्। कारणं हि कार्याणां प्रतिष्ठा। यथा वृक्षवीरुधां पृथिवी। सर्वबुद्धिविज्ञानानां महत्तत्त्वं कारणम्। तेन तद्विज्ञानात्मनः प्रतिष्ठा। तदप्येष श्लोको भवति पूर्ववत्। यथान्नमयादीनां ब्राह्मणोक्तानां प्रकाशकाः श्लोका एवं विज्ञानकर्तृत्वं सर्वमयस्यापि॥ इति चतुर्थोऽनुवाकः॥ ४॥

---

मयस्य ब्रह्मणः उपासनफलभूतमधिदैविकमानन्दं विद्वान्न बिभेति गर्भवासादिदुःखादित्यर्थः। वेदार्थेति॥ तथा व्यवसायलक्षणं लौकिकमपि ज्ञानं ग्राह्यमित्यर्थः॥ इति चतुर्थोऽनुवाकः॥ ४॥

विज्ञानं यज्ञं तनुते। कर्म्माणि तनुतेऽपि च। विज्ञानं देवाः सर्व्वे। ब्रह्म ज्येष्ठमुपासते। विज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा। सर्व्वान् कामान्सम-

---

विज्ञानं यज्ञं तनुते विज्ञानवान् हि यज्ञं तनोति श्रद्धादिपूर्वकम्। अतो विज्ञानस्य कर्तृत्वम्। तनुत इति कर्म्माणि च तनुते। यस्माद्विज्ञानकर्तृत्वं सर्वम्। तस्माद्युक्तं विज्ञानमय आत्मा ब्रह्मेति। किञ्च विज्ञानं ब्रह्म सर्वे देवा इन्द्रादयो ज्येष्ठं प्रथमजत्वात् सर्वप्रवृत्तीनां वा तत्पूर्वकत्वात्प्रथमजं विज्ञानं ब्रह्म उपासते ध्यायन्ति तस्मिन्विज्ञानमये ब्रह्मण्यभिमानं कृत्वोपासत इत्यर्थः। तस्मात्ते महतो ब्रह्मण उपासनाज्ज्ञानैश्वर्य्यवन्तो भवन्ति। तच्च विज्ञानं ब्रह्म चेद्यदि वेद विजानाति न केवलं वेदैव तस्माद्ब्रह्मणश्चेन्न प्रमाद्यति बाह्येष्वनात्मस्वात्मभावितत्वात् प्राप्तं विज्ञानमये ब्रह्मण्यात्मभावनायाः प्रमदनं तन्निवृत्त्यर्थमुच्यते तस्माच्चेन्न प्रमाद्यतीति अन्नमयादिष्वात्मभावं हित्वा केवले विज्ञानमये ब्रह्मण्यात्मत्वं भावयन्नास्ते चेदित्यर्थः। ततः किं स्यादित्युच्यते। शरीरे पाप्मनो हित्वा शरीराभिमा-

---

प्रथमजत्वादिति हिरण्यगर्भाभेदेनेत्यर्थः॥ आनन्दमयः परमात्मेति वृत्तिकारैरुक्तं तन्निषेधेन व्याचष्टे। कार्यात्मप्रतीतिरित्यादिना॥ उपसंक्रामतीत्येतदतिक्रामतीत्यभिप्रायेण व्याख्यातम्॥ प्राप्तिरभिप्रायं कत्वाच व्याख्यायत इत्यत आह। न प्राप्त्य एवेति॥ अन्नमयादीनाः

श्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर

---

ननिमित्ता हि सर्वे पाप्मानस्तेषाञ्च विज्ञानमये ब्रह्मण्यात्माभिमानान्निमित्तापाये हानमुपपद्यते । छत्रापाय इव छायायाः । तस्माच्छरीराभिमाननिमित्तान् सर्व्वान् पाप्मनः शरीरे प्रभवान् शरीरे एव हित्वा विज्ञानमयब्रह्मस्वरूपापन्नस्तत्स्थान् सर्व्वान् कामान् विज्ञानमयेनैवात्मना समश्नुते सम्यक् भुङ्क्त इत्यर्थः । तस्य पूर्वस्य मनोमयस्यात्मा एष एव शरीरेमनोमये भवः शारीरः । कः । य एष विज्ञानमयः । तस्माद्वा एतस्मादित्युक्तार्थम् ॥ आनन्दमय इति कार्य्यात्मप्रतीतिरधिकारान्मयट्शब्दाञ्च । अन्नादिमया हि कार्य्यात्मानो भौतिका इहाधिकृताः । तदधिकारपतितश्चायमानन्दमयः । मयट् चात्र विकारार्थे दृष्टः । यथान्नमय इत्यत्र । तस्मात्कार्य्यात्माऽऽनन्दमयः प्रत्येतव्यः । सङ्क्रमणाच्चानन्दमयमात्मानमुपसङ्क्रामतीति वक्ष्यति । कार्य्यात्मनाञ्च सङ्क्रमणमनात्मनां दृष्टम् । सङ्क्रमणकर्मत्वेन चानन्दमय आत्मा श्रूयते । यथान्नमय-

---

मतिक्रमणीयतया प्रकृतत्वादेकस्य कर्तृत्वकर्मत्वासम्भवाच्च प्राप्तिः संक्रमणं न भवतीत्यर्थः ॥ आनन्दमयस्य परमात्मत्वासम्भवे हेत्वन्तरमाह । शिर आदीत्यादिना ॥ आनन्दमयस्य परमात्मत्वविवक्षायां मन्त्रतः तस्यैवासत्त्वाशङ्का वक्तव्या ॥ तदसम्भवाच्च नानन्दमयः परमात्मतया प्रतिपद्यत इत्याह । मन्त्रोदाहरणानुपपत्तेश्चेति ॥ न हि मन्त्रोदाहरणमुपपद्यत इति सम्बन्धः । विशिष्टस्य विशेषणकार्य्यत्वात्पुच्छस्य हमित्युप-

आत्मानन्दमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरु-

मात्मानमुपसङ्क्रामतीति। न चात्मन एवोपसङ्क्रमणं। अधिकारविरोधादसम्भवाच्च। न ह्यात्मनैवात्मन उपसङ्क्रमणं सम्भवति। स्वात्मनि भेदाभावात्। आत्मभूतञ्च ब्रह्म। सङ्क्रमितुः शिरआदिकल्पनानुपपत्तेश्च। न हि यथोक्तलक्षणे आकाशादिकारणेऽकार्य्यपतिते शिरआद्यवयवरूपकल्पनोपपद्यते अदृश्येऽनात्म्येऽनिलयनेऽनिरुक्तेऽस्थूलमनणुनेति नेत्यादिविशेषापोहश्रुतिभ्यश्च। मन्त्रोदाहरणानुपपत्तेश्च। न हि प्रियशिरआद्यवयवविशिष्टे प्रत्यक्षतोऽनुभूयमान आनन्दमय आत्मनि ब्रह्मणि नास्ति ब्रह्मेत्याशङ्काभावात् असन्नेव भवति। असद्ब्रह्मेति वेद चेदिति मन्त्रोदाहरणमनुपपद्यते। ब्रह्म पुच्छं प्रतिष्ठेत्यपि चानुपपन्नम्। पृथग्ब्रह्मणः प्रतिष्ठात्वेन ग्रहणम्। तस्मात्कार्य्यपतित एवानन्दमयो न पर एवात्मा। आनन्द इति विद्याकर्मणोः फलम्। तद्विकार आनन्दमयः। स च विज्ञानमयादन्तरः। यज्ञादिहेतोर्विज्ञानमयस्यान्तरत्वश्रुतेः। ज्ञानकर्मणोर्हि फलं भोक्त्रर्थ-

लभ्यमानो भोक्ता आनन्दमय इत्युक्तम्॥ कथं तस्य विज्ञानमयादान्तरत्वमित्यत आह। स चेति॥ कर्त्रपेक्षया भोक्तृत्वस्यान्तरभावित्वं प्रसिद्धमेव श्रुत्योक्तमित्यर्थः॥ एतत् स्फुटयति। ज्ञानकर्मणोर्हीति॥ शरीरादिभ्य आनन्दसाधनेभ्यः सकाशात्साध्येनानन्देन विशिष्टोऽन्तरतमः भवतीत्यर्थः। किञ्च प्रियं तत्साधनञ्चोद्दिश्य कर्त्ता विज्ञानकर्मणी

षविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा ।

---

त्वादनन्तरतमं स तु । अन्तरतम आनन्दमय आत्मा पूर्वस्य: । विद्याकर्मणोः प्रियाद्यर्थत्वाच्च । प्रियादिप्रयुक्ते हि विद्याकर्मणी । तस्मात्प्रियादीनां फलरूपाणामात्मसन्निकर्षाद्धि विज्ञानमयस्याभ्यन्तरत्वमुपपद्यते । प्रियादिवासनानिर्वर्तितो ह्यानन्दमयो विज्ञानमयाश्रितः स्वप्न उपलभ्यते ॥ तस्यानन्दमयस्यात्मन इष्टपुत्रादिदर्शनजं प्रियं शिर इव शिरः प्राधान्यात् । मोद इति प्रियलाभनिमित्तो हर्षः । स एव च प्रकृष्टो हर्षः । प्रमोद आनन्द इति सुखसामान्यमात्मा प्रियादीनां सुखावयवानां तेष्वनुस्यूतत्वादानन्द इति परं ब्रह्म । तद्धि शुभकर्मणा प्रत्युपस्थाप्यमाने पुत्रमित्रादिविषयविशेषोपाधावन्तःकरणवृत्तिविशेषे तमसा प्रच्छाद्यमाने प्रसन्नेऽभिव्यज्यते । तद्विषयसुखमिति प्रसिद्धं लोके । तद्वृत्तिविशेषप्रत्युपस्थापकस्य कर्मणोऽनवस्थितत्वा-

---

अनुतिष्ठते । तत उद्देश्यत्वादस्यानन्तर्यं सिद्धमित्याह । विद्याकर्मणो-रिति ॥ प्रियादिविशिष्टस्य स्वप्ने साक्षिण उपलभ्यत्वान्न मुख्यात्मत्व-मित्याह । प्रियादिवासनेति ॥ यदुक्तं ज्ञानकर्मणोः फलभूत आनन्द-मयस्तस्य साध्यत्वमौपाधिकं स्वमतानुसारेणाह । आनन्द इति पर-मिति ॥ कथं तर्हि विषयसुखस्य क्षणिकत्वं सातिशयत्वं च व्यञ्जकवृत्ति-निबन्धनमित्याह । तद्वृत्तिविशेषेति ॥ ब्रह्मण आनन्दस्वभावत्व एव किं प्रमाणमित्यत आह । वक्ष्यति चेति ॥ अन्तःकरणवृत्त्युत्कर्षादेवानन्दस्य

ब्रह्म पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥
इति पञ्चमोऽनुवाकः॥ ५॥

---

व्यञ्जकस्य क्षणिकत्वम्। तद्यदन्तःकरणं तपसा तमोघ्नेन विद्यया ब्रह्मचर्येण श्रद्धया न निर्मलत्वमापद्यते यावत्तावद्विविक्ते प्रसन्नेऽन्तःकरणविशेष आनन्द उल्लसते विपुलीभवति। वक्ष्यति च। रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति। एष ह्येवानन्दयाति एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्यन्तरात्। एवञ्च कामोपशमोत्कर्षापेक्षया शतगुणोत्तरोत्तरोत्कर्ष आनन्दस्य वक्ष्यते। एवमुत्कृष्यमाणस्यानन्दमयस्यात्मनः परमार्थब्रह्मविज्ञानापेक्षया ब्रह्म परमेव यत्प्रकृतं सत्यज्ञानानन्दलक्षणं यस्य च प्रतिपत्त्यर्थं पञ्चान्नादिमयाः कोशा उपन्यस्ताः। यच्च तेभ्योऽभ्यन्तरं येन च ते सर्वे आत्मवन्तस्तद्ब्रह्म पुच्छं प्रतिष्ठा। तदेव च सर्वस्याविद्यापरिकल्पितस्य द्वैतस्यावसानभूतमद्वैतं ब्रह्म प्रतिष्ठा। आनन्दमयस्य एकत्वावसानत्वात्। अस्ति तदेवमविद्याकल्पितस्य द्वैतस्याव-

---

सातिशयत्वमित्यत्र लिङ्गमाह। एवञ्चेति॥ यदि विषयविशेषजन्यत्वेनानन्दोत्कर्षस्तदा निःकामस्य विषयविशेषोपभोगासम्भवादानन्दोत्कर्षो न श्रूयेत। आत्मस्वभावस्यैवानन्दस्य व्यञ्जकान्तःकरणशुद्ध्युत्कर्षा इत्येवन्तु सति अकामहतत्वोत्कर्षः सम्भाव्यत इत्यर्थः। उक्तप्रकारेण विषयानन्दस्य सातिशयत्वे सति तद्विशिष्टस्यानन्दमयस्याब्रह्मत्वं सिद्धम्। सातिशयत्वेन प्रतिशरीरं भिन्नत्वात्। ब्रह्म तु तदध्यासाधिष्ठानम-

असन्नेव भवति। असद्ब्रह्मेति वेद चेत्।
अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति।

सानभूतमद्वैतं ब्रह्म प्रतिष्ठा पुच्छं तदेतस्मिन्नर्थे स एष श्लोको भवति ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥

असन्नेवासत्सम एव यथा सन्न पुरुषार्थसम्बन्धी एवं सम्भवति। अपुरुषार्थसम्बन्धी कोऽसौ। यो ऽसदविद्यमानं ब्रह्मेति वेद विजानाति चेद्यदि तद्विपर्य्ययेण यत्सर्व्वविकल्पास्पदं सर्वप्रवृत्तिवीजं सर्वविशेषप्रत्यस्तमितमप्यस्ति तद्ब्रह्मेति वेद चेत्। का पुनः शङ्का। तत्रास्तित्वे व्यवहारातीतत्वं ब्रह्मण इति ब्रूमः। व्यवहारविषये हि वाचारम्भणमात्रेऽस्तित्वभाविता बुद्धिस्तद्विपरीते व्यवहारातीते नास्तित्वमपि प्रतिपद्यते। यथा घटादिर्व्यवहारविषयतयोपपन्नः संस्तद्विपरीतोऽसन्निति प्रसिद्धम्। एवं तत्सामान्यादिहापि स्याद्ब्रह्मणो नास्तित्वप्रत्याशङ्का। तस्मादुच्यते अस्ति ब्रह्मेति चेद्वेदेति। किं पुनः स्यात्तदस्तीति विजानतःस्तदाह। सन्तं विद्यमानब्रह्मस्वरूपेण परमार्थसदात्मापन्नमेनमेवंविदं विदुर्ब्रह्मविदस्ततस्तस्मादस्तित्ववेदनात्सोऽन्येषां ब्रह्मवद्विज्ञेयो भवतीत्यर्थः। अथवा यो नास्ति ब्रह्मेति

---

द्वितीयमित्याह। एवञ्चेति ॥ एतस्मिन्नर्थे इति आनन्दमयस्य प्रतिष्ठाभूतब्रह्मप्रकाशपरे इत्यर्थः ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥

आनन्दमयस्य प्रकाशकोऽयं श्लोक इति केचन तान्प्रत्याह। तं प्रतीति ॥ सर्वविशेषतया प्रत्यक्षत्वादित्यर्थः। सर्व्वेषां साधारणत्वाद्ब्रह्मणो

तस्यैष एव शारीर आत्मा। यः पूर्वस्य।
अथातोऽनुप्रश्नाः। उताविद्वानमुं लोकं प्रेत्य।

---

मन्यते स सर्वस्यैव सन्मार्गस्य वर्णाश्रमादिव्यवस्थालक्षणस्य
नास्तित्वं प्रतिपद्यते। ब्रह्मप्रतिपत्त्यर्थत्वात्तस्य। अतो नास्तिकः
सोऽसन्नसाधुरुच्यते लोके। तद्विपरीतः सन् योऽस्ति ब्रह्मेति
चेद्वेद स तद्ब्रह्मप्रतिपत्तिहेतुं सन्मार्गवर्णाश्रमादिव्यवस्था-
लक्षणं श्रद्दधानतया यथावत्प्रतिपद्यते यस्मात्ततस्तस्मात्सन्तं
साधुमार्गस्थमेनं विदुः साधवः। तस्मादस्तीत्येव ब्रह्म प्रत्य-
यितव्यमिति वाक्यार्थः। तस्य पूर्वस्य विज्ञानमयस्यैवैष एव
शरीरे विज्ञानमये भवः शारीर आत्मा। कोऽसौ। य एष
आनन्दमयस्तं प्रति नास्त्याशङ्का नाऽतस्यपूर्वास्तित्वेऽपोहः।
सर्वविशेषत्वात्तु ब्रह्मणो नास्तित्वमित्याशङ्का युक्ता। सर्व-
सामान्याच्च ब्रह्मणो यस्मादेवमतस्तस्मात्। अथानन्तरं श्रोतुं
शिष्यस्यानुप्रश्नाः आचार्योक्तिमनु एते प्रश्नाः। सामान्यं
हि ब्रह्माकाशादिकारणत्वाद्विदुषोऽविदुषश्च। तस्मादवि-
दुषोऽपि ब्रह्मप्राप्तिराशङ्क्यते। उत अपि अविद्वानमुं लोकं
परमात्मानमितः प्रेत्य कश्चन शब्दोऽप्यर्थे विद्वानपि गच्छति
प्राप्नोति किंवा न गच्छतीति द्वितीयोऽपि प्रश्नो द्रष्टव्यो-

---

व्यवहार्यत्वं सर्वान् प्रति भवेन्न च दृश्यते ततोऽपि नास्तित्वाशङ्का जायत
इत्यर्थः। आकाशादिकारणत्वादिति भूतविशिष्टसर्वजीवकारणत्वा-
दित्यर्थः॥ कस्य सामर्थ्येन प्राप्तं प्रश्नान्तरमित्यत आह। अथेत्यादि॥

कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य
कश्चित्समश्नुता३उ । सोऽकामयत । बहु स्यां

ऽनुप्रश्ना इति बहुवचनाद्विद्वांसं प्रत्यन्यौ प्रश्नौ । यद्यविद्वान्
सामान्यं कारणमपि ब्रह्म न गच्छति ततो विदुषोऽपि
ब्रह्मागमनमाशङ्क्यते अतस्तं प्रति प्रश्नः आहो विद्वानिति ।
विद्वान् ब्रह्मविदपि कश्चिदितः प्रेत्यामुं लोकं समश्नुते
उ इत्येवं स्थिते अयादेशे यलोपे च कृतेऽकारस्य प्लुतिः
समश्नुता उ इति विद्वान् समश्नुतेऽमुं लोकम् । किंवा यथा-
ऽविद्वानेवं विद्वानपि न समश्नुते इत्यपरः प्रश्नः । द्वावेव वा
प्रश्नौ विद्वदविद्वद्विषय । बहुवचनन्तु सामर्थ्यप्राप्तप्रश्ना-
न्तरापेक्षया घटते । असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति
चेद्वेदेति श्रवणादस्ति नास्तीति संशयस्ततोऽर्थप्राप्तः किमस्ति
नास्तीति प्रथमोऽनुप्रश्नः । ब्रह्मणोऽपक्षपातित्वादविद्वान्
गच्छति न गच्छतीति द्वितीयः । ब्रह्मणः समत्वेऽप्यविदुष
इव विदुषोऽप्यगमनमाशङ्क्यते । किं विद्वान् समश्नुते न
समश्नुत इति तृतीयोऽनुप्रश्नः । एतेषां प्रतिवचनार्थमुत्त-
रग्रन्थः आरभ्यते । तत्रास्तित्वमेव तावदुच्यते । यच्चोक्तं
सत्यं ज्ञानमनन्तं ब्रह्मेति । तत्र कथं सत्यत्वमित्येतद्वक्त-
व्यमितीदमुच्यते सत्त्वोक्त्यैव सत्यत्वमुच्यते । उक्तं हि सदेव
सत्यमिति । तस्मात्सत्त्वोक्त्यैव सत्यत्वमुच्यते । कथमेवमर्थतो-

पिच्छब्दात्मालिकसत्त्वोवर्णमसामर्थ्यादित्यर्थः । तच्च चेदुपपन्नं ब्रह्मप-

वगम्यतेऽस्य ग्रन्थस्य शब्दानुगमादनेनैव ह्यर्थेनान्वितान्युत्त-
राणि वाक्यानि । तत्सत्यमित्याचक्षते यदेष आकाश
आनन्दो न स्यादित्यादीनि ॥

तत्रासदेव ब्रह्मेत्याशङ्कते । कस्मात् यदस्ति तद्विशे-
षतो गृह्यते यथा घटादि । यन्नास्ति तन्नोपलभ्यते यथा
शशविषाणादि । तथा नोपलभ्यते ब्रह्म । तस्माद्विशेषतोऽग्र-
हणान्नास्तीति । तत्राकाशादिकारणत्वाद्ब्रह्मणः । नास्ति
ब्रह्म कस्मादाकाशादि हि सर्वं कार्य्यं ब्रह्मणो जातं गृह्यते ।
यस्माच्च जायते किञ्चित्तदस्तीति । दृष्टं लोके घटाङ्कुरादि-
कारणं मृद्बीजादि । तस्मादाकाशादिकारणत्वादस्ति ब्रह्म ।
नचासता जातं किञ्चिद्गृह्यते लोके कार्य्यम् । असतश्चेन्नामरू-
पादिकार्य्यं निरात्मकत्वान्नोपलभ्येत उपलभ्यते तु तस्मा-
दस्ति ब्रह्म । असतश्चेत्कार्य्यं गृह्यमाणमप्यसदन्वितमेव तत्
स्यात् । नचैवं तस्मादस्ति ब्रह्म । तत्कथमसतः सज्जायतेति-
श्रुत्यन्तरम् । असतः सज्जन्मासम्भवमन्वाचष्टे न्यायतश्च । तस्मा-

---

त्तावतैव सत्यत्वं सिद्ध्यति सतो बाधासम्भवादित्यर्थः । एवमर्थेति सत्त्वोप-
पादनेन सत्यवस्तुविषयतेत्यर्थः ॥

ब्रह्मणः सत्यसाधनं नामारुन्धत्यादृष्टान्तिरेवेत्यभिप्रेत्यात्मत्त्वशङ्कामुद्भाव-
यति । तत्रासदेवेति ॥ विप्रतिपन्नमाकाशादि सत्पूर्वं कार्य्यत्वात् घटव-
दिति लौकिकव्याप्तिबलेन सत्कारणं तावत्सिद्धम् । तस्य च देशादि-
कारणत्वेन देशाद्यनवच्छिन्नत्वात् ब्रह्मपदवाच्यत्वं सिद्धम् । तस्य विशे-
षतोऽनुपलम्भेनासत्त्वशङ्का जायते सा कारणत्वेन व्यावर्त्त्यते न तु कारण-
त्वात्सत्त्वं साध्यते आश्रयासिद्धिप्रसङ्गादिति भावः ॥ इतोऽपि जगदुपा-
दानेनासत्त्वाशङ्का कार्य्येत्याह । न चासत इति ॥ असदन्वयादिदर्शनादिति ॥

प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा ।

---

त्मदेव ब्रह्मेति युक्तम् । तद्यदि मृद्बीजादिवत्कारणं स्यादचेतनं तर्हि न कामयितृत्वात् । नहि कामयित्रचेतनमस्ति लोके । सर्वज्ञं हि ब्रह्मेत्यवोचाम । अतः कामयितृत्वोपपत्तिः । कामयितृत्वादस्मदादिवदनाप्तकामं चेन्न । स्वातन्त्र्यात् । यथान्यान् परवशीकृत्य कामादिदोषाः प्रवर्त्तयन्ति न तथा ब्रह्मणः प्रवर्त्तकाः कामाः । कथं तर्हि सत्यज्ञानलक्षणाः स्वात्मभूतत्वाद्विशुद्धाः न तैर्ब्रह्म प्रवर्त्त्यते । तेषान्तु तत्प्रवर्त्तकं ब्रह्म प्राणिकर्म्मापेक्षया । तस्मात्स्वातन्त्र्यं कामेषु ब्रह्मणः । अतो नानाप्तकामं ब्रह्म साधनान्तरानपेक्षत्वाच्च ॥ किञ्च यथान्येषामनात्मभूता धर्म्मादिनिमित्ता-

---

युक्तमित्यर्थः ॥ एवमसत्त्वाशङ्कां निरस्याचेतनत्वाशङ्कां प्रधानवादिनः प्रसङ्गान्निराचष्टे । तद्यदिति ॥ यद्यपि साङ्ख्यमते चेतनस्य निर्विकारत्वात्-कामयितृत्वमसिद्धं तथापि लौकिकव्याप्तिबलेन कामयितृत्वादचेतनत्वशङ्का निवर्त्तत इत्याह । न ह्रीति ॥ तर्हि लौकिकव्याप्तिबलेनैवानाप्तकामत्वमपि प्राप्तमित्याशङ्क्याह । कामयितृत्वादित्यादिना ॥ जीवानामनाप्तानन्त्यं परवशत्वान्न तदस्ति ब्रह्मण इत्यर्थः ॥ कथम्भूतास्तर्हि ब्रह्मणः कामा इत्याशङ्कायामाह । सत्यज्ञानलक्षणा इति ॥ सत्यज्ञानलक्षणं स्वरूपं येषां ते तथोक्ताः । एतदुक्तं भवति मायाप्रतिबिम्बितं ब्रह्म जगतः कारणं मायापरिणामैरेव कामैः कामयितृ । तेषाञ्च परिणामानामविद्याद्यनभिभूतचिदाप्तत्वात्सत्यज्ञानात्मकत्वं ब्रह्मणस्तदात्मत्वाच्च धर्म्माद्यननुसृष्टत्वे शुद्धत्वम् । ततो जीवकामवैलक्षण्यं सिद्धमिति । तर्हि ब्रह्मणः कामाः पुण्यकारिणामप्यनिष्टफलप्राप्त्यनुकूलाः स्युः । स्वातन्त्र्यादित्याशङ्क्याह । तेषान्त्विति ॥ कामस्य शरीरादिसम्बन्धजन्यत्व-

इदꣳ सर्वमसृजत। यदिदं किञ्च। तत्सृष्ट्वा। तदेवानुप्राविशत्।

---

पेक्षाः कामाः स्वात्मव्यतिरिक्तकार्य्यकरणसाधनान्तरापेक्षाश्च न तथा ब्रह्मणो निमित्ताद्यपेक्षत्वं किन्तर्हि स्वात्मनोऽनन्यास्तदेतदाह। सोऽकामयत स आत्मा। यस्मादाकाशः सम्भूतोऽकामयत कामितवान्। कथं बहु प्रभूतं स्यां भवेयम्। कथमेकस्यार्थान्तराननुप्रवेशे बहुत्वं स्यादित्युच्यते। प्रजायेयोत्पद्येय। नहि पुत्रोत्पत्त्येवार्थान्तरविषयं बहुभवनं कथं तर्ह्यात्मस्थाऽनभिव्यक्त नामरूपाभिव्यक्त्या। यदात्मस्थेऽनभिव्यक्ते नामरूपे व्याक्रियेते तदा नामरूपापरित्यागेनैव ब्रह्मणोऽप्रविभक्ते देशकालसर्व्वावस्थासु व्याक्रियेते तदा तन्नामरूपव्याकरणं ब्रह्मणो बहुभवनम्। नान्यथा निरवयवस्य ब्रह्मणो बहुत्वापत्तिरुपपद्यतेऽल्पत्वं वा। यथाकाशस्याल्पत्वं बहुत्वञ्च वस्त्वन्तरकृतमेव। अतस्तद्द्वारेणैवात्मा बहु भवति। न ह्यात्मनोऽन्यदनात्मभूतं तत्प्रवि-

---

प्रविष्टेर्ब्रह्मणः शरीरादिमत्त्वप्रसङ्ग इति नाशङ्कनीयमित्याह। साधनान्तरानपेक्षत्वाच्चेति॥ कामसंस्कारवत्या मायया ब्रह्मतादात्म्यात्तत्परिणामायां ब्रह्मतादात्म्याच्च शरीरनिमित्तापेक्षास्तीत्यर्थः। तद्द्वारेणैवेति॥ नामरूपशक्त्यात्मकमायापरिणामद्वारेणैव नामरूपशक्त्यात्मिका स्वरूपा माया अङ्गीकृता चेत्तर्हि सा प्रधानवत् पृथक् सतीत्यद्वैतहानिरित्याशङ्क्याह। न हीति॥ आत्मातिरिक्तं किं स्वतः सिध्यति परतो वा। नाद्यः। जाड्यहानेरतिरेकहानेश्च। न द्वितीयः। प्रमासंसर्गानिरूपणात्। नहि भिन्नदेशकालयोः संयोगादि सम्भवति विषयवि-

भक्तदेशकालं सूक्ष्मं व्यवहितं विप्रकृष्टं भूतं भवद्भविष्यद्वस्तु विद्यते। अतो नामरूपे सर्व्वावस्थे ब्रह्मणैवात्मवती न ब्रह्म तदात्मकम्। ते तत्प्रत्याख्यानेन स एवेति तदात्मके उच्येते। ताभ्यां चोपाधिभ्यां ज्ञातृज्ञेयज्ञानशब्दार्थादि सर्व्वसंव्यवहारभाग्ब्रह्म स आत्मा। सऽएवंकामः संस्तपोऽतप्यत। तपऽइति ज्ञानमुच्यते। यस्य ज्ञानमयं तपऽइतिश्रुत्यन्तरादाप्तकामत्वाच्चेतरस्यासम्भव एव। स तपोऽतप्यत तपस्तप्तवान् सृज्यमानजगद्रचनादिविषयामालोचनामकरोदात्मेत्यर्थः। स एवालोच्य तपस्तप्त्वा प्राणिकर्म्मादिनिमित्तानुरूपमिदं सर्वं जगद्देशतः कालतो नाम्ना रूपेण यथानुभवं सर्वैः प्राणिभिः सर्व्वावस्थैरनुभूयमानमसृजत् सृष्टवान्। यदिदं किञ्च 'यत्किञ्चेदमविशिष्टं' तदिदं जगत्सृष्ट्वा किमकरोदित्युच्यते। तदेव सृष्टं जगदनु-

---

विषयिभावो वा। नियामकमपेक्षणात्। न च स्वभाव एव सम्बन्धः। द्वयोः स्वभावयोः सम्बन्धत्वेनैवोपगमे सम्बन्ध्यभावप्रसङ्गात्। न च स्वात्मानं प्रति स्वस्यैव सम्बन्धित्वं स्वात्मनि क्रियापातात्। तथा मिथ्याभावे व्यवहारमात्रप्रवर्त्तकत्वे च मिथ्याव्यवहारापातादनिर्वचनीयवाद एव पर्य्यवस्यतीति भावः। यस्मादात्मातिरिक्तं वस्तु न सम्भाव्यते तस्मादात्मतादात्म्येनैव नामरूपयोः सिद्धिरित्याह। अतऽइति॥ तर्हि ब्रह्मणः सप्रपञ्चताप्रसङ्ग इति न वाच्यमित्याह। न ब्रह्मेति॥ न ब्रह्म तदात्मकं अजडत्वात्तत्परिहारेणापि सिद्धिसम्भवादित्यर्थः॥ कथं तर्हि ब्रह्मात्मकत्वं तत्राह। ते तदिति॥ स्वप्ने बुद्धे नभोभक्षणवदारोपित-वस्त्वनुभवप्रत्याख्यानेन सिद्धसम्भवादनुभाव्ये नामरूपेऽनुभाव्यात्मकब्रह्मात्मके कथ्येते न त्वैक्याभिप्रायेणेत्यर्थः। न केवलं ब्रह्मणो बहुरूपत्वं मायोपाधिकं सर्व्वव्यवहारास्पदत्वं चेत्याह। ताभ्यामिति॥ प्रवेशस्या-

प्राविशदिति प्रवेशस्यानिर्वाच्यताद्योतने न जीवस्य ब्रह्मात्मतया प्रवेशवाक्यस्य तात्पर्य्यं दर्शयितुं विचारमारभते ॥

तत्रैतच्चिन्त्यं कथमनुप्राविशदिति। किम् स्रष्टा स तेनैवात्मनानुप्राविशदुतान्येनेति किं तावद्युक्तम्। प्रत्ययाश्रवणात्। यः स्रष्टा स एवानुप्राविशदिति। ननु न युक्तं मृद्वच्चेत्कारणं ब्रह्म तदात्मकत्वात्कार्य्यस्य। कारणमेव हि कार्य्यात्मना परिणमत इत्यतोऽप्रविष्ट इव कार्य्योत्पत्तेरूर्द्ध्वं पृथक्कारणस्य पुनः प्रवेशोऽनुपपन्नः। न हि घटपरिणामव्यतिरेकेण मृदो घटे प्रवेशोऽस्ति। यथा घटे चूर्णात्मना मृदोऽनुप्रवेशः एवमन्येनात्मना नामरूपकार्य्येऽनुप्रवेश आत्मन इति चेत् श्रुत्यन्तराच्चानेन जीवेनात्मनानुप्रविश्येति। नैवं युक्तं एकत्वाद्ब्रह्मणः। मृदात्मनस्त्वनेकत्वात्सावयवत्वाच्च युक्तो घटे मृदश्चूर्णात्मनानुप्रवेशः। मृद-

---

निर्वाच्यभावद्योतनेन जीवस्य ब्रह्मात्मतया प्रवेशवाक्यस्य तात्पर्यं दर्शयितुं विचारमारभते ॥

तत्रैतच्चिन्त्यमित्यादिना ॥ विमर्शे सति श्रुतत्वानुरोधात्स्रष्टुरेव प्रवेश इत्युक्ते सिद्धान्तिना ॥ पूर्ववाद्याह। ननु न युक्तमिति ॥ सृष्टिप्रवेशक्रिययोः पूर्वापरकालीनत्वसम्भवे सति कर्त्रैक्यं क्त्वाश्रुत्या बोध्येत न तु प्रवेशस्योत्तरकालत्वं सम्भवति। सृष्टिसमय एवोपादानस्य कार्यात्मनावस्थितत्वादित्यर्थः ॥ एतदेव विवृणोति। कारणमेव हीति ॥ अप्रविष्टे यथा भवनादौ देवदत्तस्य प्रवेशो दृष्टस्तथा कार्य्योत्पत्तेरूर्द्ध्वं पृथक्प्रवेशो न सम्भवतीत्यर्थः ॥ सिद्धान्तैकदेशिनो मतमुत्थाप्य पूर्ववादी दूषयति। यथा घट इत्यादिना ॥ स्रष्टुरन्यस्य वा प्रवेशो न सम्भवतीति चेत्कथं तर्हि प्रवेशो वाच्य इति सिद्धान्तैकदेश्याह। कथमिति ॥ नास्त्येवेति न वक्तव्यमित्याह। युक्तश्चेति ॥ स एवाह मतिम्। सावयवमेवेति ॥

स्य सर्वस्याप्रविष्टदेशवत्त्वाच्च। न त्वात्मन एकत्वे सति निरवयवत्वादप्रविष्टदेशाभावाच्च प्रवेश उपपद्यते कथं तर्हि प्रवेशः स्यात्। युक्तश्च प्रवेशः श्रुतत्वात्तदेवानुप्राविशदिति। सावयवमेवास्तु तर्हि सावयवत्वात् मुखे हस्तप्रवेशवन्नामरूपकार्ये जीवात्मनाप्रवेशो युक्त एवेति चेत्। नाशून्यदेशत्वात्। नहि कार्यात्मना परिणतस्य नामरूपकार्यदेशव्यतिरेकेणात्मशून्यः प्रदेशोऽस्ति यं प्रविशेज्जीवात्मना। कारणमेव चेत्प्रविशेज्जीवात्मत्वं जह्यात् यथा घटो मृत्प्रवेशे घटत्वं जहाति तदेवानुप्राविशदिति च श्रुतेर्न कारणानुप्रवेशो युक्तः। कार्यान्तरमेव स्यादिति चेत्। तदेवानुप्राविशदिति जीवात्मरूपं कार्यं नामरूपपरिणतं कार्यान्तरमेवापद्यत इति चेन्न। विरोधात्। नहि घटो घटान्तरमापद्यते व्यतिरेकश्रुतिविरोधाच्च जीवस्य। नामरूपकार्यव्यतिरेकानुवादिन्यः श्रुतयो विरुध्येरन्। तदापत्तौ मोक्षासम्भवाच्च। नहि यतो मुच्यमानस्तदेवापद्यते। नहि शृङ्खलापत्तिर्बद्धस्य तस्करादेः॥

---

पूर्ववादी दूषयति। नाशून्यदेशत्वादिति॥ कार्यात्मना परिणतस्य ब्रह्मणो नामरूपात्मकं कार्यमेव देशस्तद्व्यतिरेकेण न शून्यः प्रदेशोऽस्ति। यत्कारणमेव कार्याकारेण परिणतं तत्प्रतिकार्यविशेषो जीवात्मना प्रवेक्ष्यतीति न शङ्कनीयमित्याह। कारणमेव चेदिति॥ कार्यविशेषस्य प्रवेशमङ्गीकृत्य दूषणमुक्तं स न सम्भवति श्रुतिविरोधादित्याह। तदेवेति॥ कारणपरामर्शकेन तच्छब्देन कार्यमुपलक्ष्य कार्यान्तरस्य तत्र प्रवेशो विधीयते। प्राप्तप्रदेशसम्भवात्। अतो न श्रुतिविरोध इति सिद्धान्त्येकदेशिमतमुद्भाव्य दूषयति। कार्यान्तरमेवेत्यादिना॥

पाश्चान्तर्भेदेन परिणतमिति चेत् तदेव कारणं ब्रह्म शरीराद्याधारत्वेन तदन्तर्जीवात्मना ध्येयत्वेन च परिणमत इति चेन्न । बहिष्ठस्य प्रवेशोपपत्तेः नहि यो यस्यान्तःस्थः स एव प्रविष्ट उच्यते । बहिष्ठस्यानुप्रवेशः स्यात्प्रवेशशब्दार्थस्यैवं दृष्टत्वात् । यथा गृहं कृत्वा प्राविशदिति । जलसूर्य्यकादिप्रतिबिम्बवत्प्रवेशः स्यादिति चेन्न । अपरिच्छिन्नत्वादमूर्त्तत्वाच्च । परिच्छिन्नस्य मूर्त्तस्यान्यस्यान्यत्र प्रसादस्वाभाविके जलादौ सूर्य्यकादिप्रतिबिम्बोदयः स्यात् । न त्वात्मनोऽमूर्त्तत्वादाकाशादिकारणस्यात्मनो व्यापकत्वात् । तद्विप्रकृष्टदेशप्रतिबिम्बाधारवस्त्वभावाच्च प्रतिबिम्बवत्प्रवेशो न युक्तः । एवं तर्हि नैवास्ति प्रवेशो न च गत्यन्तरमुपलभामहे । तदेवानुप्राविशदिति च श्रुतेः । श्रुतिश्च नोऽतीन्द्रियविज्ञानोत्पत्तौ निमित्तम् । नचास्माद्वाक्याद्यत्नवतामपि विज्ञानमुपपद्यते । हन्त तर्ह्यनर्थकत्वादपोह्यमेतद्वाक्यम् । तत्सृष्ट्वा तदेवानुप्राविशदिति न । अन्यार्थ

---

कारणवाचकेन तच्छब्देन कार्य्यलक्षणायामविवक्षितलक्षणा चेत् प्रसज्येत तर्हि कारणपर एव तच्छब्दोऽस्त्वित्याह अन्यः सिद्धान्त्येकदेशी । बाह्येति ॥ अस्मिन्पक्षे प्रवेशश्रुतेर्मुख्यार्थो न लभ्यते इत्याह । न बहिष्ठेति ॥ अन्यस्य वेदान्तिनो मतमुद्भाव्य दूषयति । जल इत्यादिना ॥ एवं सिद्धान्त्येकदेशीयं निरस्य पूर्व्ववाद्युपसंहरति । एवं तर्हीति ॥ नैवास्ति प्रवेशो ब्रह्मणः ततोऽन्यस्यापि प्रवेशो न सम्भवतीत्युक्तत्वात् । न चेति ॥ इतरस्यापि प्रवेशः कल्पयितुं न शक्यत इत्याह । तदेवानुप्राविशदिति ॥ सा च श्रुतिः स्फुटं प्रवेशमाह । सा चास्माकं मीमांसकानां प्रमाणं ततस्तद्विरोधे नान्यस्य प्रवेशकल्पना युक्तेति

तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तञ्चा-

त्वात् । किमर्थमस्थाने चर्चा प्रकृतोऽप्यन्यो विवक्षितोऽस्य वाक्यस्यार्थोऽस्ति स वक्तव्यः । ब्रह्मविदाप्नोति परम् । सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायामिति । तद्विज्ञानं च विवक्षितं प्रकृतं तत् । ब्रह्मस्वरूपावगमाय चाकाशा-द्यन्नमयान्तं कार्यं प्रदर्शितं ब्रह्मानुगमश्चारब्धः । तत्रा-न्नमयादात्मनोऽन्योऽन्तर आत्मा प्राणमयस्तदन्तर्मनो-मयो विज्ञानमय इति । विज्ञानगुहायां प्रवेशितस्तत्र चानन्दमयो विशिष्ट आत्मा प्रदर्शितः । अतः परमा-नन्दमयलिङ्गाधिगमद्वारेणानन्दविवृद्ध्यवसान आत्मा । ब्रह्म पुच्छं प्रतिष्ठा सर्वविकल्पास्पदो निर्विकल्पोऽस्यामेव गुहायामधिगन्तव्य इति तत्प्रवेशः प्रकल्प्यते ॥

---

भावः । तर्हि श्रुतिपरत्वतयैव ब्रह्मण एव प्रवेशस्तूच्यतामित्याशङ्क्याह । न चेति ॥ तस्मादन्यो नपिमविन्ददिति यदर्थशून्यमेवेदं वाक्यमिति निगमयति । इत्येति ॥ शक्तिगोचरस्यार्थस्याभावादर्थशून्यत्वं तात्-पर्यगोचरस्य वा । नाद्यः । आकाशादेरविप्रकृष्टदेशेऽपि जलेमूर्तस्य प्रतिबिम्बभाववदमूर्तस्यापि ब्रह्मणोऽनिर्वाच्याविद्यास्तु प्रतिबिम्बित-स्वप्रत्यक्तरकारणान्तःकरणादिषु प्रतिबिम्बाभावासम्भवादित्याह । नेति ॥ न द्वितीय इत्याह । अन्यार्थत्वादिति ॥ एतत्स्फुटयति । किमर्थमित्या-दिना ॥ अतः परमिति ॥ बुद्धिगुहाप्रवेशादनन्तरमानन्दमय एव विशि-ष्टोऽर्थो विशेषस्य चिद्धातोर्लिङ्गविशिष्टस्य विशेष्याव्यभिचारदर्शना-त्तदधिगमद्वारेणानन्दविवृद्ध्यवसान स्वतन्त्रब्रह्मरूपोऽस्यामेव गुहाया-मधिगन्तव्य इत्यभिप्रेत्य जले सूर्यप्रवेशवदनिर्वाच्यः प्रवेशोऽभि-धीयत इत्यर्थः ॥

निरुक्तञ्च। निलयनञ्चानिलयनञ्च। विज्ञा-

नह्यन्यत्रोपलभ्यते ब्रह्म निर्विशेषत्वात् विशेषसम्बन्धो ह्युप लब्धिहेतुर्दृष्टः। यथा राहोश्चन्द्रार्कविशिष्टसम्बन्धः। एव-मन्तःकरणगुहात्मसम्बन्धो ब्रह्मण उपलब्धिहेतुः। सन्निक-र्षादवभासात्मकत्वाच्चान्तःकरणस्य। यथाचालोकविशिष्ट घटाद्युपलब्धिरेवं बुद्धिप्रत्ययालोकविशिष्टात्मोपलब्धिः स्या-त्तस्मादुपलब्धिहेतौ गुहायां निहितमिति प्रकृतमेव। तद्वृत्तिस्थानीये त्विह पुनस्तत्सृष्ट्वा तदेवानुप्राविशदित्यु-च्यते। तदेवेदमाकाशादिकारणं कार्य्यं सृष्ट्वा तदनुप्रविष्ट-मिवान्तर्गुहायां बुद्धौ द्रष्टृश्रोतृमन्तृविज्ञातृ इत्येवं विशेष-वदुपलभ्यते। तदेव तस्य प्रवेशस्तस्मादस्ति तत्कारणं ब्रह्म। अतोऽस्तित्वादस्तीत्येवोपलब्धव्यं तत्। तत्कार्य्यमनुप्रविश्य किं सच्च मूर्त्तञ्च त्यच्चामूर्त्तमभवत्। मूर्त्तामूर्त्ते ह्यव्या-कृते नामरूपे आत्मस्थेऽन्तर्गतेनात्मना व्याक्रियेते मूर्त्ता-मूर्त्तशब्दवाच्ये ते। आत्मना त्वप्रविभक्तदेशकाले इति कृत्वा आत्मा तेऽभवदित्युच्यते। किञ्च निरुक्तञ्चानिरुक्तञ्च निरुक्तं नाम निष्कृष्टं समानासमानजातीयेभ्यो देशकाल

---

बुद्धिगुहायामेव ब्रह्मणोपलब्धिसम्भवात्तत्रैव प्रवेशोऽभिधित्सित इत्याह। न हीति॥ नन्वन्यत्रोपलब्ध्यनर्हं ब्रह्म बुद्धावेव कथमुपलभ्यत इत्याशङ्क्योपाधेर्योग्यताविशेषसम्भवादित्याह। विशेषेति॥ सन्निकर्षा-दित्यन्तःकरणसंसर्गादेव देहघटादिषु चैतन्याभिव्यक्तिर्न स्वतः। अन्तः-करणस्याव्यवधानेनैव चैतन्याभिव्यञ्जकमन्वयव्यतिरेकाभ्यामित्यर्थः। यथा चाऽस्वच्छस्वभावके घटादौ मुखं न प्रतिबिम्बते जलादौ स्वच्छस्वभावके

नञ्चाविज्ञानञ्च । सत्यञ्चानृतञ्च सत्यमभवत् ।

---

विशिष्टतयेदं तदित्युक्तं निरुक्तमनिरुक्तं तद्विपरीतं निरुक्ता-
निरुक्तेऽपि मूर्त्तामूर्त्तयोरेव विशेषणे । यथा सच्च त्यच्च
प्रत्यक्षपरोक्षे । तथा निलयनं चानिलयनं च । निलयनं
नीडं आश्रयो मूर्त्तस्यैव धर्म्मः । अनिलयनं तद्विपरीतम-
मूर्त्तस्यैव धर्म्मः । त्यदनिरुक्तानिलयान्यमूर्त्तत्वेऽपि व्याकृत-
विषयाण्येव । सर्गोत्तरकालभावश्रवणात् । त्यदिति प्राणा-
द्यनिरुक्तं तदेवानिलयनञ्च । अतो विशेषणान्यमूर्त्तस्य व्याकृत
विषयाण्येवैतानि । विज्ञानं चेतनमविज्ञानं तद्रहितमचेतनं
पाषाणादि सत्यञ्च व्यवहारविषयमधिकारान्न परमार्थ-
सत्यमेकमेव हि परमार्थसत्यं ब्रह्म । इह पुनर्व्यवहारविषय-
मापेक्षिकं सत्यं मृगतृष्णिकाद्यनृतापेक्षयोदकादि सत्यमु-
च्यते । अनृतं च तद्विपरीतम् । किं पुनरेतत्सर्वमभवत्परमा-
र्थसत्यं किं पुनस्तद्ब्रह्म । सत्यं ज्ञानमनन्तं ब्रह्मेति प्रकृतत्वात् ॥
यस्मात्सत्त्यदादिकं मूर्त्तामूर्त्तधर्मजातं यत्किञ्चेदं सर्व-
मविशिष्टं विकारजातमेकमेव सच्छब्दवाच्यं ब्रह्माभवत् ।
तद्व्यतिरेकेणाभावान्नामरूपविकारस्य । तस्मात्तद्ब्रह्म सत्य-

---

प्रतिबिम्बिते तथा सत्त्वप्रधानस्यान्तःकरणप्रसादस्वाभाव्याद्घटते । तत्र
ब्रह्मोपलब्धिरित्याह । स्वच्छभावात्मकत्वाच्चेति ॥ किञ्च यथा जाग्र-
त्साम्येऽन्तःकरणस्यैव प्रत्ययाकारपरिणतस्याज्ञानलक्षणावरणाभिभवसमर्थ
आलोकोऽङ्गीक्रियते तथा जाग्रत्साम्येऽन्तःकरणस्यैव प्रत्ययाकारपरि-
णतस्याज्ञानलक्षणावरणाभिभवसामर्थ्यमङ्गीकर्त्तव्यमित्याह । यथा चेति ॥

यदिदं किञ्च। तत्सत्यमित्याचक्षते। तदप्येष श्लोको भवति॥ इति षष्ठोऽनुवाकः॥ ६॥

---

मित्याचक्षते। ब्रह्मविदोऽस्ति नास्तीत्यनुप्रश्नः प्रकृतस्तस्य प्रतिवचनविषय एतदुक्तमात्मा कामयत बहु स्यामिति। स यथा कामञ्चाकाशादिकार्य्यं सत्यादिलक्षणं सृष्ट्वा तदनुप्रविश्य पश्यञ्छृण्वन्मन्वानो विजानन् बह्वभवत्तस्मात्तदेवेदमाकाशमाकाशादिकारणं कार्य्यस्थ परमे व्योमन् हृदयगुहायां निहितं तत्प्रत्ययावभासविशेषेणोपलभ्यमानमस्तीत्येवं विजानीयादित्युक्तं भवति। तदेतस्मिन्नर्थे ब्राह्मणोक्त एष श्लोको मन्त्रो भवति। यथा पूर्वेष्वन्नमयाद्यात्मप्रकाशकाः पञ्चस्वप्येवं सर्वान्तरतमात्मास्तित्वप्रकाशकोऽपि मन्त्रः कार्य्यद्वारेण भवति॥ इति षष्ठोऽनुवाकः॥ ६॥

---

निलयनं स्तम्भप्रासादादिमूर्त्तसन्निवेशविशेषोऽवयवसंस्थानविशेषराहित्यमनिलयनमनिरुक्तत्वाद्यमूर्त्तधर्म्मवद्ब्रह्मण एव किं न स्यादित्यत आह। स्यदनिरुक्तानिलयनानीति॥ तत्सत्यमित्याचक्षत इत्यस्योपपत्तिमाह। यस्मादिति॥ पदानि व्याख्याय प्रकृतानुप्रश्ननिराकरणे प्रकरणस्य तात्पर्य्यं सोऽकामयतेत्यादेर्दर्शयति। अस्ति नास्तीत्यादिना॥ तस्या बुद्धिगुहायाः प्रत्ययाः अहं कर्त्ता भोक्तेत्यादयस्त एवावभासविशेषास्तैर्लक्ष्यमानं विशिष्टधर्म्मस्य विषयत्वेऽपि स्वरूपस्याविरुद्धत्वादित्यर्थः॥ इति षष्ठोऽनुवाकः॥ ६॥

असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानꣳ स्वयमकुरुत। तस्मात्तत्सुकृतमुच्यत इति। यद्वै तत्सुकृतम्। रसो वै

असद्वा इदमग्र आसीत्। असदिति व्याकृतनामरूपविशेषविपरीतरूपम्। अव्याकृतं ब्रह्मोच्यते। न पुनरत्यन्तमेवासत्। न ह्यसतः सज्जन्मास्ति। इदमिति नामरूपविशेषवद्व्याकृतं जगदग्रे पूर्वं प्रागुत्पत्तेः। ब्रह्मैवासच्छब्दवाच्यमासीत्ततोऽसतो वै सत्प्रविभक्तनामरूपविशेषमजायतोत्पन्नम्। किन्ततः प्रविभक्तं कार्यमिति पितुरिव पुत्रो नेत्याह। तदसच्छब्दवाच्यं स्वयमेवात्मानमेवाकुरुत कृतवत्। यस्मादेवं तस्मात् तद्ब्रह्मैव सुकृतं स्वयं कर्तृ उच्यते। स्वयं कर्तृ ब्रह्मेति प्रसिद्धं लोके सर्वस्य कारणत्वात्। यस्माद्वा स्वयमकरोत्सर्वं सर्वात्मना तस्मात्पुण्यरूपेणापि तदेव ब्रह्म कारणं सुकृतमुच्यते। सर्वथापि तु फलसम्बन्धादिकारणं सुकृतशब्दवाच्यं प्रसिद्धं लोके। यदि पुण्यं यदि वान्यत्सा प्रसिद्धिर्नित्ये चेतनवत्कारणे सत्युपपद्यते। तस्मादस्ति तद्ब्रह्म सुकृतप्रसिद्धेः। इतश्चास्ति रसत्वात्। कुतो रसत्वप्रसिद्धिर्ब्रह्मण इत्यत आह। यद्वै तत्सुकृतं रसो वै सः। रसो नाम तृप्तिहेतुरानन्दकरो मधुराम्लादिः प्रसिद्धो लोके। रसमेवायं लब्ध्वा प्राप्या-

सुकृतमिति क्तप्रत्ययः। सुष्ठु क्रियत इति कर्माभिधायकोऽपि छान्दस्या प्रक्रियया सुष्ठु करोतीति कर्तरि व्याख्यातः॥ एकार्थवृत्तित्वेनानेकप्रयोजनसाधनत्वेन परस्परायत्तत्वेत्यर्थः। अभ्यतेति स्तम्भप्रासादा-

सः। रसꣳ ह्येवायं लब्ध्वानन्दी भवति। को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति। यदा ह्येवैष

---

नन्दी सुखी भवति नासत आनन्दहेतुत्वं दृष्टं लोके। बाह्यानन्दसाधनरहिता अप्यनीहा निरेषणा ब्राह्मणा बाह्यरसलाभादिव सानन्दा दृश्यन्ते विद्वांसो नूनम्। ब्रह्मैव रसस्तेषाम्। तस्मादस्ति तेषामानन्दकारणं रसवद्ब्रह्म॥ इतश्चास्ति कुतः। प्राणनादिक्रियादर्शनात्। अयमपि हि पिण्डो जीवतः प्राणेन प्राणिति अपानेनापानिति। एवं वायवीया ऐन्द्रियकाश्च चेष्टाः संहतैः कार्य्यकारणैर्निर्वर्त्य-माना दृश्यन्ते। तच्चैकार्थवृत्तित्वेन संहननं संहननमन्तरे-णाचेतनं संहतं सम्भवति। अन्यत्रादर्शनात्। तदाह यद्यदि एष आकाशे परमे व्योम्नि गुहायां निहित आनन्दो न स्यान्न भवेत्को ह्येव लोकेऽन्यादपानचेष्टां कुर्य्यादित्यर्थः। कः प्राण्यात् प्राणनं कुर्य्यात्तस्मादस्ति तद्ब्रह्म। यदर्थाः कार्य्य-कारणप्राणनादिचेष्टाः तत्कृत एवानन्दो लोकस्य। कुतः। एष ह्येव पर आत्मानन्दयाति आनन्दयति सुखयति लोकं धर्म्मानुरूपम्। स एवात्मानन्दरूपोऽविद्यया परिच्छिन्नो विभाव्यते प्राणिभिरित्यर्थः। भयाभयहेतुत्वाद्विद्वदविदु-

---

दिषु स्वतन्त्रं गृहाद्यारभ्यं स्वामिनमन्तरेण संहननस्यादर्शनात्कार्य्य-कारणसङ्घातेऽपि विलक्षणः स्वामी शरीरेऽवयवादिभिरुपचयादिर-हितोऽवगम्यते। स च चेतनत्वेन भेदाभावाद्ब्रह्मैवेति तदस्तित्वसिद्धि-

**एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति॥ यदा**

---

घोरस्ति तद्ब्रह्म। सदवस्थाश्रयणेन ह्यभयं भवति। नासद्वस्त्वाश्रयणेन भयनिवृत्तिरुपपद्यते। कथमभयहेतुत्वमित्युच्यते। यदा ह्येव यस्मादेष साधक एतस्मिन् ब्रह्मणि किंविशिष्टेऽदृश्ये दृश्यं नाम द्रष्टव्यं विकारो दर्शनार्थत्वाद्विकारस्य। न दृश्यमदृश्यमविकार इत्यर्थः। एतस्मिन्नदृश्येऽविकारेऽविषयभूतेऽनात्म्येऽशरीरे यस्माददृश्यं तस्मादनात्म्यं यस्मादनात्म्यं तस्मादनिरुक्तम्। विशेषो हि निरुच्यते। विशेषश्च विकारः। अविकारश्च ब्रह्म। सर्वविकारहेतुत्वात्तस्मादनिरुक्तम्। यत एवं तस्मादनिलयनं निलयनं नीड आश्रयो न निलयनमनाधारं तस्मिन्नेतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने सर्वकार्यधर्मविलक्षणे ब्रह्मणीति वाक्यार्थः। अभयमिति क्रियाविशेषणम्। अभयामिति च लिङ्गान्तरं परिणम्यते। प्रतिष्ठां स्थितिमात्मभावं विन्दते लभते। अथ तदा स तस्मिन्नानात्वस्य भयहेतोरविद्याकृतस्यादर्शनादभयं गतो भवति। स्वरूपप्रतिष्ठो ह्यसौ यदा भवति तदा नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति। अन्यस्य ह्यन्यतो भयं भवति नात्मन एवाऽऽत्मनो भयं

---

रित्यर्थः॥ दासोऽहं तस्य देवस्य ममाराध्यः परमेश्वर इति भेदं विद्वान् कथमज्ञ इत्युच्यते तत्राह। असौ योऽयमिति॥ यथा चन्द्रभेदं पश्यन्नपि विद्वानुच्यतेऽतत्त्वदर्शित्वात्तथेत्यर्थः॥ कथं तर्हि तस्य भय-

ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषो मन्वानस्य। तदप्येष श्लोको भवति॥ इति सप्तमोऽनुवाकः॥ ७॥

---

युक्तं तस्मादात्मैवात्मनोऽभयकारणम्। सर्वतो हि निर्भया ब्राह्मणा दृश्यन्ते सत्सु भयहेतुषु तच्चाऽयुक्तं असति भयत्राणे ब्रह्मणि। तस्मात्तेषामभयदर्शनादस्ति तदभयकारणं ब्रह्मेति। कदासावभयं गतो भवति साधको यदा नान्यत्पश्यत्यात्मनि चान्तरं भेदं न कुरुते तदाऽभयं गतो भवतीत्यभिप्रायः। यदा पुनरविद्यावस्थायां हि यस्मादेषोऽविद्यावान् अविद्यया प्रत्युपस्थापितं वस्तु तैमिरिकद्वितीयचन्द्रवत्पश्यत्यात्मनि चैतस्मिन् ब्रह्मणि। उदरपि अरमल्पमप्यन्तरं छिद्रं भेददर्शनं कुरुते। भेददर्शनमेव ह्यन्तःकरणमल्पभेदं पश्यतीत्यर्थः। अथ तस्माद्भेददर्शनात् हेतोरस्य भेददर्शिन आत्मनो भयं भवति। तस्मादात्मैवात्मनो भयकारणमविदुषस्तदेतदेव तद्ब्रह्म तु एव भयं भेददर्शिनो विदुष ईश्वरोऽन्यो मत्तोऽहमन्यः संसारीत्येवं विदुषो भेददृष्टमीश्वराख्यं तदेव ब्रह्माल्पमप्यन्तरं कुर्वतो भयं भवत्येकत्वेनामन्वानस्य। तस्माद्विद्वानपि अविद्वानेव। असौ योऽयमेकमभिन्नमात्मतत्त्वं न पश्यति उच्छेदहेतुदर्शनाद्युच्छे-

---

सम्भावनेत्यत आह। उच्छेदेति॥ संहर्त्ता हि परमेश्वरो मां संहरिष्यति नरके वा निक्षेप्स्यतीति पश्यतो भयं भवतीत्यर्थः॥ मन्त्रौवोच्छेद-

भीषाऽस्माद्वातः पवते। भीषोदेति सूर्य्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति। सैषानन्दस्य मीमांसा भवति। युवा स्यात् साधु युवाध्यायिकः। आशिष्ठो दृढ़िष्ठो बलिष्ठः। तस्येयं पृथिवी सर्व्वा वित्तस्य पूर्णा स्यात्। स

---

द्याभिमतस्य भयं भवति। अनुच्छेद्यो ह्युच्छेदहेतुस्तस्मिन्नसत्युच्छेदहेतावनुच्छेद्ये तद्दर्शनकार्य्यं भयं युक्तम्। सर्व्वञ्च जगद्भयवद्दृश्यते। तस्माज्जगतो भयदर्शनाद्गम्यते नूनं तदस्ति भयकारणमुच्छेदहेतुरनुच्छेदात्मकं यतो जगद्बिभेतीति। तदेतस्मिन्नप्यर्थे एष श्लोको भवति॥ इति सप्तमोऽनुवाकः॥७॥

भीषा भयेनास्माद्वातः पवते। भीषोदेति सूर्य्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति। वातादयो हि महार्हाः स्वयमीश्वराः सन्तः पवनादिकार्य्येष्वायासबहुलेषु नियताः प्रवर्त्तन्ते। भयकारणमानन्दं ब्रह्म। तस्यास्य ब्रह्मण आनन्दस्यैतद्युक्तम्। प्रशास्तरि सति यस्मिन्नियमेन तेषां प्रवर्त्तनं तस्मादस्ति भयकारणं तेषां प्रशास्तृ ब्रह्म। यतस्ते भृत्या इव राज्ञः आस्माद्ब्रह्मणो भयेन प्रवर्त्तन्ते।

---

हेतुः कुत इत्यत आह। अनुच्छेद्यो हीति॥ उच्छेदहेतोरप्युच्छेदहेत्वन्तरेऽनवस्थाप्रसङ्गान्नित्यत्वं वक्तव्यं तच्च ब्रह्मणो नान्यत्सम्भाव्यत इत्यर्थः॥ इति सप्तमेऽनुवाकः॥७॥

तत्र भयकारणं ब्रह्मानन्दमुक्तं यदेष आकाश आनन्दो न स्यादिति। अथानन्दस्य लोकजन्यः प्रविहृतस्ततो विचारमारभते। तस्मादित्यादिना॥

एको मानुष आनन्दः। ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं मनुष्यगन्धर्वाणामानन्दाः। स एको देवगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवगन्धर्वा-

---

तत्त्व भयकारणमानन्दं ब्रह्म। तस्यास्य ब्रह्मण आनन्दस्यैषा मीमांसा विचारणा भवति। किमानन्दस्य मीमांस्यमित्युच्यते। किमानन्दो विषयविषयिसम्बन्धजनितो लौकिकानन्दवदाहोस्वित् स्वाभाविक इत्येवमेषानन्दस्य मीमांसा। तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनसम्पत्तिनिमित्त उत्कृष्टः। स य एष निर्दिश्यते ब्रह्मानन्दानुगमार्थम्। अनेन हि प्रसिद्धेनानन्देन व्यावृत्तविषयबुद्धिगम्य आनन्दोऽनुगन्तुं शक्यते। लौकिकोऽप्यानन्दो ब्रह्मानन्दस्यैव मात्राऽविद्यया तिरस्क्रियमाणोऽविज्ञातो उत्कृष्यमाणायां चाविद्यायां ब्रह्मादिभिः कर्मवशाद्यथाविज्ञानं विषयादिसाधनसम्बन्धवशाच्च विभाव्यमानाच्च लोकेऽनवस्थितो लौकिकः सम्पद्यते स एवाविद्याकामकर्मापकर्षेण मनुष्यगन्धर्वाद्युत्तरोत्तरभूमिष्वकामहतविद्वच्छ्रोत्रियप्रत्यक्षो वि-

---

ब्रह्मानन्दस्य चेन्मीमांसा प्रस्तुता किमर्थस्तर्हि सार्वभौमानन्दाद्युपन्यासस्तत्राह। तत्र लौकिक इत्यादिना॥ लौकिक आनन्दः काचित्काष्ठां प्राप्तः। सातिशयत्वात्परमाणुवदिति ब्रह्मानन्दानुमानार्थः। लौकिकोप-

णामानन्दाः। स एकः पितृणां चिरलोकलो-
कानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते
ये शतं पितृणां चिरलोकलोकानामानन्दाः। स
एक आजानजानां देवानामानन्दः। श्रोत्रियस्य

---

भाव्यते शतगुणोत्तरोत्तरोत्कर्षेण यावद्धिरण्यगर्भस्य
ब्रह्मण आनन्द इति। निरस्तेऽविद्याकृते विषयविषयि-
विभागे विद्यया स्वाभाविकः परिपूर्ण एक आनन्दोऽद्वैते-
भवतीत्येतमर्थं विभावयिष्यन्नाह। युवा प्रथमवयाः साधु-
युवेति। साधुश्चासौ युवा चेति यूनो विशेषणम्। युवाप्यसाधु-
र्भवति साधुरप्ययुवाऽतो विशेषणं युवा स्यात्साधुयुवेति।
आध्यायिकोऽधीतवेदः। आशिष्ठ आशास्तृतमः दृढिष्ठो
दृढतमः। बलिष्ठो बलवत्तमः एवमाध्यात्मिकसाधनस-
म्पन्नः। तस्येयं पृथिवी उर्वी सर्व्वा वित्तस्य वित्तेनोपभोग-
साधनेन दृष्टार्थेन च कर्म्मसाधनेन सम्पन्ना पूर्णा राजा
पृथिवीपतिरित्यर्थः। तस्य च य आनन्दः स एको मानुषो
मनुष्याणां प्रकृष्ट एक आनन्दः। ते ये शतं मानुषा
आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः। मानुष्यादा-
नन्दाच्छतगुणेनोत्कृष्टो मनुष्यगन्धर्वाणामानन्दो भवति।

---

श्याम इत्यर्थः। विषयेभ्यो व्यावृत्ताः व्यावृत्तविषया अविषयब्रह्मात्मै-
कत्वदर्शिनस्तद्बुद्धिगोचरा इत्यर्थः॥ प्रकारान्तरेण ब्रह्मानन्दानुगम-
माह। लौकिकोऽपीत्यादिना॥ मनुष्यगन्धर्व्वानन्दस्योत्कृष्टत्वे निमित्त-
माह। ते ह्यन्तर्धानादीति॥ प्रथमवकामहतापदस्य तात्पर्यमाह।
प्रथमनिति। यदि प्रथमपर्य्याय एवाकामहतो गृह्येत तदा तस्यैव सार्व-

चाकामहतस्य। ते ये शतमाजानजानां देवा-
नामानन्दाः। स एकः कर्म्मदेवानामानन्दः।
ये कर्म्मणा देवानपि यन्ति। श्रोत्रियस्य चाकाम-

---

मनुष्याः सन्तः कर्मविद्याविशेषाद्गन्धर्वत्वं प्राप्ताः मनुष्य-
गन्धर्वाः ते ह्यन्तर्धानादिशक्तिसम्पन्नाः सूक्ष्मकार्य्यकारणाः।
तस्मात्प्रतिघाताल्पत्वं तेषां द्वन्द्वप्रतिघातशक्तिसाधनसम्प-
त्तिश्च। ततोऽप्रतिहन्यमानस्य प्रतिकारवतो मनुष्यग-
न्धर्वस्य स्याच्चित्तप्रसादः। तस्य प्रसादविशेषात्सुखविशेषाभि-
व्यक्तिः। एवं पूर्वस्याः पूर्वस्या भूमेरुत्तरस्यामुत्तरस्यां भूमौ
प्रसादविशेषतः शतगुणेनानन्दोत्कर्ष उपपद्यते। प्रथ-
मन्त्वकामहताग्रहणं मनुष्यविषयभोगकामनाभिहतस्य
श्रोत्रियस्य मनुष्यानन्दाच्छतगुणेनानन्दोत्कर्षो मनुष्यग-
न्धर्वेण तुल्यो वक्तव्य इत्येवमर्थं साधु युवाध्यायिक इति
श्रोत्रियत्वावृजिनत्वे गृह्येते। ते ह्यविशिष्टे सर्वत्र। अका-
महतत्वं तु विषयोत्कर्षापकर्षतः सुखोत्कर्षापकर्षाय
विशिष्यते। अतोऽकामहतग्रहणम्। तद्विशेषतः शतगुणात्
सुखोत्कर्षोपलब्धेरकामहतत्वस्य परमानन्दप्राप्तिसाध-
नत्वविधानार्थम्। व्याख्यातमन्यत्। देवगन्धर्वा जातित

---

भौमानन्देन तुल्य आनन्दः स्यात्तदा च व्याघातो भवेत्। मानुषानन्दनि-
स्पृहो मानुषानन्दभागभागी चेति। ततो मानुष्यगन्धर्वानन्देन तुल्यमा-
नन्दं तस्य दर्शयितुं प्रथमपर्य्याये तदग्रहणमित्यर्थः। अवृजिनत्वमपापत्वं
यथोक्तकारित्वं तत्साधुपदाल्लभ्यत इत्यर्थः॥ देवास्त्रयस्त्रिंशत्। अष्टौ

हतस्य । ते ये शतं कर्म्मदेवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकाम-

---

एव । चिरलोका इति पितॄणां विशेषणम् । चिरकाल-स्थायी लोको येषां पितॄणां ते चिरलोका इति । आजान इति देवलोकस्तस्मिन्नाजाने जाता आजानजा देवाः स्मार्त्तकर्म्मविशेषतो देवस्थानेषु जाताः । कर्म्म-देवा ये वैदिकेन कर्मणाग्निहोत्रादिना केवलेन देवा-नपि यन्ति । देवा इति त्रयस्त्रिंशद्धविर्भुजः । इन्द्र-स्तेषां स्वामी तस्याचार्य्यो बृहस्पतिः । प्रजापतिर्विराड् त्रैलोक्यशरीरो ब्रह्मा । समष्टिव्यष्टिस्वरूपः संसारमण्ड-लव्यापी । यत्रैत आनन्दभेदा एकतां गच्छन्ति धर्मश्च तन्निमित्तो ज्ञानञ्च तद्विषयमकामहतत्वं च निरतिशयं यत्र स एष हिरण्यगर्भो ब्रह्मा तस्यैष आनन्दः । श्रोत्रियेणावृजिनेनाकामहतेन च सर्व्वतः प्रत्यक्षमुपलभ्यते । तस्मादेतानि त्रीणि साधनानीत्यव

---

वसवः । एकादश रुद्राः । द्वादशादित्याः । इन्द्रः प्रजापतिश्चेति ॥ यदर्थं मीमांसारब्धा तस्य निरतिशयानन्दस्य सिद्धौ वाक्यतात्पर्य्य-न्दर्शयितुमाह । तस्याकामहतत्वेति ॥ तस्य ब्रह्मणो हिरण्यगर्भस्यानन्द-स्तदुपासकप्रत्यक्षो यस्य मात्रा स एष परमानन्दः स्वाभाविक इति स-म्बन्धः ॥ हिरण्यगर्भानन्दस्य मात्रात्वे श्रुत्यन्तरं प्रमाणयति । एतस्यै-वेति ॥ न केवलं हिरण्यगर्भानन्द एव मात्रा यस्य प्रागुपन्यस्तः सार्व्व-भौमाद्यानन्दः स एष यस्य मात्रा प्रविभक्ता नानात्वमापन्ना सतो यत्र निरतिशयानन्देऽकामहतब्रह्मवित्प्रत्यक्षे कैवल्य एकताङ्गतेति योजना ।

हतस्य। ते ये शतं देवानामानन्दाः। स एक
इन्द्रस्यानन्दः। श्रोत्रियस्य चाकामहतस्य। ते

---

गम्यते। तत्र श्रोत्रियत्वावृजिनत्वे नियतेऽकामहतत्वं
तूत्कृष्यते इति प्रकृष्टसाधनता गम्यते। तस्य तस्या-
कामहतत्वं प्रकर्षतश्चोपलभ्यमानः श्रोत्रियप्रत्यक्षो ब्रह्मण
आनन्दो यस्य परमानन्दस्य मात्रा एकदेशः। एतस्यै-
वानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुत्यन्त-
रात्। स एष आनन्दो यस्य मात्रा समुद्राम्भस इव
विप्रुषः प्रविभक्ता यत्रैकतां गता स एष परमानन्दः
स्वाभाविकोऽद्वैतत्वात् आनन्दानन्दिनोश्चाविभागोऽत्र॥
तदेतन्मीमांसाफलमुपसंह्रियते स यश्चायं पुरुष इति॥
गुहायां निहितः परमे व्योम्न्याकाशादिकार्यं सृष्ट्वाऽन्न-
मयान्तं तदेवानुप्रविष्टः स य इति निर्दिश्यते। स एको-
ऽसावयं पुरुषे यश्चासावादित्ये यः परमानन्दः श्रोत्रि-
यप्रत्यक्षो निर्दिष्टो यस्यैकदेशं ब्रह्मादीनि भूतानि सुखा-

---

अकामहतप्रत्यक्षत्वाभिधानाद्भेदप्राप्तिं निरस्यति। आनन्दानन्दिन-
श्चेति। प्रत्यक्षत्वाभिधानमज्ञानसंशयादिव्यवधानाभावाभिप्रायं न तु
विषयविषयिभावाभिप्रायम्। अदृश्येऽनात्म्ये उदरमन्तरं कुरुत इत्या-
दिना निषेधादित्यर्थः। मीमांसया निरतिशयानन्दं ब्रह्माश्रोत्रि-
निर्द्धारितम्। तस्याकामहतप्रत्यक्षाभिधानादभेदसिद्धिः। न हि परा-
नन्दः परस्य प्रत्यक्षो भवति। तस्मान्निरतिशयानन्दब्रह्मैकत्वं जीवस्य
ब्रह्मविदाप्नोति परमित्युपक्रान्तं मीमांसया च सिद्धमुपसंह्रियत इ-
त्यर्थः॥ आदित्यग्रहणस्याधिदैवकोपाधिलक्षणार्थस्याविवक्षितत्वं दर्श-

ये शतमिन्द्रस्यानन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं

---

रश्म्युपजीवन्ति स यश्चासावादित्ये इति स एकः। तं मीमांसया च सिद्धमुपसंहरति भिन्नप्रदेशस्थघटाकाशाकाशैकत्ववत्। ननु तन्निर्देशे स यश्चायं पुरुष इत्यविशेषतोऽध्यात्मं न युक्तो निर्देशो यश्चायं दक्षिणेऽक्षन्निति तु युक्तः प्रसिद्धत्वात्। न पराधिकारात्। परो ह्यात्माऽधिकृतोऽदृश्येऽनात्म्ये भीषास्माद्वातः पवते सैषानन्दस्य मीमांसेति। न ह्यकस्मादप्रकृतो युक्तो निर्देष्टुं परमात्मविज्ञानं च विवक्षितम्। तस्मात्पर एव निर्दिश्यते स एक इति। नन्वानन्दस्य मीमांसा प्रकृता तस्या अपि फलमुपसंहर्तव्यमभिन्नः स्वाभाविक आनन्दः परमात्मैव न विषयविषयिसम्बन्धजनित इति। ननु तदनुरूप एवायं निर्देशः स यश्चायं पुरुषे यश्चासावादित्ये स एक इति भिन्नाधिकरणस्थविशेषोपमर्दनेन। नन्वेवमप्यादित्यविशेषग्रहणमनर्थकम्। नानर्थकम्। उत्कर्षापकर्षापोहार्थत्वात्।

---

वितं चोद्यमुद्भावयति। नन्विति॥ य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुष इत्यादौ श्रुत्यन्तरे मण्डलस्थदक्षिणाक्षिस्थैनैक्यस्य प्रसिद्धत्वादिहाप्यादित्यस्थैनैक्यनिर्देशे दक्षिणाक्षिग्रहणं युक्तमित्यर्थः। अध्यात्ममधिदैवतं च विज्ञानोपासनविवक्षायां तथा स्यादेह तद्विवक्षित-मित्याह। न पर इति॥ य एवं विद्वान् निरतिशयानन्दस्तदुत्कृष्टोपाधौ प्रतिबिम्बितः स एव निकृष्टोपाधौ शिरःपाण्यादिमति पुरुषे प्रतिबि-म्बित इति परमानन्दमपेक्ष्य समत्वं विशिष्टयोः स्वभावैक्यं विवक्षित-

दानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रि-

मुपसंक्रामति विषयजातमन्नमयात्पिण्डात्मनो व्यतिरिक्तं न पश्यति सर्वं स्थूलभूतमन्नमयमात्मानं पश्यतीत्यर्थः॥ ततोऽभ्यन्तरमेतं प्राणमयं सर्वान्नमयात्मस्थमविभक्तम्। अथैतं मनोमयं विज्ञानमयमानन्दमयमात्मानमुपसंक्रामति। अथाऽदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। तत्रैतच्चिन्त्यम्। कोऽयमेवंवित् कथं वा संक्रामतीति। किं परस्मादात्मनोऽन्यः संक्रमणकर्त्ता प्रविभक्त उत स एवेति। किन्ततो यद्यन्यः स्याच्छ्रुतिविरोधः। तत्सृष्ट्वा तदेवानुप्राविशत्। अन्योऽसावन्योऽहमस्मीति। न स वेद। एकमेवाद्वितीयं तत्त्वमसीति अथ स एवानन्दमयमात्मानमुपसंक्रामतीति कर्म्मकर्त्तृत्वानुपपत्तिः। परस्यैव च संसारित्वं पराभावो वा। यद्युभयथा प्राप्तो दोषो न परिहर्त्तुं शक्यत इति व्यर्था चिन्ता। अथान्यतरस्मिन् पक्षे दोषाप्राप्तिस्तृतीये वाऽदृष्टे पक्षे स एव शास्त्रार्थ इति व्यर्थैव चिन्ता न तन्निर्द्धारणार्थत्वादर्थवत्त्येव चिन्ता। सत्यं प्राप्तो दोषो न शक्यः परिहर्त्तुमन्यतरस्मिंस्तृतीये वा पक्षेऽदृष्टेऽवधृते व्यर्था चिन्ता स्यान्न तु सोऽवधृत इति तद-

---

ममेत्यर्थंतोऽपि कल्प्याभावमनेकत्वस्यान्योन्याश्रयादिदोषदुष्टत्वात्पूर्वपक्षनिराकरणेन सिद्धान्तोपपत्तेरर्थः॥ विचारारम्भमुपपाद्य सिद्धान्तमुपक्रमते। स एव तु स्यादिति॥ औपाधिकभेदभिन्नोऽयमेवंवित् स्वतः पर एव स्यादित्यर्थः॥ अविद्याध्यारोपिता ब्रह्मत्वव्यावृत्तिरेव ब्रह्मप्राप्तिर्विवक्षितेति फलवाक्यस्यैवमर्थता कथमवगम्यते न पुनरप्राप्तप्राप्तिरि-

यस्य चाकामहतस्य। स यश्चायं पुरुषे। यश्चा-

---

वधारणार्थत्वादर्थवत्येवैषा चिन्ता। सत्यमर्थवती चिन्ता।
शास्त्रावधारणार्थत्वात्। चिन्तयसि च त्वं तत्तु निर्णेष्यसि
किं न निर्णेतव्यमिति वेदवचनं न कथं तर्हि बहुप्रति-
पक्षत्वात् एकत्ववादी त्वं वेदार्थपरत्वात् बहवो हि नाना-
त्ववादिनो वेदबाह्यास्त्वत्प्रतिपक्षा अतो ममाशङ्का न निर्णे-
ष्यसीत्येतदेव मे स्वस्त्ययनं यन्मामेकयोगिनमनेकयोगिबहु-
प्रतिपक्षमात्थ अतो जेष्यामि सर्व्वानारभे च चिन्ताम्। स
एव तु स्यात्तद्भावस्य विवक्षितत्वात्। तद्विज्ञानेन परमात्म-
भावो ह्यत्र विवक्षितो ब्रह्मविदाप्नोति परमिति। न ह्यन्य-
स्यान्यभावापत्तिरुपपद्यते॥ ननु तस्यापि तद्भावापत्तिर-
नुपपन्नैव। नाऽविद्याकृतानात्मापोहार्थत्वात्॥ या हि
ब्रह्मविद्यया स्वात्मप्राप्तिरुपदिश्यते साऽविद्याकृतस्यान्नादि-
विशेषात्मन आत्मत्वेनाध्यारोपितस्यानात्मनोऽपोहार्था।
कथमेवमर्थतावगम्यते विद्यामात्रोपदेशात्। विद्यायाश्च
दृष्टं कार्य्यमविद्यानिवृत्तिस्तच्चेह विद्यामात्रमात्मप्राप्तौ
साधनमुपदिश्यते मार्गविज्ञानोपदेशवदिति चेत्तदात्मत्वे
विद्यामात्रसाधनोपदेशोऽहेतुः। कस्मात्। देशान्तरप्राप्तौ

---

स्याह। कथमिति॥ परिहरति। विद्यामात्रेति॥ अन्यथाप्युपपत्तिं
शङ्कते। मार्गेति॥ गन्तुः स्वतो ग्रामत्वाभावेऽपि यथा मार्गज्ञानोपदेशः
सार्थकस्तथा जीवस्य स्वतो ब्रह्मत्वाभावेऽपि विद्योपदेशोऽभ्यासद्वारेण
ब्रह्मप्राप्तिहेतुत्वादित्यर्थः॥ त्वं ग्रामोऽसीति न तवोपदेशः आत्माभेदोप-

मार्गविज्ञानोपदेशदर्शनात्। न हि ग्राम एव गन्तेति चेत्। न वैधर्म्यात्। तत्र हि ग्रामविषयं विज्ञानं नोपदिश्यते तत्प्राप्तिमार्गविषयमेवोपदिश्यते विज्ञानं न तथेह ब्रह्मविज्ञानव्यतिरेकेण साधनान्तरविषयं विज्ञानमुपदिश्यते। उक्तकर्म्मादिसाधनापेक्षं ब्रह्मविज्ञानं परप्राप्तौ साधनमुपदिश्यत इति चेन्न। नित्यत्वान्मोक्षस्येत्यादिना प्रयुक्तत्वात्। श्रुतिश्च तत्सृष्ट्वा तदेवानु प्राविशदिति कार्य्यस्य तदात्मत्वं दर्शयति। अभयप्रतिष्ठोपपत्तेश्च। यदि हि विद्यावान् स्वात्मनोऽन्यन्न पश्यति ततोऽभयं प्रतिष्ठां विन्दत इति स्याद्भयहेतोः परस्याभावात्। अन्यस्य चाविद्याकृतत्वे विद्ययाऽवस्तुत्वदर्शनोपपत्तिस्तद्धि द्वितीयस्य चन्द्र-

---

देशः प्रतीयतेऽत उपदेशवैषम्यान्न दृष्टान्तो युक्त इत्याह। न धवैधर्म्यादिति॥ यदि विदुषः सकाशादन्य ईश्वरो भयहेतुर्नास्ति का तर्हि गतिर्व्यतिरिक्तेश्वरदर्शनस्येत्याशङ्क्याह। अन्यस्य चेति॥ कल्पितभेदविशिष्टरूपेणेश्वरस्याविद्याकृतत्वे मिथ्यात्वे सति विद्यया तत्रावस्तुत्वदर्शनमुपपद्यते। ईश्वरो मम प्रशास्तेति मिथ्यैतद्यतस्तस्य मम चैकात्म्यमेव परमार्थमिति विद्वद्दृष्ट्या विशिष्टस्यासत्त्वमित्यर्थः। दृष्टान्तवैषम्यं शङ्कते। नैवमिति॥ यथा चन्द्रैकत्वदर्शनात् द्वितीयचन्द्रो न गृह्यते नैवं ब्रह्मविदा गृह्यते व्यतिरिक्तेश्वरः। प्रतिनियतप्रपञ्चावभासस्य भोजनादिप्रवृत्त्यनुपपत्त्या जीवन्मुक्तस्याप्यभ्युपगमात्प्रपञ्चनियमस्य चेश्वराधीनत्वाभ्युपगमादित्यर्थः॥ यद्यपि जागरे व्यतिरेकाभासदर्शनं विदुषस्तथापि न तद्भयकारणं नहि मायावी स्वविरचितव्याघ्राभासाद्बिभेति। अविदुषोऽपि

अस्माँल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसङ्-

स्यासत्त्वं यद्वैतैर्मिरिक्तेण चक्षुष्मता न गृह्यते नैवं गृह्यत इति चेन्न सुषुप्तसमाहितयोरग्रहणात्। सुषुप्तेऽग्रहणमत्यासक्तवदिति चेन्न। सर्व्वाग्रहणात्। जाग्रत्स्वप्नयोरन्यस्य ग्रहणात्सत्त्वमेवेति चेत् नाविद्याकृतत्वात्। जाग्रत्स्वप्नयोर्यदन्यग्रहणं जाग्रत्स्वप्नयोस्तदविद्याकृतमविद्याभावेऽभावात्। सुषुप्तेऽग्रहणमप्यविद्याऽकृतमिति चेन्न। स्वाभाविकत्वात्। द्रव्यस्य हि तत्त्वमविक्रियापरानपेक्षत्वात् विक्रियानतत्त्वं परापेक्षत्वात्। न हि कारकापेक्षं वस्तुनस्तत्त्वं सतो विशेषः कारकापेक्षो विशेषश्च विक्रिया। जाग्रत्स्वप्नयोश्च ग्रहणं विशेषः। यद्धि यस्यान्यापेक्षं स्वरूपं तत्तस्य तत्त्वं यदन्यापेक्षं न तत्तत्त्वम्। अन्याभावेऽभावात्। तस्मात्स्वाभाविकत्वाज्जाग्रत्स्वप्नवन्न सुषुप्ते विशेषः। येषां

---

व्यतिरेकदर्शनं न सदातनमित्याह। न सुप्तेति॥ सुषुप्ते व्यतिरेकाग्रहणसत्त्वसाधकं न भवतीत्याह। सुषुप्त इति॥ यथा इषुकार इष्वासक्तमनास्तया तद्व्यतिरिक्तं विद्यमानमपि न पश्यति तथा सुषुप्तेऽस्मि निरततया सुखासक्ततया सदपि द्वितीयं न पश्यति नत्वभावादित्यर्थः॥ अन्यासक्तस्य तद्व्यतिरिक्तादर्शनेऽपि तददर्शनमेवास्ति सुषुप्तेऽपि न किञ्चिदज्ञासिषमिति प्रत्ययात्सुखस्याप्यात्मतादात्म्यादज्ञानस्य च व्यतिरिक्तत्वानिर्वचनाद्तस्तास्त्विकद्वितीयाभावादेवाग्रहणमित्याह। न सर्व्वाग्रहणादिति॥ सुषुप्ते चेदनुपलम्भादसत्त्वं तर्हि जाग्रत्स्वप्नयोरुपलम्भाद्द्वैतस्य सत्त्वं किं न स्यादित्याह। जाग्रदिति॥ अनात्मादावात्मत्वादिबुद्धिरविद्या तद्भावे एव द्वैतोपलम्भान्नोपलम्भमात्रं सत्त्वसाधकमन्यथा शुक्तिरूप्यादेरपि सत्त्वप्रसङ्गादित्याह॥ नाविद्येति॥ पूर्व्ववाद्याह। सुषु-

क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रामति ।

---

पुनरीश्वरोऽन्य आत्मनः कार्य्यस्यान्यस्तेषां भयानिवृत्ति-र्भयस्यान्यनिमित्तत्वात् सतश्चान्यस्यात्महानानुपपत्तिः । न चासत आत्मलाभः । सापेक्षस्यान्यस्य भयहेतुत्वमिति चेन्न । तस्यापि तुल्यत्वात् । यद्धर्माद्यनुसहायीभूतं नित्यमनित्यं वा निमित्तमपेक्ष्यान्यद्भयकारणं स्यात्तस्यापि तथाभूतस्यात्महानाभावाद्भयानिवृत्तिरात्महाने वा सद-सतोरितरेतरापत्तौ सर्व्वत्रानाश्वास एवैकत्वपक्षे पुनः सन्निमित्तस्य संसारस्याऽविद्याकल्पितत्वाददोषः । तैमि-रकदृष्टस्य हि द्वितीयचन्द्रस्य नात्मलाभो नाशो वास्ति । विद्याविद्ययोस्तद्धर्म्मत्वमिति चेन्न । प्रत्यक्षत्वात् । विवेकावि-वेकौ रूपादिवत् प्रत्यक्षावुपलभ्येतेऽन्तःकरणस्थौ । न हि

---

प्रेति ॥ सुषुप्ते द्वितीयस्याग्रहणमपि स्वयरूपाविद्याकृतं न तु भेदाभाव-निबन्धनमतो यदुक्तं सुषुप्ते सर्व्वात्मकब्रह्मभूतो जीवः स्वव्यतिरिक्तमभावा-देव न पश्यतीति तदसदित्यर्थः । सतोऽपि द्वितीयस्याविद्यावशादग्रहण-मिति कोऽर्थः किं ग्रहणः प्रागभावो जायते उताप्रकाशारोपः किं वाऽग्र-हणाकाराविकृतस्वरूपावस्थानम् । नाद्यः । प्रागभावस्यानादित्वाभ्युप-गमात् । न द्वितीयः । परैर्द्वितीयस्याः स्वप्रकाशतास्वाभाव्याभ्युपगमेना-प्रकाशारोपानभ्युपगमात् प्रकाशारोपे च सर्व्वस्य स्वप्रकाशब्रह्मात्मताया अभ्युपगन्तव्यत्वेनाद्वैतस्यैवेहितसिद्धिप्रसङ्गात् । न तृतीय इत्याह । न स्वाभाविकत्वादिति ॥ अविकृतस्वरूपावस्थानं नाविद्याकार्य्यमनागन्तु-कत्वादित्यर्थः ॥ एतत् स्फुटयति । इष्टस्य हीत्यादिना ॥ सत्त्वं इष्टमुच्यते स्वातन्त्र्यसिद्ध्यभिप्रायेण न वैशेषिकाभिप्रायेण क्रियावद्गुणवत्-समवायिकारणं द्रव्यं मानाभावादिति द्रष्टव्यम् । अविक्रियेति विक्रिया-

एतं मनोमयमात्मानमुपसङ्क्रामति । एतं वि-

---

रूपस्य प्रत्यक्षस्य सतो दृष्टृधर्म्मत्वम् । अविद्या च स्वानुभ-
वेन रूप्यते मूढोऽहमविविक्तं मम विज्ञानमिति तथा विद्या-
विवेकोऽनुभूयते । उपदिशन्ति चान्येभ्य आत्मनो विद्यां
बुद्धा । तथा चान्येऽवधारयन्ति तस्मान्नामरूपपक्षस्यैव
विद्याविद्ये नामरूपे च नात्मधर्म्मौ नामरूपयोर्निर्वोढते
यदन्तरा तद्ब्रह्मेति श्रुत्यन्तरात् । ते च पुनर्नामरूपे
सवितर्य्यहोरात्रे इव कल्पिते न परमार्थतो विद्यमानेऽ-
भेदे एतमानन्दमयमात्मानमुपसङ्क्रामतीति कर्म्मकर्तृत्वा-
नुपपत्तिरिति चेन्न । विज्ञानमात्रत्वात्सङ्क्रमणस्य । न
जलूकादिवत्सङ्क्रमणमिहोपदिश्यते किं तर्हि विज्ञानमात्रं
सङ्क्रमणश्रुतेरर्थः । ननु मुख्यमेव सङ्क्रमणं श्रूयते उप-

---

भावोपलक्ष्यं स्वरूपमनपेक्षसिद्धत्वादित्यर्थः । च कृष्णादिविक्रिया न
स्वाभाविकी परापेक्षत्वात् स्फटिकलौहित्यवदित्यर्थः ॥ यदुक्तमनपेक्षसिद्ध-
त्वादविक्रियत्वमिति तत् स्फुटयति । यद्धीति ॥ एवं स्वमते चित्सत्ता-
व्यतिरिक्तेश्वरस्य भयहेतोरभावादभयं विदुषः सम्भवतीत्युपपाद्य द्वैति-
पक्षे तदसम्भवमाह । येषामिति ॥ सतोऽन्यस्य स्वरूपे स्थिते नष्टे वा
नाभूद्ध्वंसो व्याघातात्तदवस्थानाच्च ॥ तर्ह्यसत एव भयस्योत्पादेऽभयप्राप्ति-
र्भविष्यतीत्याशङ्क्याह । नचासत इति ॥ व्यतिरिक्तेश्वरस्य सत्तामात्रेण न
भयहेतुत्वं किन्तु प्राप्तिकृतधर्म्माद्यपेक्षस्य तु तदभावादभयं भविष्यतीत्या-
शङ्क्य नैतत्पक्षेण वाच्यम् । अधर्म्मादेरपि सतस्तेनात्यन्तनाशस्यानङ्गी-
कारान्नैयायिकादिमतेऽपि सति हेतौ कार्य्योत्पन्नाभावस्य दुरवधारणत्वा-
च्चेनापि वाच्यमित्याह । न तस्यापीति ॥ किञ्च यच्चेदसत्त्वमापद्यते
अधर्म्मादिकं तर्ह्यात्मन्यपि कः प्रबाधकस्तस्मात् स्वभाववैपरीत्यं सतोऽसत्त्व-

ज्ञानमयमात्मानमुपसङ्क्रामति । एतमानन्दम-

---

सङ्क्रामतीति चेन्न । अन्नमयेऽदर्शनात् । न ह्यन्नमयमुप-
सङ्क्रामतो बाह्यादस्माज्जलूकावत्सङ्क्रमणं दृश्यतेऽन्यथा
वा ॥ मनोमयस्य बहिर्निर्गतस्य विज्ञानमयस्य वा पुनः प्रत्या-
वृत्त्यात्मसङ्क्रमणमिति चेन्न । स्वात्मनि विक्रियाविरोधा-
दन्योऽन्नमयमुपसङ्क्रामतीति प्रकृत्य मनोमयो विज्ञानमयो
वा स्वात्मानमेवोपसङ्क्रामतीति विरोधः स्यात् । तथा
नानन्दमयस्यात्मसङ्क्रमणमुपपद्यते । तस्मान्न प्राप्तिः
सङ्क्रमणं नाप्यन्नमयादीनामन्यतमकर्तृकं पारिशेष्याद-
न्नमयाद्यानन्दमयान्तात्मव्यतिरिक्तकर्तृकं ज्ञानमात्रञ्च
सङ्क्रमणमुपपद्यते ज्ञानमात्रत्वे चानन्दमयान्तस्थस्यैव
सर्व्वान्तरस्याकाशाद्यन्नमयान्तं कार्य्यं सृष्ट्वाऽनुप्रविष्टस्य हृद-
यगुहाभिसम्बन्धादन्नमयादिष्वनात्मस्वात्मविभ्रमासङ्क्रमणा-

---

गमनं कस्यापि मते न घटत इत्याह । अदर्शनादिति ॥ स्वमतं निगम-
यति । एकत्वपक्ष इति ॥ अविद्याकल्पितं भयं विद्यया निवर्त्तत इति
वदतो विद्याविद्ययोरात्मधर्म्मत्वमिष्टं ततो धर्म्मोत्पादविनाशयोर्विका-
रित्वमनित्यत्वं च प्रसज्येतेति शङ्कते । विद्याविद्ययोरिति ॥ कल्पि-
तयोर्विद्याविद्ययोरात्मनि भयाभयहेतुत्वसम्भवाद्वात्मधर्म्मत्वे प्रमाण-
मस्ति प्रत्युत वैधत्वाद्रूपादिवदात्मधर्म्मत्वं नास्तीत्यनुमातुं शक्यत इ-
त्याह । न प्रत्यक्षत्वादिति ॥ चिन्मात्रतत्त्वमानादिरनिर्वाच्याविद्यान्तः-
करणरूपेण परिणमते तच्चान्तःकरणं तामसराजसात्त्विकावस्थाभेदेन
भ्रान्तिसम्यक्ज्ञानाकारेण परिणमते तस्मिन् प्रतिबिम्बितचिधातुः
स्वोपाधिधर्म्मेणैव भ्रान्तः सम्यक्दर्शीति च व्यवह्रियते न तत्त्वतो
विद्याविद्यावत्त्वमित्याह । ते च पुनरिति ॥ उक्तन्यायेन ब्रह्मवित्तो

यमात्मानमुपसङ्क्रामति तदप्येष श्लोको भवति॥

इत्यष्टमोऽनुवाकः॥ ८॥

---

अविवेकमात्रोत्पन्नत्वा विनश्यति तदेतस्मिन्नविद्याविभ्रमनाशे सङ्क्रमणशब्द उपचर्यते न ह्यन्यथा सर्वगतस्यात्मनः सङ्क्रमणमुपपद्यते वस्त्वन्तराभावाच्च। न च स्वात्मन एव सङ्क्रमणम्। न हि जलूकात्मानमेव सङ्क्रामति। तस्मात्सत्यं ज्ञानमनन्तं ब्रह्मेति यथोक्तलक्षणात्मप्रतिपत्त्यर्थमेव बहुभवनसर्गप्रवेशरसभयाभयसङ्क्रमणादिपरिकल्प्यते ब्रह्मणि संव्यवहारादिविषये न तु परमार्थतो निर्विकल्पे ब्रह्मणि कश्चिदपि विकल्प उपपद्यते। तमेतं निर्विकल्पमात्मानमेवं क्रमेणोपसङ्क्रम्य विदित्वा न बिभेति कुतश्चनाभयं प्रतिष्ठां विन्दत इत्येतस्मिन्नर्थेऽप्येष श्लोको भवति। सर्वस्यै-

---

ब्रह्माभिन्न इत्युक्तम्॥ तत्र परोक्तसङ्क्राम्य निरस्यति। अभेद इत्या-
दिना॥ नानन्दमयः परमात्मा न च तत्र प्रवेशः सङ्क्रमणं किन्तु वि-
षयप्रत्यगात्मनोर्नानन्दमयस्यात्मतया प्राग्निर्गृहीतस्यातिक्रमणं बाधो-
ऽत्र विवक्षित इत्यर्थः। अन्यथा चेति॥ नीडे पक्षिप्रवेशवदित्यर्थः॥
यद्यप्यनवद्ये सुखं सङ्क्रमणं न सम्भवति तथापि मनोबुद्ध्योर्विविक्ते
मदुत्पत्तौ व्याहत स्वरूपेऽवस्थानं सङ्क्रमणं दृष्टं तथा दुःखिन आनन्द-
मयस्य स्वरूपेऽवस्थानं सङ्क्रमणं भविष्यतीत्याह। मनोमयस्येति॥ स्वरू-
पावस्थानस्यागन्तुकत्वात्क्रमविरोधाच्च न तन्मुख्यसङ्क्रमणमित्याह।
नेति॥ ज्ञानमात्रत्वे वा सङ्क्रमणस्य किं फलतीत्यत आह। ज्ञान-
मात्रत्वे चेति॥ तस्यासम्भवे गौणार्थपरत्वं न्याय्यमेवातोऽधिष्ठान-
याथात्म्यप्रतिवेधविशिष्टस्याध्यस्तस्य बाधनमेव सङ्क्रमणं फलतीति भावः॥
इतश्च न मुख्यं सङ्क्रमणमन्वेषणीयमित्याह। वस्त्वन्तराभावाच्चेति॥ सङ्-

यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्च-नेति। एतꣳ ह वाव न तपति। किमहꣳ साधु नाकरवम्। किमहं पापमकरवमिति। स य एवं विद्वानेते आत्मानꣳ स्पृणुते। उभे ह्येवैष एते आत्मानꣳ स्पृणुते। य एवं वेद।

---

अस्य प्रकरणस्यानन्दवल्ल्यर्थस्य सङ्क्षेपतः प्रकाशनायैव मन्त्रो भवति॥ इत्यष्टमोऽनुवाकः॥ ८॥

यतो यस्मान्निर्विकल्पाद्यथोक्तलक्षणादद्वयानन्दात्मनो वाचोऽभिधानानि द्रव्यादिसविकल्पवस्तुविषयाणि वस्तुसामान्यान्निर्विकल्पेऽद्वयेऽपि ब्रह्मणि प्रयोक्तृभिः प्रका-शनाय प्रयुज्यमानानि अप्राप्याप्रकाश्यैव निवर्तन्ते। स्वसा-मर्थ्याद्धीयन्ते। मन इति प्रत्ययो विज्ञानम्। तच्च यत्रा-ऽभिधानं प्रवृत्तमतीन्द्रियेऽप्यर्थे तदर्थेव प्रवर्तते प्रकाशनाय। यत्र विज्ञानं तत्र वाचः प्रवृत्तिः। तस्मात्सहैव वाङ्-मनसयोरभिधानप्रत्यययोः प्रवृत्तिः सर्वत्र। तस्माद्ब्रह्म-प्रकाशनाय सर्वथा प्रयोक्तृभिः प्रयुज्यमाना अपि वाचो यस्मादप्रत्ययविषयादनभिधेयाददृश्यादि विशेषणात्सहैव

---

क्रमणस्यौपचारिकत्वं व्याख्याय प्रकरणस्य महत्तात्पर्यमुपसंहारव्याजेनाह। तदाहेति॥ इत्यष्टमोऽनुवाकः॥ ८॥

साध्वसाधुनी न स्तः प्रकाशेते चेति आत्मप्रकाशनात्तत्त्वमेव तयोः स्वरूपं ततोऽतिरिक्तं पदार्थान्तरत्वं नास्तीति विशेषरूपं तत्र वस्तु सत्-

इत्युपनिषत् ॥ इति नवमोऽनुवाकः ॥ ९ ॥
अन्नादिदमयमिदमेकविꣳशतिरन्नादन्नरसमया-
दन्नात्प्राणो व्यानोऽपान आकाशः पृथिवी
पुच्छꣳ षड्विꣳशतिः प्राणं यजुरृक्सामादेशो-
ऽथर्वाङ्गिरसः पुच्छं द्वाविꣳशतिर्यतश्रद्धर्त्तꣳ सत्यं
योगो महोष्टादशविज्ञानं प्रियं मोदः प्रमोद

---

मनसा विज्ञानेन सर्वप्रकाशनसमर्थेन निवर्तन्ते तं ब्रह्मण
आनन्दं श्रोत्रियस्याऽवृजिनस्याऽकामहतस्य सर्वैषणा-
विनिर्मुक्तस्यात्मभूतं विषयविषयिसम्बन्धविनिर्मुक्तं स्वाभा-
विकं नित्यमविभक्तं परमानन्दं ब्रह्मणो विद्वान् यथोक्तेन
विधिना न बिभेति कुतश्चन निमित्ताभावात्। नहि
तस्माद्विदुषोऽन्यद्वस्त्वन्तरमस्ति वस्तु भिन्नम्। यतो बिभेति
ह्यविद्यया यदोदरमन्तरं कुरुते। अथ तस्य भयं भवतीति
ह्युक्तम्। विदुषश्चाविद्याकार्य्यस्य तैमिरिकदृष्टद्वितीयाच-
न्द्रवन्नाशाद्भयनिमित्तस्य न बिभेति कुतश्चनेति युज्यन्ते।
मनोमये चोदाहृतो मन्त्रो मनसो ब्रह्मविज्ञानसाधनत्वात्।
तत्र ब्रह्मत्वमध्यारोप्य तत्स्तुत्यर्थं न बिभेति कदाचनेति
भयमात्रं प्रतिषिद्धमिहाद्वैतविषये न बिभेति कुतश्चनेति
भयनिमित्तमेव प्रतिषिध्यते। नन्वस्ति भयनिमित्तं साध्व-

---

प्रकाशान्यत्वे नासत्त्वादप्रकाशमानत्वाञ्चेत्यभिप्रेत्याह। स्वेन विशेष-
रूपेणेति॥ आत्मैवाविद्यया साध्वसाधुरूपेण प्रतिपन्न आसीत् इदा-
नीन्तु ये साध्वसाधुनी अर्थानर्थहेतू बभुवतुस्ते आत्मैवेति ज्ञानेन स्वात्मानं

आनन्दो ब्रह्म पुच्छं द्वाविꣳशतिरसन्नेवाथाष्टा-
विꣳशतिरसत्षोडश भीषास्मान्मानुषो मनुष्यग-
न्धर्वाणां देवगन्धर्वाणां पितृणां चिरलोकलोका-
नामाजानजानां कर्मदेवानां ये कर्मणा देवा-
नामिन्द्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणः स यश्च
सङ्क्रामत्येकपञ्चाशच्छतः कुतश्च नैतमेकादश नव ॥

---

करणं पापक्रिया च। नैवं कार्यमित्युच्यते एतं यथोक्तमे-
वंविदं ह वावेत्यवधारणार्थौ। न तपति नोद्वेजयति
नात्यन्तं तापयति। कथं पुनः साधुकरणं पापक्रिया
च न तपतीत्युच्यते। किं कस्मात्साधु शोभनं कर्म नाकरवं
न कृतवानस्मीति पश्चात्सन्तापो भवत्यासन्ने मरणकाले।
तथा किं कस्मात्पापं प्रतिषिद्धं कर्माकरवं कृतवानस्मीति
च नरकपतनादिदुःखभयात्तापो भवति। त एते साधु-
करणपापक्रिये एवमेनं न तपतो यथाऽविद्वांसं तपतः।
कस्मात्पुनर्विद्वांसं न तपत इत्युच्यते स य एवंविद्वानेते
साध्वसाधुनी तापहेतू इत्यात्मानं स्पृणुते प्रीणयति
बलयति वा परमात्मभावेनोभे पश्यतीत्यर्थः। उभे पुण्य-
पापे हि यस्मादेवमेष विद्वानेते आत्मानमात्मरूपेणैव

---

साध्वसाधुकरणेन प्रीणयत्येव लोकदृष्ट्या निष्पाद्यमाने पुण्यपापे दृष्टा।
दृश्यते च विद्वान् न बिभेतीत्याह। स्पृणुत एवेति॥ इति नवमोऽनु-
वाकः ॥९॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपाद-

सह नाववतु। माविद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः। ब्रह्मविद्य एवं वेदेत्युपनिषत् ॥ इति ब्रह्मानन्दवल्ली ॥ ॐ तत्सत् ॥

हरिः ॐ ॥ सहनाववतु। सह नौ भुनक्तु। सह वीर्य्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषामहै। ॐ शान्तिः शान्तिः शान्तिः ॥

---

पुण्यपापे स्वेन शेषरूपेण शून्ये कृत्वा आत्मानं स्पृणुत एव। को य एवं वेद यथोक्तमद्वैतमानन्दं ब्रह्म वेद तस्यात्मभावेन दृष्टे पुण्य पापे निर्वीर्य्यतापके जन्मारम्भके न भवत इतीयमेवं यथोक्ताऽस्यां वल्ल्यां ब्रह्मविद्योपनिषत्सर्व्वाभ्यो विद्याभ्यः परमरहस्यं दर्शितमित्यर्थः। परं श्रेयोऽस्यां निषसमिति ॥ इति नवमोऽनुवाकः ॥ ९ ॥ इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीगोविन्द भगवत्पूज्यपादशिष्यस्य श्रीशङ्करभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्ये ब्रह्मानन्दवल्ली नाम द्वितीयोऽध्यायः ॥ २ ॥

ॐ सत्यं ज्ञानमनन्तं ब्रह्म आकाशादिकार्य्यमन्नमयान्तं सृष्ट्वा तदेवानुप्रविष्टं विशेषवदिवोपलभ्यमानं यस्मात्तस्मात्सर्व्वकार्य्य विलक्षणमदृश्यादिधर्मकमेवानन्दं तदेवाहमिति विजानीयादनुप्रवेशस्य तदर्थत्वात् तस्यैवं विजानतः

---

शिष्यभगवदानन्द ज्ञान विरचिते तैत्तिरीयोपनिषद्भाष्यटीकायां ब्रह्मानन्दवल्लीनाम द्वितीयोऽध्यायः ॥ २ ॥ ॐ तत्सत् ॥

वृत्तानुवादपूर्व्वकमुत्तरवल्लीसम्बन्धमाह। सत्यं ज्ञानमित्यादिना। तप इति पदार्थ विवरणं वाक्यार्थ ज्ञान साधनमित्यर्थः। अधीहीत्यध्यापय

भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते ।

---

शुभाशुभ कर्मणी जन्मान्तरारम्भके न भवत इत्येवमानन्दवल्ल्यां विवक्षितोऽर्थः । परिसमाप्ता च ब्रह्मविद्या । अतःपरं ब्रह्मविद्या साधनं तपो वक्तव्यमन्नमयादिविषयाणि चोपासनान्युक्तानीत्यतः पूर्ववच्छान्ति पाठ पूर्वकमिदमारभ्यते । आख्यायिका विद्यास्तुतये प्रियाय पुत्राय पित्रोक्तेति भृगुर्वै वारुणिः । वैशब्दः प्रसिद्धानुस्मारको भृगुरित्येवंनामा प्रसिद्धोऽनुस्मार्यते । वारुणिर्वरुणस्यापत्यं वारुणिर्वरुणं पितरं ब्रह्म-विजिज्ञासुरुपससारोपगतवान् अधीहि भगवो ब्रह्मेत्यनेन मन्त्रेण । अधीह्यध्यापय कथय । स च पिता विधिवदुपसन्नाय तस्मै पुत्रायैतद्वचनं प्रोवाचान्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । अन्नं शरीरं तदभ्यन्तरश्च प्राणमन्तरमुपलब्धिसाधनानि चक्षुः श्रोत्रं मनो वाचमित्येतानि ब्रह्मोपलब्धौ द्वाराण्युक्तवान् ।

---

स्मारय । इक् स्मरणे इति धातुपाठादित्यर्थः । ब्रह्मोपलब्धाविति लक्ष्यत्वमर्थविवेकाय द्वाराणि शरीरादिचेष्टाऽन्यथानुपपत्त्या हि साक्षिभूतचिद्धातुर्विविच्यत इति भावः । न केवलमर्थज्ञानं वाक्यार्थज्ञानसाधनं किन्तु तत्पदार्थज्ञानमपीत्यभिप्रेत्य तदर्थस्य ब्रह्मणो लक्षणमुक्तवानित्यर्थः । याव-

येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व तद्ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥ इति प्रथमोऽनुवाकः॥ १॥

अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्वि-

---

उक्त्वा च द्वारभूतान्येतान्यन्नादीनि तं भृगुं होवाच। ब्रह्मणो लक्षणं किन्तत् यतो यस्माद्वै इमानि ब्रह्मादीनि स्तम्बपर्यन्तानि भूतानि जायन्ते। येन च जातानि जीवन्ति प्राणान्धारयन्ति वर्द्धन्ते। विनाशकाले च यत्प्रयन्ति यद्ब्रह्म प्रतिगच्छन्ति अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते उत्पत्तिस्थितिलयकालेषु यदात्मतां न जहाति भूतदेहं तद्ब्रह्मणो लक्षणम्। तद्ब्रह्म विजिज्ञासस्व विशेषेण ज्ञातुमिच्छस्व। यदेवं लक्षणं ब्रह्म तदन्नादिद्वारेण प्रतिपद्यस्वेत्यर्थः। श्रुत्यन्तरञ्च प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनो ये विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्यमिति। ब्रह्मोपलब्धौ द्वाराण्येतानि दर्शयति। स भृगुर्ब्रह्मोपलब्धिद्वाराणि ब्रह्म लक्षणं च श्रुत्वा पितुस्तप एव ब्रह्मोपलब्धिसाधनत्वेनाऽतप्यत तप्तवान्। कुतः पुनरनुपदिष्टस्यैव

---

येनोक्तेरिति पदार्थोपलक्षणस्यैवाभिधानादखण्डवाक्यार्थस्याप्रतिपादनात् पदार्थभेदज्ञानाच्च पुरुषार्थसम्भवदुद्दरमन्तरं कुतस्त इति निमित्तत्वादतो वाक्यार्थावगतिपर्यन्तं तात्पर्येण लक्ष्यपदार्थविवरणाकाङ्क्षा-नुष्ठितवानित्यर्थः॥ स तपस्तप्त्वेति कृत्वेदं पित्रोक्तं लक्षणं परिपूर्णं भवतीत्येकाग्रेण चेतसा पर्यालोच्यान्नं ब्रह्मेति व्यजानात्। कथते

मानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा ॥ द्वितीयोऽनुवाकः ॥ २ ॥

---

तपसः साधनत्वप्रतिपत्तिर्भृगोः सावशेषोक्तेरन्नादि-ब्रह्मणः प्रतिपत्तौ द्वारं लक्षणं च यतो वा इमानि भूतानीत्युक्तवान्। सावशेषं हि तत्साक्षाद्ब्रह्मणो निर्द्देशात्। अन्यथा हि स्वरूपेणैव ब्रह्म निर्द्देष्टव्यं जिज्ञासवे पुत्रायेदमित्थंरूपं ब्रह्मेति। नैवं निरदिशत् किन्तर्हि सावशेषमेवोक्तवान्। अतोऽवगम्यते नूनं साधनान्तरमप्यपेक्षते पिता ब्रह्मविज्ञानं प्रतीति। तयोर्विशेषप्रतिपत्तिस्तु सर्व्वसाधकतमत्वात्सर्व्वेषां हि नियतसाध्यविषयाणां साधनानां तप एव साधकतमम्। साधनमिति हि प्रसिद्धं लोके। तस्मात् पित्रानुपदिष्टमपि ब्रह्मविज्ञानसाधनत्वेन तपः प्रतिपेदे भृगुः। तच्च तपो बाह्यान्तःकरणसमाधानं तद्द्वारकत्वात् ब्रह्मप्रतिपत्तेः। मनसश्चेन्द्रियाणाञ्चैकाग्र्यं परमं तपः तज्ज्यायः। सर्वधर्मेभ्यः स धर्मः पर उच्यत इति स्मृतेः।

---

भुज्यते सर्व्वैरिति सर्व्वप्रतिपत्तिसाधारणं स्थूलदेहकारणं भूतपञ्चकं विराट्सञ्ज्ञकमन्नशब्देनोच्यते। तस्य स्थूलभौतिककारणत्वात्। यतो वा इमानीति लक्षणस्य तत्र योजयितुं शक्यत्वात्तद्ब्रह्मेति प्रतिपन्नवानित्यर्थः ॥

प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा ॥ तृतीयोऽनुवाकः ॥ ३ ॥

मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते। मनसा जातानि

---

स च तपस्तप्त्वा अन्नं ब्रह्मेति व्यजानाद्विज्ञातवान्। तद्धि यथोक्तलक्षणोपेतम्। कथम् अन्नाद्ध्येव खल्विमानि भूतानि जायन्तेऽन्नेन जातानि जीवन्ति अन्नं प्रयन्ति अभिसंविशन्तीति। तस्माद्युक्तमन्नस्य ब्रह्मत्वमित्यभिप्रायः। स एवं तपस्तप्त्वाऽन्नं ब्रह्मेति विज्ञाय लक्षणेनोपपत्त्या च पुनरेव संशयमापन्नो वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। कः पुनः संशयहेतुरित्युच्यते। अन्नस्योत्पत्तिदर्शनात्तपसः पुनः पुनरुपदेशः साधनातिशयत्वावधारणार्थः। यावद्ब्रह्मणो लक्षणं निरतिशयं न भवति

---

विराज उत्पत्तिदर्शनाच्छ्रुतिस्मृतिषु लक्षणं तत्र सम्पूर्णं न भवतीति पुनस्तपोऽतप्यत विचार्य च तत्कारणं क्रियाशक्तिविषयतया प्राणशब्द-लक्ष्यं हिरण्यगर्भं सकलाध्यवसायशक्तिविशिष्टतया च मनोविज्ञानशब्द-लक्ष्यं ब्रह्मेति व्यजानात्तस्यापि कार्यत्वाल्लक्षणं न भवतीति विचार्य

जीवन्ति। मनः प्रयन्त्यभिसंविशन्तीति। तद्वि-
ज्ञाय। पुनरेव वरुणं पितरमुपससार। अधी
हि भगवो ब्रह्मेति। तꣳ होवाच। तपसा
ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपो-
ऽतप्यत। स तपस्तप्त्वा॥ चतुर्थोऽनुवाकः॥ ४॥

विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव
खल्विमानि भूतानि जायन्ते। विज्ञानेन जा-
तानि जीवन्ति। विज्ञानं प्रयन्त्यभिसंविशन्तीति।
तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार।
अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा
ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपो-
ऽतप्यत। स तपस्तप्त्वा॥ पञ्चमोऽनुवाकः॥ ५॥

---

यावद्ब्रह्म जिज्ञासा न निवर्त्तते तावत्तप एव ते सा-
धनम्॥ तपसा एव ब्रह्म जिज्ञासस्वेत्यर्थः। ऋज्वन्यत्। एवं
तपसा विशुद्धात्मा प्राणादिषु साकल्येन ब्रह्मलक्षणमपश्य-
च्छनैः शनैरनुप्रविश्यान्तरतममानन्दं ब्रह्म विज्ञातवांस्त-
पसा एव साधनेन भृगुस्तस्माद्ब्रह्मविजिज्ञासुना बाह्यान्तः-
करणसमाधानलक्षणं परमं तपःसाधनमनुष्ठेयमिति प्रक-
रणार्थः॥

---

तत्कारणं ख्यातत्वेन निश्चित्य सर्वैः प्रार्थ्यमानतयानन्दशब्दवाच्यं माया-
विशिष्टं ब्रह्मेति विज्ञाय विशिष्टस्याविशिष्टान्तरात्मत्वानुपपत्तेः कार-
णत्वोपलक्षितं विशुद्धानन्दं ब्रह्मेति विज्ञातवानित्यर्थः॥

आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति। सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता। स य एवं वेद प्रतितिष्ठति।

---

अधुनाऽऽख्यायिकातोऽपहृत्य श्रुतिः स्वेन वचनेनाख्यायिकानिर्वर्त्त्यमर्थमाचष्टे। सा एषा भार्गवी भृगुणा विदिता वरुणेन प्रोक्ता वारुणी विद्या परमे व्योमन् हृदयाकाशगुहायां परमानन्देऽद्वैते प्रतिष्ठिता परिसमाप्ता अन्नमयादात्मनोऽधिप्रवृत्ता। एवमन्योऽपि तपसा एव साधनेन। अनेनैव क्रमेणानुप्रविश्यानन्दं ब्रह्म वेद। स एवं विद्याप्रतिष्ठानात्प्रतितिष्ठत्यानन्दे परमे ब्रह्मणि ब्रह्मैव भवतीत्यर्थः। दृष्टञ्च फलं तस्योच्यते। अन्नवान् प्रभूतमन्नमस्य विद्यत इत्यान्नवान्। सत्तामात्रेण तु सर्व्वो ह्यन्नवानिति विद्याया विशेषो न स्यात्। एवमन्नमत्तीत्यान्नादो दीप्ताग्निर्भवतीत्यर्थः। महान् भवति। केन महत्त्वमित्यत आह। प्रजया

---

प्रभूतत्वविशेषणं न श्रुतं कथं निक्षिप्यत इत्याशङ्क्याह। सत्तामात्रेणेति॥ अत्र सत्तामात्रे विनिक्षिप्ते श्वशूकरादेरपि शरीरस्थित्याक्षिप्तान्नेनान्नवानिति विद्यायाः फलविशेषो नोक्तः स्यादतस्तद्वत्वात्प्रभूतत्वविशेषणं निक्षिप्तमित्यर्थः। यस्येश्वरस्यानुग्रहात् अविदुषामप्यन्नादिसम्पत्तिर्दृश्यतेऽद्योच्छिष्टस्तावरमित्युक्तत्वात्। किन्तु तदात्मत्वं साक्षादनुभवत इति अन्नं प्राप्तं न निन्द्यात् यदृच्छयोपपन्नम्। एतच्च दृष्टफलं

अन्नवानन्नादो भवति । महान् भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ षष्ठोऽनु-वाकः ॥ ६ ॥

अन्नं न निन्द्यात् । तद्व्रतम् । प्राणो वान्नम् ।

---

पुत्रादिना पशुभिर्गवाश्वादिभिर्ब्रह्मवर्चसेन शमदमज्ञा-नादिनिमित्तेन तेजसा महान् भवति कीर्त्या ख्यात्या शुभ-प्रचारनिमित्तया साक्षादनुभवतीत्यर्थः । किञ्चान्नेन द्वार-भूतेन ब्रह्म विज्ञातं यस्मात्तस्माद्गुरुमिवान्नं न निन्द्यात्तद-स्यैवं ब्रह्मविदो व्रतमुपदिश्यते व्रतोपदेशोऽन्नस्तुतये स्तुति-भाक्त्वञ्चान्नस्य ब्रह्मोपलब्ध्युपायत्वात् । प्राणो वाऽन्नम् । शरीरान्तर्भावात्प्राणस्य । यद्यस्यान्तः प्रतिष्ठितं भवति तत्तस्यान्नं भवतीति ॥

शरीरे च प्राणः प्रतिष्ठितस्तस्मात्प्राणोऽन्नं शरीरम-

---

ब्रह्मविदो जीवन्मुक्तस्याप्यविद्यालेशवशाद्द्वैताभासं पश्यतो नानुपपन्नं यथेश्वरस्यानुग्रहादविदुषामपि फलादिसमृद्धिर्दृश्यते किमुत तदात्म-तत्त्वम् । अन्यथा पतितं प्राप्तं न निन्द्यात् यद्व्रतमुपपन्नम् । यद्योऽभिहर-स्तुतावरमित्युक्तत्वात् । ब्रह्मविदो नियमाभिधानं साधकस्यानुष्ठाना-र्थम् । एवं वाक्यार्थज्ञाने कर्मपदार्थानुसन्धानं मुख्यं साधनं तत्फलं चोपसंहृत्याधुना विचाराक्षमस्य मन्दाधिकारिणोऽन्नाद्यपेक्ष प्राणाद्युपासनं गौणं साधनं विधत्ते । प्राणो वाऽन्नमित्यादिना ॥ उपा-सनमपि फलानभिसन्धिनानुष्ठितं बुद्धिद्वारेण ब्रह्मज्ञानायोपकरोतीत्युक्तं मुख्याधिकारिणस्तदपवादायोपदर्श्यते ॥

यत्र यागादौ यत्फलं कार्यं क्षेमादीत्यर्थः । महानिति प्रजादिभि-

शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति। प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥ सप्तमोऽनुवाकः॥ ७॥

---

न्नादम्। तथा शरीरमप्यन्नं प्राणोऽन्नादः। कस्मात्प्राणे शरीरं प्रतिष्ठितम्। तन्निमित्तत्वाच्छरीरस्थितेः। तस्मादेतदुभयं शरीरं प्राणश्चान्नमन्नादश्च। येनान्योन्यस्मिन्प्रतिष्ठितं तेनान्नम्। येनान्योन्यस्य प्रतिष्ठा तेनान्नादः। तस्मात्प्राणः शरीरञ्चोभयमन्नमन्नादि च। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठत्यन्नान्नादात्मनैव। किञ्चान्नवानन्नादो भवतीत्यादि पूर्ववत्। अन्नं न परिचक्षीत न परिहरेत। तद्व्रतं पूर्ववत्स्तुत्यर्थम्। तदेवं शुभाशुभकल्पनयाऽपरिह्रीयमाणं स्तुतं महीकृतमन्नं स्यादेवं यथोक्तमुत्तरेष्वप्याऽपो वा अन्नमित्यादिषु योजयेत्। अप्सु ज्योतिरिति अवज्यो-

---

र्ब्रह्मवानिति। स्थूलभोगसाधनवान् विराडेवेत्यर्थः॥ श्रुत्यन्तरप्रसिद्धेरिति। य एवमेताः पञ्च देवता वायुर्वाव संवर्ग इत्यादिश्रुत्यन्तराद्ब्रह्मणः संहर्तृत्वं वायुद्वारकमिति वायुर्ब्रह्मणः परिमरः संहारसाधनमित्यर्थः॥ तत्कथं परिमरगुणतयाऽऽकाशोपासनं विधीयतेत्यत आह। स इति॥ एवं मन्दाधिकारिगोचरमुपासनजातमध्यारोपावस्थायामुपदिश्य संवादहृष्टमभिप्रेत्याह। प्राणो वाऽन्नमित्यादिना॥

अन्नं न परिचक्षीत। तद्व्रतम्। आपो वा ऽन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति। प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥ अष्टमोऽनुवाकः॥ ८॥

---

तयोरन्नान्नादगुणत्वेनोपासकस्यान्नस्य बहुकरणं व्रतम्। तथा पृथिव्यामाकाशोपासकस्य वसतौ च वसतिनिमित्तं कञ्चन कञ्चिदपि न प्रत्याचक्षीत वसत्यर्थमागतं न निवारयेदित्यर्थः। वासे च दत्तेऽवश्यं ह्यशनं दातव्यम्। तस्माद्यया कयाच विधया येन केन प्रकारेण बह्वन्नं प्राप्नुयात् बह्वन्नसङ्ग्रहं कुर्य्यादित्यर्थः। यस्मादन्नवन्तो विद्वांसोऽभ्यागतायान्नार्थिने अराधि संसिद्धमस्मै अन्नमित्याचक्षते न नास्तीति प्रत्याख्यानं कुर्वन्ति तस्माच्च हेतोर्बह्वन्नं प्राप्नुयादिति पूर्वेण सम्बन्धः। अपि चान्नदानस्य माहात्म्यमुच्यते। यथा यत्कालं प्रयच्छत्यन्नं तथा

---

भोक्तृत्वादिलक्षणः संसारः कार्य्यगोचर इति विदुतस्तत्र जीवस्यानौपाधिकसंसारित्वमदृष्टं तस्यापि कार्य्यत्वादिति भागवतानां मतमुद्भाव्य दूषयति। नन्वात्मापीत्यादिना॥ छान्दोग्यश्रुत्यनुसारेण विकाराकारात्मना प्रवेशमाशङ्क्य वाक्यशेषविरोधमाह। अनेन जीवेनेत्यादिना॥ भ्रान्त्या देहादिभावमापन्नस्य जीवस्य ब्रह्मव्यतिरिक्तस्यैव ब्रह्मविकारप-

अन्नं बहु कुर्वीत । तद्व्रतम् । पृथिवी वाऽन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥ नवमोऽनुवाकः ॥ ९ ॥

---

तत्कालमेव प्रत्युपनमते । कथमिति तदेतदाह । एतद्वै अन्नं मुखतो मुख्ये प्रथमे वयसि मुख्यया वा वृत्त्या पूजा-पुरःसरमभ्यागतायान्नार्थिने राद्धं संसिद्धं प्रयच्छतीति वाक्यशेषः । तस्य किं फलं स्यादित्युच्यते । मुखतः पूर्वे वयसि मुख्यया वा वृत्त्याऽस्मै अन्नादायान्नं राध्यते यथा दत्तमुप-तिष्ठत इत्यर्थः एवं मध्यतो मध्यमे वयसि मध्यमेन चोप-चारेण । तथा ततोऽन्ते वयसि जघनेनोपचारेण परिभवेन तथैवास्मै राध्यते संसिद्ध्यत्यन्नम् । य एवं वेद य एवमन्नस्य यथोक्तं माहात्म्यं वेद तद्दानस्य फलं यथोक्तं फलमुपनमेत् इदानीं ब्रह्मण उपासनप्रकार उच्यते । क्षेम इति वाचि क्षेमो नामोपात्तपरिरक्षणं ब्रह्म वाचि क्षेमरूपेण प्रतिष्ठि-तमित्युपास्यम् । योगक्षेम इति योगोऽनुपात्तस्योपादानम् ।

---

दिश्यते संसारित्वापोहार्था । मातृबुद्धिरिव परस्योर्मिति रागापोहार्था । अतस्तत्त्वमसीत्युपदेशस्यान्यार्थत्वात् जीवस्य पारमार्थिकमसंसारि ब्रह्मा-

न कञ्चन वसतौ प्रत्याचक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नं राद्धम् । मुखतोऽस्मा अन्नं राध्यते एतद्वै

---

तौ हि योगक्षेमौ प्राणापानयोर्बलवतोः सतोर्भवतो यद्यपि-तथापि न प्राणापाननिमित्तावेव किन्तर्हि ब्रह्मनिमित्तौ । तस्माद्ब्रह्म योगक्षेमात्मना प्राणापानयोः प्रतिष्ठितमित्युपास्यम् । एवमुत्तरेष्वन्येषु तेन तेनात्मना ब्रह्मैवोपास्यं कर्मणो ब्रह्मनिर्वर्त्त्यत्वाद्धस्तयो कर्मात्मना ब्रह्म प्रतिष्ठितमुपास्यम् । गतिरिति पादयोः । विमुक्तिरिति पायौ । इत्येतामानुषीर्मनुष्येषु भवा मानुष्याः समाज्ञा आध्यात्मिक्यः समाज्ञाः ज्ञानानि विज्ञानान्युपासनानीत्यर्थः ॥ अथानन्तरं दैवीर्दिव्यो देवेषु भवाः समाज्ञा उच्यन्ते । तृप्तिरिति वृष्टौ । वृष्टेरन्नादिद्वारेण तृप्तिहेतुत्वाद्ब्रह्मैव तृप्त्यात्मना वृष्टौ व्यवस्थितमित्युपास्यम् । तथान्येषु तेन तेनात्मना ब्रह्मैवोपास्यम् । तथा बलरूपेण विद्युति ॥ यशोरूपेण पशुषु । ज्योतीरूपेण नक्षत्रेषु । प्रजातिरमृतममृतत्वप्राप्तिः पुत्रेण ऋणविमोक्षद्वारेणानन्दः सुखमित्ये-

---

त्मत्वमित्याशङ्क्य तद्दूषयति । भावान्तरापन्नस्येत्यादिना ॥ अबाधित-तत्पदमुख्यार्थसामानाधिकरण्यविरोधादब्रह्मणि जीवे ब्रह्मत्वसम्पादना-र्थत्वं कल्पितुं न शक्यत इत्यर्थः ॥ संसारित्वग्राहकप्रत्यक्षविरोधादबाधि-तत्वमसिद्धमित्याह । दृष्टमिति ॥ सर्वप्रमाणानामनुग्राहकस्तर्क इष्यते ॥

मध्यतोऽन्नꣳ राद्धम् । मध्यतोऽस्मा अन्नꣳ राध्यते । एतद्वा अन्ततोऽन्नꣳ राद्धम् । अन्ततोऽस्मा अन्नꣳ राध्यते ॥१॥ य एवं वेद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः ।

---

तत्सर्वमुपस्थनिमित्तं ब्रह्मैवानेनात्मनोपस्थे प्रतिष्ठितमित्युपास्यम् सर्व्वं ह्याकाशे प्रतिष्ठितमतो यत्सर्वमाकाशे तद्ब्रह्मैवेत्युपास्यम् । तच्चाकाशं ब्रह्मैव । तस्मात्तत्सर्वस्य प्रतिष्ठेत्युपासीत । प्रतिष्ठागुणोपासनात्प्रतिष्ठावान् भवति । एवं पूर्वेष्वपि । यद्यन्नाधीनं फलं तद्ब्रह्मैव तदुपासनात्तद्वान् भवति इति द्रष्टव्यम् । श्रुत्यन्तराच्च तं यथायथोपासते तदेव भवतीति । तन्मह इत्युपासीत । महो महत्त्वगुणवत्तदुपासीत । महान् भवति । तन्मन इत्युपासीत । मननं मनो मानवान् भवति मननसमर्थो भवति । तन्नम इत्युपासीत । नमनं नमो नमनगुणवदुपासीत । नम्यन्ते प्रह्वीभवन्त्यस्मा उपासित्रे कामाः काम्यन्त इति भोग्याविषया इत्यर्थः । तद्ब्रह्मेत्युपासीत । ब्रह्मपरिवृढतममित्युपासीत । ब्रह्मवांस्तद्गुणो भवति । तद्ब्रह्मणः परिमर इत्युपासीत । ब्रह्मणः परिमरः परिम्रियन्तेऽस्मिन् पञ्च देवताः विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरित्येताः । अतो वायुः परि-

---

आत्मनश्च संसारधर्म्मवत्त्वस्य तर्कापरिशुद्धत्वाच्च प्रत्यक्षस्य भ्रान्तत्वाच्च शास्त्रज्ञानबाधकत्वं सम्भवतीत्याह । नेति ॥ सुखादेरुपलभ्यत्वान्नोपलब्धृधर्म्मत्वं सम्भवति रूपादिवदित्यर्थः ॥ संसारित्वग्राहकं यद्यपि प्रत्यक्षप्रमाणं न भवति तथापि संसारधर्म्मविशिष्ट आत्मा स्वचैतन्येनोपलभ्यत इति

गतिरिति पादयोः। विमुक्तिरिति पायौ। इति मानुषीः समाज्ञाः। अथ दैवीः। तृप्तिरिति वृष्टौ। बलमिति विद्युति ॥ २ ॥ यश इति पशुषु। ज्योतिरिति नक्षत्रेषु। प्रजातिरमृतमानन्द इत्युपस्थे। सर्वमित्याकाशे। तत्प्रतिष्ठेत्युपा-

---

मरः श्रुत्यन्तरप्रसिद्धेः। स एष एवायं वायुराकाशेनावष्ट इत्याकाशो ब्रह्मणः परिमरस्तमाकाशं वाय्वात्मानं ब्रह्मणः परिमर इत्युपासीत। एवमेवंविदं प्रतिस्पर्द्धिनो द्विषन्तोऽद्विषन्तोऽपि सपत्ना यतो भवन्त्यतो विशिष्यन्ते द्विषन्तः सपत्ना इति। प्राणं द्विषन्तः सपत्नास्ते परिम्रि-यन्ते प्राणान् जहतीत्यर्थः। किञ्च ये चाऽप्रिया अस्य भ्रातृव्या अद्विषन्तोऽपि ते च परिम्रियन्ते। प्राणो वाऽन्नं शरीरमन्नादमित्यारभ्याकाशान्तस्य कार्यस्यैवान्ना-न्नादत्वमुक्तम्। उक्तं नाम किं तेन तेनैतत्सिद्धं भवति कार्यविषय एव भोज्यभोक्तृत्व मतः संसारो न त्वात्मनीति। आत्मनि तु भ्रान्त्योपचर्यते॥ नन्वात्मापि परमात्मनः कार्यं ततो युक्तस्य संसार इति। न। असंसारिण एव प्रवेशश्रुतेः। तत्सृष्ट्वा तदेवानुप्राविशदित्याकाशादिकार-

---

णानुभवविरोधाच्च शाब्दमसंसारित्वमात्मनः प्रमाणमिति चेन्नैवदपि युक्तं कर्मत्वकर्तृत्वविरोधादित्यर्थः॥ प्रत्यक्षविरोधाभावेऽप्यनुमानविरोधो भवि-ष्यतीत्याह। नाशादिति॥ नाशादि ग्राह्यं कार्यत्वाद्घटवदन्यथा घटस्या-प्यभावादात्मैव तदाश्रयोऽनुमीयत इति न वाच्यमनुपलभ्यं नोपलभ्युर्धर्माः

सीत। प्रतिष्ठावान् भवति। तन्मह इत्युपासीत। महान् भवति। तन्मन इत्युपासीत। मानवान् भवति ॥ ३ ॥ तन्नम इत्युपासीत। नम्यन्तेऽस्मै कामाः। तद्ब्रह्मेत्युपासीत। ब्रह्मवान् भवति। तद्ब्रह्मणः परिमर इत्युपासीत।

---

यस्य ह्यसंसारिण एव परमात्मनः कार्येष्वनुप्रवेशः श्रूयते। तस्मात्कार्यानुप्रविष्टो जीव आत्मा पर एवासंसारी। सृष्ट्वानुप्राविशदिति समानकर्तृत्वोपपत्तेश्च। सर्गप्रवेशक्रिययोश्चैकश्चेत्कर्त्ता ततः क्त्वाप्रत्ययो युक्तः। प्रविष्टस्य तु भावान्तरापत्तिरिति चेन्न। प्रवेशस्यान्यार्थत्वेन प्रत्याख्यातत्वात्। अनेन जीवेनेति विशेषश्रुतेः। धर्मान्तरेणानुप्रवेश इति चेन्न। तत्त्वमसीति पुनस्तद्भावोक्तेः। भावान्तरापन्नस्यैव तदपोहार्था सम्पदिति चेन्न। तत्सत्यं स आत्मा तत्त्वमसीति सामानाधिकरण्यात्। दृष्टं जीवस्य संसारित्वमिति चेन्न। उपलब्धुरनुपलभ्यत्वात्। संसारधर्मविशिष्ट आत्मोपलभ्यत इति चेन्न। धर्माणां धर्मिणोऽव्यतिरेकात्कर्मत्वानुपपत्तेः। उष्णप्रकाशयोर्दाह्यप्रकाश्यत्वानुपपत्तिवत्त्रासादिदर्शनाद्दुःखित्वाद्यनुमीयत इति चेन्न। त्रासादेर्दुःखस्य चोपलभ्यमानत्वान्नोपलब्धृधर्मत्वम्।

---

क्रमादिवदिति व्याप्तग्रन्तरविरोधादभ्यासादपि कार्यदर्शनसम्भवादित्यर्थः। जीवस्य ब्रह्मात्मत्वं प्रतिपादयतः शास्त्रस्य तर्कशास्त्रविरोधादप्रामाण्यमाशङ्क्य दूषयति। कापिलेत्यादिना॥ तर्कशास्त्रस्य श्रुतेश्च विरुद्धाव्यभिचारित्वेन प्रामाण्यसंशयोऽपि नाशङ्कनीय इत्याह। न्यायप-

पर्य्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ॥ ४ ॥ स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसङ्क्रम्य एतं । मनोमयमात्मानमुपसङ्क्रम्य । एतं विज्ञानमयमात्मान-

---

कापिलकाणादादितर्कशास्त्रविरोध इति चेन्न । तेषां मूलाभावे वेदविरोधे च भ्रान्त्योपपत्तेः । श्रुत्युपपत्तिभ्यां च सिद्धमात्मनोऽसंसारित्वम् । एकत्वाच्च कथमेकत्वमित्युच्यते ॥

स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्येवमादि पूर्ववत् । सर्वं अन्नमयादिक्रमेणानन्दमयमात्मानमुपसंक्रम्यै-तत्साम गायन्नास्ते । सत्यं ज्ञानमित्यस्या ऋचोऽर्थो व्याख्यातो विस्तरेण तद्विवरणभूतयाऽऽनन्दवल्ल्या सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति तस्य फलवचनस्यार्थविस्तारो नोक्तः । के ते किं विषया वा सर्वे कामाः कथं वा ब्रह्मणा सह समश्नुत इत्येतद्वक्तव्यमितीदमिदानीमारभ्यते । तत्र पितापुत्राख्यायिकायां पूर्वविद्याशेषभूतायां तपो ब्रह्मविद्यासाधनमुक्तम् । प्राणादेराकाशान्तस्य च

---

पत्तिभ्यां चेति ॥ किञ्च तार्किकेणापि ईश्वराधीनं जीवस्य सुखित्वं निरूपणीयं न तन्निरूपयितुं शक्यते ॥ स्वात्मनीश्वरस्य सुखदुःखहेतुत्वासम्भवादित्यभिप्रेत्याह । एकत्वाच्चेति ॥

स य इत्यादिपदव्याख्यानमुपेक्ष्योपसङ्क्रमणसामगानयोरेककर्तृत्वम-

मुपसङ्क्रम्य। एतमानन्दमयमात्मानमुपसङ्क्रम्य।
इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्।
एतत्साम गायन्नास्ते। हा३वु हा३वु हा३वु ५॥
अहमन्न१महमन्न१महमन्नम्। अहमन्नादो२ऽह-
मन्नादो २ ऽहमन्नादः। अह७ श्लोो१कृदह७श्लो१
कृदह७श्लो१कृत्। अहमस्मि प्रथमजा ऋता-

---

कार्य्यस्यान्नान्नादत्वेन विनियोगश्चोक्तः। ब्रह्मविषयोपास-
नानि च। ये च सर्वे कामाः प्रतिनियतानेकसाधनसाध्या
आकाशादिकार्य्यभेदविषया एते दर्शिताः। एकत्वे पुनः
कामकामित्वानुपपत्तिः। भेदजातस्य सर्वस्यात्मभूतत्वात्।
तत्र कथं युगपद्ब्रह्मस्वरूपेण सर्व्वान् कामानेवंविदश्नुत
इत्युच्यते। सर्व्वात्मत्वोपपत्तेः। कथं सर्व्वात्मत्वोपपत्तिरि-
त्याह। पुरुषादित्यस्थात्मैकत्वविज्ञानेनोपोह्योत्कर्षापकर्षवन्न-
मयाद्यात्मनोऽविद्याकल्पितान् क्रमेण संक्रम्यानन्दमयान्तान्
सत्यं ज्ञानमनन्तं ब्रह्माऽदृश्यादिधर्मकं स्वाभाविकमानन्दम-
जममृतमभयमद्वैतं फलमापन्ना इमाँल्लोकान् भूरादीननु-
सञ्चरन्निति व्यवहितेन सम्बन्धः। कथमनुसञ्चरन्। का-
मान्नो कामतोऽन्नमस्येति कामान्नी। तथा कामतो रूपाण्य-
स्येति कामरूपी। अनुसञ्चरन् सर्व्वात्मनेमाँल्लोकानात्मत्वे-

---

न्वयप्रदर्शनेन दर्शितमिदानीं वल्लीसमाप्तिपर्य्यन्तस्य ग्रन्थस्य तात्पर्य्यं दृष्टान्तको-
क्तेनेनाह। सत्यं ज्ञानमित्यादिना॥ अविद्यावेशवशेन द्वैतावभासमनुभ-
वन् विद्वान् सर्व्वस्यात्माऽहमिति मन्यमानोऽणिमाद्यैश्वर्य्यभजां योगिनां यद्-

इस्य। पूर्वं देवेभ्योऽमृतस्य ना३भायि। यो मा ददाति स इदेव मा३वाः। अहमन्नमन्नमदन्तमा३द्मि। अहं विश्वं भुवनमभ्यभवा३। सुवर्णज्योतीः। य एवं वेद। इत्युपनिषत्॥ ६॥ राध्यते विद्युति मानवान् भवत्येको हा३वु य एवं वेदैकञ्च॥ इति दशमोऽनुवाकः॥ १०॥

---

नानुभवन्। किमेतत्साम गायन्नास्ते। समत्वाद्ब्रह्मैव साम सर्व्वानन्यरूपं गायन् छन्दयन्नात्मैकत्वं प्रख्यापयन् लोकानुग्रहार्थतद्विज्ञानफलं चातीव कृतार्थत्वं गायन्नास्ते तिष्ठति। हावु हावु हावु अहो इत्येतस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थः। कः पुनरसौ विस्मय इत्युच्यते। अद्वैत आत्मा निरञ्जनोऽपि सन्नहमेवान्नमन्नादश्च। किञ्चाहमेव श्लोककृत्। श्लोको नामान्नान्नादयोः सङ्घातस्तस्य कर्त्ता चेतनावान्। अन्नस्यैव वा परार्थस्यान्नादार्थस्य सतोऽनेकात्मकस्य परार्थेन हेतुना सङ्घातकृत्। त्रिरुक्तिर्विस्मयत्वख्यापनार्था। अहमस्मि भवामि। प्रथमजः प्रथमोत्पन्नः। ऋतस्य सत्यस्य मूर्त्तामूर्त्तस्यास्य जगतो देवेभ्यश्च पूर्वममृतस्य नाभिर्मध्यं मत्संस्थममृतत्वं प्राणिनामित्यर्थः। यः कश्चिन्मामामन्नमन्नार्थिभ्यो ददाति प्रयच्छति अन्नात्मना ब्रवीति

---

कामान्नत्वं कामरूपत्वञ्च ममैवेति पश्यन्युगपत्सर्व्वान् विषयानन्दाननुभवन्नुपचर्य्यत इत्याह। सर्व्वात्मत्वापत्तेरिति॥ प्रथमजो हिरण्यगर्भोऽप्यहम्। श्रुतिस्तावदादरार्था। देवेभ्यः समष्टिरूपेभ्यः पूर्व्वं विराड्-

भृगुस्तस्मै यतो विशन्ति तद्विजिज्ञासस्व तस्मै-योदशानं प्राणं मनो विज्ञानमिति विज्ञाय तं तपसा द्वादश द्वादशानन्द इति सैषा दशान्नं न निन्द्यात् प्राणःशरीरमन्नं न परिचक्षीतापो ज्योतिरन्नं बहु कुर्वीत पृथिव्यामाकाश एकादशैकादश। न कञ्चनैकषष्ठिरेकान्नविंशतिरेकान्नविंश

---

स इत इत्यर्थः। एवमेवममविनष्टं यथाभूतं मां आवा अवतीत्यर्थः। यः पुनरन्यो मामदत्वार्थिभ्यः काले प्राप्तेऽन्नमत्ति तमन्नमदन्तमहमन्नमेव भक्षयन्तं पुरुषं भोजयामि प्रत्यद्मि। अत्राहैवं तर्हि बिभेमि सर्व्वात्मप्राप्तेर्मोक्षादस्तु संसार एव यतो मुक्तोऽप्यहमन्नभूत आद्यः स्यामन्नस्यैव मा भैषीः संव्यवहारविषयत्वात्सर्वकामाशनस्यात्तीत्यायं संव्यवहारविषयमन्नान्नादादिलक्षणमविद्याकृतं विद्यया ब्रह्मत्वमापन्नो विद्वांस्तस्य नैव द्वितीयं वस्त्वन्तरमस्ति यतो बिभेति अतो न बिभेतव्यं मोक्षात्। एवं तर्हि किमिदमाह अहमन्नमहमन्नमहमन्नाद इत्युच्यते। योऽहमन्नान्नादादिलक्षणः संव्यवहारः कार्य्यभूतः। स संव्यवहार कार्य्यभूतमेव न परमार्थवस्तु। स एवम्भूतोऽपि ब्रह्मनिमित्तो ब्रह्मव्यतिरेकेणा-

---

रूपमेवेत्यर्थः। आवेति लोण्मध्यमपुरुषैकवचनम्। पौनः पुन्येनेत्थं सर्व्वव्याख्यानेषु निपातनत इत्यवतीति व्याख्यातम्। अभिभवामि उपसंहरामीत्यर्थः। ईश्वरात्मताज्ञानेनाहं बाधे द्वैतं ततो नास्ति भयकारणमित्यर्थः। इवेत्यर्थे॥

शान्तिः ॥ * ॥ ॥ सह नाववतु । सह नौ भुनक्तु । सह वीर्य्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ भृगुरित्युपनिषत्। शन्नो मित्रः॥ आवीद्दक्कारम्॥ ॐ शान्तिः ३ ॥ इति तैत्तिरीयोपनिषत्सम्पूर्णा ॥

---

सन्निति ज्ञात्वा ब्रह्मविद्याकार्य्यं सर्वभावस्य स्तुत्यर्थमुच्यते। अहमन्नमहमन्नमहमन्नम्। अहमन्नादोऽहमन्नादोऽहमन्नाद इत्याद्यन्तो भयादिदोषगन्धोऽप्यविद्यानिमित्तो विद्योच्छेदात् ब्रह्मभूतस्य नास्तीत्यहं विश्वं समस्तं भुवनं भूतैः सम्भजनीयं ब्रह्मादिभिर्भवन्तीति वास्मिन् भूतानीति भुवनमभ्यभवामभिभवामि परेणेश्वरेण स्वरूपेण। सुवर्णज्योतिः सुवरादित्यो नकार उपमार्थः। आदित्य इव सकृद्विभातमस्मदीयं ज्योतिर्ज्योतिः प्रकाश इत्यर्थः। इति वल्लीद्वयविहितोपनिषत्परमात्मज्ञानं नाम। तामेतां यथोक्तामुपनिषदं शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा भृगुवत्तपो महदास्थाय य एवं वेद तस्येदं फलं यथोक्तमोमित्युक्तेरिति ॥ इति श्रीपरमहंसपरिव्राजकाचार्य्यस्य शङ्करभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्यं समाप्तम्। ॐ तत्सत्।

---

तैत्तिरीयकभाष्यस्य शङ्करस्य दृढ़ यशः।

स्फुटार्थे बोधिका व्याख्या निरमायि लघीयसी ॥

इति श्रीपरमहंसपरिव्राजकाचार्य्य श्रीशुद्धानन्दपूज्यपादशिष्य श्रीभगवदानन्दज्ञानविरचिता तैत्तिरीयभाष्यटिप्पणी सम्पूर्णा ॥ ॐ तत्सत् ॥

ॐ तत्सत् ॐ ॥

---

# ऋग्वेदीयैतरेयोपनिषद्भाष्यम् ।

॥ ॐ नमः परमात्मने ॥ परिसमाप्तं कर्म सहापरब्रह्मविषयविज्ञानेन। सैषा कर्मणो ज्ञानसहितस्य परा गतिरुक्थविज्ञानद्वारेणोपसंहृता। एतत् सत्यं ब्रह्म प्राणाख्यम् एष एको देवः। एतस्यैव प्राणस्य सर्वे देवा विभूतयः।

---

## ऋग्वेदीयैतरेयोपनिषद्भाष्यटीका ॥

॥ ॐ नमो गणेशाय ॥ आत्मा वा इत्यादिना केवलात्मविद्यारम्भावसरं वक्तुं वृत्तं कीर्त्तयति। परिसमाप्तमिति॥ तत्परिसमाप्तिः क्व गम्यत इत्याशङ्क्याह। सैषेति॥ परा गतिरिति परं गन्तव्यं प्राप्तव्यं फलमित्यर्थः॥ उपसंहारमेव वाक्योदाहरणेन दर्शयति। एतदिति॥ तत्र सह सर्वेण भोज्येन संयुक्तोऽध्यात्माधिदैवरूपः प्राणः सत्यैकशब्दवाच्यो भवति प्राणस्वरूपमनेन वाक्येनोपसंहृतमित्यर्थः॥ अनेन प्राण एक एवेत्युक्तमित्याह। एष इति॥ तर्हि वागग्न्यादयो देवाः के इत्याशङ्क्य तस्य वाक्तन्तिः॥ अथातोऽस्य पुरुषस्येत्यादिना प्राणस्यैव विभूतयो विस्तारा इत्युक्तमित्याह। एतस्यैवेति॥ एवं सर्वात्मकप्राणस्यात्मत्वेन विज्ञानात् कर्मसहितात् सर्वदेवतात्मकप्राणप्राप्तिलक्षणं फलं प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयोऽसम्भूय देवता अप्येति य एवं वेदेत्यनेन वाक्येनोपसंहृतमित्याह। एतस्येति॥ तथा च ज्ञानसहितेन कर्मणा केवलात्मस्वरूपावस्थानलक्षणमोक्षस्यासिद्धेस्तत्सिद्ध्यर्थं केवलात्मविद्यारम्भस्येदानीमवसर इति भावः॥ मतान्तरे सर्वात्मकसूत्रात्मप्राप्तिव्यतिरिक्तमोक्षस्याभावात्तदर्थं केवलात्मविद्यारम्भो न युक्त इति केषाञ्चिन्मतमुत्थापयति। सोऽयमिति॥ एतस्यैव विषयादिमतः सूत्र-

एतस्य प्राणस्यात्मभावं गच्छन्देवता अप्येतीत्युक्तम् । सोऽयं देवताप्ययलक्षणः परः पुरुषार्थः । एष मोक्षः । स चायं यथोक्तेन ज्ञानकर्मसमुच्चयेन साधनेन प्राप्तव्यो नातः परमस्तीत्येके प्रतिपन्नास्तान् निराचिकीर्षुरुत्तरं केवलात्मज्ञानविधानार्थमात्मा वा इदमित्याद्याह । कथं पुनरकर्म-

---

रूपत्वेन पुरुषार्थत्वान्मोक्षत्वं न निर्विषयस्य केवलात्मस्वरूपावस्थानस्येत्याह । एष इति ॥ अयमपि चेन्मोक्षः केवलमात्मज्ञानेनापि साध्यते तदा तदारम्भोऽर्थवानित्याशङ्क्य सविशेषस्य मोक्षस्य सविशेषेणैव साधनेन सिद्धिर्युक्तेत्याह । स चेति ॥ आत्मनः सविशेषत्वेन केवलात्मविद्याया अभावादपि न तस्या हेतुत्वमित्याह । नातः परमिति ॥ तन्मतं प्रदर्श्य तन्निराकरणार्थत्वेन केवलात्मविद्यावाक्यमवतारयति । तानिति ॥ केवलात्मज्ञानेति निर्विशेषात्मविषयत्वमकर्मिनिष्ठत्वं कर्मानङ्गत्वलक्षणं कर्मासम्बन्धित्वस्य कैवल्यमिह विवक्षितम् ॥ नन्वात्मा वा इदमित्यादि कथं केवलात्मविषयम् । स इमान् लोकानसृजतेति लोकसृष्टिप्रतीतेः । तस्याश्च सविशेषहिरण्यगर्भकर्तृकत्वेन पुराणेषु प्रसिद्धे । ताभ्यो गामानयदित्यादि व्यवहाराणां लोके सविशेषविषयत्वप्रसिद्धेः । पूर्वत्रापाती रेतसः सृष्टिः । प्रजापते रेतो देवा इत्यत्र प्रजापतिशब्दितस्य हिरण्यगर्भस्य प्रस्तुतत्वाच्च तस्य तद्विषयत्वस्यौचित्यादात्मन्टहीतिरित्यधिकरणे पूर्वपक्षन्यायेन शङ्कते । कथमिति ॥ सविशेषाविषयत्वे सत्यात्मविद्यायाः कर्मासम्बन्धोऽप्यसिद्ध इत्यभिप्रेत्योक्तम् । अकर्मसम्बन्धीति । आत्मा वा इदमेक एवाग्र आसीदित्यद्वितीयात्मोपक्रमात् एष ब्रह्मैष इन्द्र इत्याद्यनुक्रम्य सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितमिति प्रज्ञानशब्दितप्रत्यगात्माधिष्ठानत्वेन तद्व्यतिरेकेण ब्रह्मशब्दितहिरण्यगर्भादिप्रपञ्चस्याभावमुक्त्वा प्रज्ञानं ब्रह्मेत्यद्वितीयात्मनोपसंहारात् स एतमेव पुरुषं ब्रह्म ततममपश्यदिति मध्ये परामर्शाद्ब्रह्मात्माद्वितीयत्वस्य मानान्तरागम्यत्वेनापूर्वत्वादमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवदिति । स्वर्गशब्दितनिरतिशयत्वसुखात्मकब्रह्मैक्येन स्थितस्य तदन्तभूत-

सम्बन्धिकेवलात्मविज्ञानविधानार्थं उत्तरो ग्रन्थ इति गम्यते। अन्यार्थानवगमात्। तथा च पूर्व्वोक्तानां देवाना-मग्न्यादीनां संसारित्वं दर्शयिष्यति अशनायादिदोषवत्त्वेन। तमशनायापिपासाभ्यामन्ववार्जदित्यादिना। अशनायादि-मत् सर्व्वं संसार एव। परस्य तु ब्रह्मणोऽशनायाद्यत्ययश्रुतेः। भवत्वेवं केवलात्मज्ञानं मोक्षसाधनं न त्वत्राकर्म्मिणैवाधि-

---

वैषयिकसर्व्वानन्दप्राप्तिलक्षणफलोक्तेः सृष्ट्याद्यर्थवादात् स एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यतेति प्रवेशोक्तेः। तस्य त्रय आवसथास्त्रयः स्वप्ना इति जाग्रदाद्यवस्थात्रयस्य स्वप्नत्वेन मिथ्यात्वोक्त्युपपत्तेश्च॥ निर्विशेषा-द्वितीयात्मपरत्वावगमेन ग्रन्थस्यार्थान्तरशङ्काऽनवकाशाल्लोकादिसृष्ट्युक्ते-रध्यारोपापवादाभ्यामक्तात्मप्रतिपत्त्यर्थमात्मन्यारोपात् परमात्मैवे-हात्मशब्देन गृह्यते इतरवत्। यथेतरेषु सृष्टिश्रवणेषु। तस्माद्वा एतस्मा-दात्मन आकाशः सम्भूत इत्येवमादिषु परस्यात्मनो ग्रहणम्। यथा चेतरस्मिन् लौकिके आत्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते तथेहापि भवितुमर्हति। कुतः। वाक्यार्थदर्शनात्। आत्म-गृहीतिरितरवदुत्तरादित्यधिकरणसिद्धान्तन्यायेन केवलात्मपरत्वनिश्चयाच्च सविशेषपरत्वमुत्तरग्रन्थस्येत्याह। अन्यार्थेति॥ यश्चैष एव मोक्ष इति तत्राह। तथा चेति॥ तथा संसारित्वञ्च दर्शयिष्यतीत्यन्वयः। तं हिरण्य-गर्भस्य स्थूलरूपं वैराजं पिण्डमशनायापिपासाभ्यां संयोजितवानीश्वर इति श्रुत्यर्थः। अशनायादिमत्त्वेऽपि निरतिशयसुखवत्त्वेन देवता-भावस्य मोक्षत्वं स्यादित्यत आह। अशनायादिमदिति॥ अशनायादे-र्दुःखनियतत्वान्निरतिशयसुखत्वं तस्यासिद्धमिति संसारित्वमित्यर्थः। यत्तु निर्विशेषात्मस्वरूपावस्थानस्य विषयादिरहितत्वेन न मोक्षत्वमिति तद-सत्। तस्य योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीत्यशनाद्यत्य-यश्रुतेस्तन्नियतदुःखाप्रसक्तेः। सतश्चानन्दो ब्रह्मेति व्यजानादिति श्रुत्यन्तरादमुष्मिन् स्वर्गे लोके इतीहाप्यानन्दरूपतावगमात् स्वर्गशब्दस्य

क्रियते। विशेषाश्रवणात्। अकर्मिणः आश्रमान्तरस्येहा-
श्रवणात्। कर्म च बृहती सहस्रलक्षणं प्रस्तुत्यानन्तरमेवात्म-
ज्ञानं प्रारप्स्यते। तस्मात् कर्म्मिणैवाऽधिक्रियते। न च कर्म्मासम्ब-
न्ध्यात्मविज्ञानं पूर्व्ववदन्ते उपसंहारात्। यथा कर्म्मसम्बन्धिनः
पुरुषस्य सूर्य्यात्मना स्थावरजङ्गमादिसर्व्वप्राण्यात्मत्वमुक्तं
ब्राह्मणेन मन्त्रेण च सूर्य्यात्मेत्यादिना तथैवैष ब्रह्मा एष

---

सुषमामाम्नशाग्निवादनन्ते स्वर्गे लोके ब्रह्मविदः स्वर्गलोकमित ऊर्ध्वं
विमुक्ता इत्यादिश्रुतिषु ब्रह्मानन्दे स्वर्गशब्दप्रयोगाच्च। तस्य विषयाभावे-
ऽपि पुरुषार्थत्वान्मोक्षत्वमित्याह। परस्य त्विति॥ एवं निर्व्विशेषात्म-
विद्याया मोक्षसाधनत्वमङ्गीकृत्य तस्या अकर्म्मिनिष्ठत्वनियमरूपं कैवल्यं
न सम्भवतीति वदन् संन्यासमाक्षिपति। भवत्विति॥ विशेषाश्रवणमेव
स्फुटयति। अकर्म्मिण इति॥ संन्यासिन इत्यर्थः। न केवलं विशेषा-
श्रवणं किन्तु सन्निधानात् कर्म्मिणः प्रतीतेः कर्म्मिसम्बन्धित्वनियमश्रव-
णमस्तीत्याह। कर्म्म च बृहतीसहस्रलक्षणमिति॥ तथा च तद्द्वारा
कर्म्मी सन्निहित इत्यर्थः॥ तस्मादिति॥ अतो न कर्म्मत्यागरूपसंन्यासा-
श्रमोऽस्तीत्यर्थः। एवमात्मविद्यां केवलां कर्म्मासम्बन्धिनीमङ्गीकृत्य
तस्या अकर्म्मिनिष्ठत्वनियमो निराकृतः॥ इदानीमङ्गीकारं परित्यजति।
न चेति॥ पूर्व्वत्र कर्म्मसम्बन्धिज्ञानविषयस्य सर्व्वात्मत्वोक्तेरेव ब्रह्म
त्यादिनाऽत्रापि सर्व्वात्मत्वोक्तेस्तेन च लिङ्गेनाऽस्याप्यात्मज्ञानस्य कर्म्म-
सम्बन्धित्वानुमानादसम्भावसात्मज्ञानस्य कर्म्मसम्बन्धित्वमित्यर्थः॥ सं-
ग्रहवाक्यं विवृणोति। यथेत्यादिना॥ कर्म्मसम्बन्धिन इति तस्यैव
होमं लोकमभ्यार्च्छत् पुरुषरूपेण य एष तपतीत्यादिना सर्व्वात्मत्वमुक्ता
तस्य सर्व्वात्मत्वं तस्मात्सर्व्वमिति इत्याचष्टे। एतमेव सन्तमित्यादिना
प्राणरूप इत्येवं त्रिशादित्यमन्येन प्राणो वै सर्व्वाणि भूतानि येनैव
चोक्तमित्यर्थः। जगतो जङ्गमस्य तस्थुषः स्थावरस्य सूर्य्यः आत्मेति
मन्त्रार्थः। प्रमाणेनाधिगति प्रमाणान्वितमन्त्रेणेत्यभिप्रायः। सन्दंशन्याये-

इन्द्र इत्याद्युपक्रम्य सर्व्वप्राणात्मत्वम्। यच्च स्थावरजङ्गमं सर्व्वं तत् प्रज्ञानेत्रमित्युपसंहरिष्यति। तथाच संहितोपनिषदि एतं ह्येव बह्वृचो महत्युक्थे मीमांसन्त इत्यादिना कर्म्मसम्बन्धित्वमुक्त्वा सर्व्वेषु भूतेषु एतमेव ब्रह्मेत्याचक्षत इत्युपसंहरति। तथा तस्यैव योऽयमशरीरः प्रज्ञात्मेत्युक्तस्य यश्चासावादित्य एकमेव तदिति विद्यादित्येकत्वमुक्तमिहापि कोऽयमात्मेत्युपक्रम्य प्रज्ञात्मत्वमेव प्रज्ञानम् ब्रह्मेति दर्शयिष्यति। तस्मान्नाकर्म्मसम्बन्ध्यात्मज्ञानं पुनरुक्तता-ऽऽनर्थक्यमिति चेत्। कथं प्राणो वा अहमस्म्यृषे इत्यादि ब्राह्मणेन सूर्य्य आत्मेति च मन्त्रेण निर्धारितस्यात्मन आत्मा वा इदमित्यादिब्राह्मणेन कोऽयमात्मेति प्रश्नपू-

---

नात्मस्य कर्म्मसम्बन्ध्यात्मविषयत्वमिति वदन् सर्व्वात्मत्वं चिह्नस्य कर्म्मसम्बन्ध्यात्मनियतत्वमाह। तथा चेति॥ तथा संहितोपनिषदि चेति चकारान्वयः। महत्युक्थे बृहतीसहस्राख्ये यज्ञे एतं प्रकृतमात्मानं ऋग्वेदिनो विचारयन्तीति श्रुत्यर्थः। संहितोपनिषदि प्रज्ञात्मेत्युक्तस्यात्मनो यो [illegible] इत्यादिवाक्यपर्य्यालोचनया कर्म्मसम्बन्धप्रतीतेरस्यापि प्रज्ञात्मत्वोक्त्या च कर्म्मसम्बन्धावगमात् तज्ज्ञानस्य कर्म्मसम्बन्धित्वमित्याह। तथा तस्यैवेति॥ ब्रह्मत्वमुपसंहरति। तस्मादिति॥ ब्रह्मत्वाद्येव सिद्धान्त्यब्रह्मत्वनामाशङ्कते। पुनरुक्तीति॥ संग्रहवाक्यं विवृणोति। प्राणो वा इत्यादिना॥ पूर्व्वोत्तरब्राह्मणयोरेकार्थत्वे [illegible] [illegible]मपि प्राणात्मविषयं स्यान्न निर्धारितमिति पुनरुक्तमित्यर्थः॥ स एव शङ्कां परिहरति। न तस्येति॥ तमेव प्रश्नपूर्व्वकं विवृणोति। कथमित्यादिना॥ जगत्स्रष्टेति स इमाँल्लोकानसृजतेत्यादिमन्त्रवर्णादित्यर्थः॥

न्तरविशेषनिर्द्धारणार्थत्वान्न पुनरुक्ततादोषः। कथं तस्यैव कर्म्मसम्बन्धिनो जगत्सृष्टिस्थितिसंहारादिधर्म्मविशेषनिर्द्धारणार्थत्वात् केवलोपास्यत्वार्थत्वाद्वा अथवा आत्मेत्यादिपरो ग्रन्थसन्दर्भ आत्मनः कर्म्मणोऽन्यत्रोपासनाप्राप्तौ कर्म्मप्रस्तावे विहितत्वात् केवलोऽप्यात्मोपास्य इत्येवमर्थं भेदाभेदोपास्यत्वादेक एवात्मा कर्म्मविषये भेददृष्टिभाक् स एवाकर्म्मकालेऽभेदेनाप्युपास्य इत्येवमपुनरुक्तता॥

विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते इति च। कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समा इति च वाजिनाम्। न च वर्षशतात् परमायुर्म्मर्त्यानां यतः कर्म्मपरित्यागेनात्मानमुपासीत।

---

प्रकारान्तरेण पुनरुक्तिं परिहरति। केवलेति॥ एतमेव परिहारं वा शब्दार्थं वदन् विवृणोति। अथवेति॥ कर्म्मणोऽन्यत्रेति कर्म्माङ्गत्व-तदङ्गोपास्याद्यधिकरणत्वस्य विनेत्यर्थः। अप्राप्ताविति च्छेदः। अप्राप्तत्वे हेतुमाह। कर्म्मप्रस्ताव इति॥ अविहितत्वादिति च्छेदेनोत्तरत्र हेतुः। न चैवं लोककर्म्मसम्बन्धित्वनियमत्यागापत्तिः कर्म्माङ्गाश्रितमात्रस्य त्यागेऽपि कर्म्मसम्बन्धित्वस्य सविशेषविषयत्वलक्षणस्य कर्म्मसमुच्चितत्वलक्षणस्य चात्यागादङ्गीकारवादेनास्य पक्षस्योक्तत्वादस्मिन्नपि पक्षे कर्म्मनिष्ठत्वं नियतमिति भावः॥ अत्रैव पक्षे विशेषान्तरमाह। भेदेति॥ भेददृष्टीति इदन्तयोपास्य इत्यर्थः। अभेदेनेति अहन्तयेत्यर्थः॥

आत्मा वा इदमित्यादिग्रन्थस्य स्वपक्षेऽर्थं व्याख्याय तस्य कर्म्मत्यागेनात्मज्ञानार्थत्वपक्षे बहुश्रुतिविरोधमाह। विद्यामित्यादिना॥ अविद्याशब्देनात्र तत्कार्य्यं कर्म्मोच्यते। ननु कुर्व्वन्नेवेति कर्म्म वर्षशतस्य कर्म्मनियतत्वोक्तावपि तदनन्तरं संन्यासः स्यादित्यत आह। न चेति॥ शतायुर्वै पुरुष इति श्रुतेरित्यर्थः। इहापि व्यतीतशताब्दस्य [illegible]

दर्शितञ्च तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति। वर्षशतञ्चायुः कर्म्मणैव व्याप्तम्। दर्शितश्च मन्त्रः कुर्व्वन्नेवेह कर्म्माणीत्यादिः। तथा यावज्जीवमग्निहोत्रं जुहोति यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्याद्यश्च। तं यज्ञपात्रैर्दहन्तीति च। ऋणत्रयश्रुतेश्च। तत्र पारिव्राज्यादिशास्त्रं व्युत्थायाथ भिक्षाचर्य्यं चरन्तीत्यात्मज्ञानस्तुतिपरोऽर्थवादो-

---

षट्त्रिंशतमक्षराणां सहस्राणीत्युक्ता तावन्ति पुरुषायुषोऽह्नां सहस्राणीत्युक्तत्वात् संवत्सरशतमेवायुरित्याह। दर्शितञ्चेति॥ भवन्तीत्यनन्तरमितिशब्दो द्रष्टव्यः। पुरुषायुषस्याह्नामिति भाष्यपाठः साधुः। पुरुषायुषोऽह्नामिति तु समासान्तविधेरनित्यत्वाभिप्रायेण कथञ्चिन्नेयः॥ पुरुषायुषञ्चेद्वर्षशताधिकं नास्ति तर्हि तन्मध्य एव कर्म्मसंन्यासः स्यादत आह वर्षशतञ्चेति॥ तत्र मानमाह। दर्शितश्चेति॥ ननु पुराणेषु शताधिकस्यायुषो दशरथादेः श्रुतत्वात् शतवर्षानन्तरं कर्म्मसंन्यासः स्यादित्याशङ्क्य शतायुःश्रुतिविरोधेन तस्याऽर्थवादत्वात्तथाङ्गीकारेऽपि जीवनकालस्य सर्व्वस्यापि कर्म्मव्याप्तत्वश्रुतेर्नैवमित्याह। तथा यावज्जीवमिति॥ जीर्णो वा विरमेदिति वचनाज्जरानन्तरं संन्यासः स्यादित्याशङ्क्य यज्ञपात्रैर्दहनविधानान्नेत्याह। तं यज्ञपात्रैरिति॥ ननु यावज्जीवादिवाक्यानां प्रतिपन्नगार्हस्थ्यविषयत्वं वक्तव्यमन्यथा ब्रह्मचारिणोऽपि तद्विधिप्रसङ्गात्ततश्च गार्हस्थ्यात् पूर्व्वं कर्म्मत्यागः स्यादत आह। ऋणेति॥ जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायत इति श्रुतेः। ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेदिति स्मृतेश्चेत्यर्थः। ततश्च तदपाकरणार्थं तेनापि गार्हस्थ्यमेव प्रतिपत्तव्यं न संन्यास इत्यर्थः। यदहरेव विरजेत्तदहरेव प्रव्रजेत् व्युत्थायाऽथ भिक्षाचर्य्यञ्चरन्ति। ब्राह्मणः प्रव्रजेद्गृहादिति श्रुतिस्मृत्योः का गतिरित्यत आह। तत्रेति॥ ज्ञानस्तुतीति सर्व्वसंन्यासेनाप्यात्मा ज्ञातव्य इति ज्ञानस्तुतिः प्रतीयत इति तत्पर इत्यर्थः। विधि-

ऽनधिकृतार्थो वा न परमार्थतात्मविज्ञाने फलादर्शने क्रियानुपपत्तेः। यदुक्तं कर्म्मिण एव चात्मज्ञानं कर्म्मसम्बन्धि चेत्यादि तन्न। परं ह्याप्तकामं सर्व्वसंसारदोषवर्जितं ब्रह्माहमस्मीत्यात्मत्वेन विज्ञाते कृतेन कर्त्तव्येन वा प्रयोजनं आत्मनोऽपश्यतः फलादर्शने क्रिया नोपपद्यते। फलादर्शनेऽपि नियुक्तत्वात् करोतीति चेन्न। नियोगाविषयात्मदर्शनादिष्टयोगमनिष्टवियोगञ्चात्मनः प्रयोजनं पश्यंस्तदुपायार्थी यो भवति स नियोगस्य विषयो दृष्टो लोके न तु तद्विपरीतनियोगाविषयाब्रह्मात्मदर्शी। ब्रह्मात्म-

---

त्वेऽपि कर्म्मानधिकृतान्धपङ्ग्वादिविषयत्वमेवेत्याह। अनधिकृतेति॥ तस्मान्नाकर्म्मिनिष्ठैव विद्या किन्तु कर्म्मिनिष्ठा तत्सम्बन्धिनी चेति स्थितम्॥ तदेतत्सिद्धान्ती परिहरति। नेति॥ एवं हि कर्म्मिनिष्ठा विद्या स्यात्। यदि विदुषोऽपि कर्मानुष्ठानं स्यात्तदपि प्रयोजनार्थितया वा स्यात्काम्य इव नियोगबलाद्वाप्राभाकरमत इव नित्यकर्मणि। तत्र नाद्य इत्याह। परमार्थेति॥ संपहवाक्यं त्विष्टपर्यन्तविशेषार्थेऽध्याहार-पूर्व्वकं नञर्थं विवृणोति। यदुक्तमित्यादिना॥ कर्मसम्बन्धि चेति कर्माङ्गोक्याद्याश्रयमित्यर्थः॥ परमार्थेति वाक्यांशं विवृणोति॥ परमिति॥ अर्थप्राप्त्यर्थमनर्थनिवृत्त्यर्थं वा कर्म स्यान्नोभयमपीति वक्तुं विशेषणद्वयं दोषपदेन रागद्वेषाभावेनापि प्रवृत्त्यभावं सूचयति। प्रागनुष्ठित-कर्मणाप्यसम्बन्धे कर्त्तव्ये न सम्बन्धो दूरापास्त इति वक्तुं कृतेनेत्युक्तम्॥ द्वितीयं शङ्कते। फलादर्शनेऽपीति॥ ममेदं कार्य्यमिति बोद्धा हि नियोगस्य विषयो नियोज्यः कार्य्ये स्वकीयत्वज्ञानञ्च तज्जन्यफलार्थिनः। न चात्मनोऽसङ्गित्वज्ञानिनो ममेदमिति बुद्धिर्भवति अतो न तस्य नियुक्तत्वमित्याह। न नियोगेति॥ तदेवोपपादयति। इष्टेति॥ ममेदं कार्य्यमिति बोधाभावेऽपि चेन्नियुज्येत तर्हि राजसूयादिकं ब्राह्मणादिना कर्त्तव्यं स्यादग्निष्टोमादिकञ्च सर्व्वदा कर्त्तव्यं स्यान्निर्मित्तत्वा-

त्वदर्थ्येऽपि सन् चेन्नियुज्येत नियोगाविषयोऽपि सन्न क-
श्चिदनियुक्त इति सर्व्वं कर्म्म सर्व्वेण सर्व्वदा कर्त्तव्यं प्राप्नोति।
तच्चानिष्टम्। नच स नियोक्तुं शक्यते केनचित्। आम्नाय-
स्यापि तत्प्रभवत्वात् न हि स्वविज्ञानोत्थेन वचसा स्वयं
नियुज्यते। नापि बहुवित् स्वाम्यविवेकिना भृत्येन। आम्ना-
यस्य नित्यत्वे सति स्वातन्त्र्यात् सर्व्वान् प्रति नियोक्तृत्वसाम
र्थ्यमिति चेन्न। उक्तदोषात्। तथापि सर्व्वेण सर्व्वदा विशिष्टं
कर्म्म कर्त्तव्यमित्युक्तो दोषोऽपरिहार्य्य एव। तदपि शास्त्रे-

---

विशेषादित्याह । ब्रह्मात्मत्वेति । न कश्चिन्न नियुक्त इति नञ्द्वयेन सर्व्वो-
ऽपि नियुक्त एवेत्यर्थः । किञ्च नियोक्ताप्यस्य किं स्वः कश्च पुरुषो देवो
वा । आद्ये विदुष ईश्वरात्मत्वज्ञानात् सर्व्वं नियोक्तृत्वेन स्वनियोज्येनास्य
नियोज्यत्वं स्यात्तच्च विरोधान्न सम्भवतीत्याह । न च स इति । तस्यैव
सर्व्वनियोक्तृत्वादित्यर्थः ॥ नन्वन्यस्य नियोज्यत्वाभावेऽप्याम्नायेन विद्वा-
न्नियोज्यः स्यादिति द्वितीयमाशङ्क्य तस्याम्नायस्येश्वरतामापन्नस्य स्वज्ञा-
नपूर्व्वकत्वात् स्ववचनेन स्वस्य नियोज्यत्वमेकत्र कर्त्तृकर्म्मविरोधान्न
सम्भवतीत्याह । आम्नायस्यापीति ॥ किञ्च व्याकरणादेस्तत्कर्त्तृपाणिन्या-
दिज्ञेयैकदेशार्थविषयत्वदर्शनेन वेदस्यापीश्वरजन्यस्येश्वरज्ञेयैकदेशविषयत्वे-
नाल्पज्ञत्वादप्यधिकस्येश्वरनियोक्तृत्वमयुक्तमित्याह । नापि बहुविदिति ॥
अविवेकिनेत्यल्पज्ञेनेत्यर्थः । अचेतनत्वाद्वा तस्याविवेकित्वं भृत्येन न नियु-
ज्यत इत्यनुषङ्गः ॥ ननु वेदस्येश्वरज्ञानपूर्व्वकत्वपक्षे पूर्व्वोक्तदोषानुषङ्गेऽपि
तस्य नित्यत्वपक्षे नायं दोष इति शङ्कते । आम्नायस्येति ॥ तस्याऽचेतनस्य
नियोक्तृत्वं न सम्भवति । तस्य चेतनधर्म्मत्वादित्युत्तरमाह । नेति ॥
नियोक्तृत्वमभ्युपेत्यापि दोषमाह । उक्तदोषादिति तदेव विवृणोति ।
तथापीति अनियोज्यस्यापि चेत् कर्त्तव्यं विदुषस्तर्हि विशिष्टं विहितं कर्म्म

णीति चेत्। यथा कर्म्मकर्त्तव्यता शास्त्रेण कृता तथा तदप्यात्मज्ञानं तस्यैव कर्म्मिणः शास्त्रेण विधीयत इति चेत्। न। विरुद्धार्थबोधकत्वानुपपत्तेः। न ह्येकस्मिन् कृताकृततासम्बन्धित्वं तद्विपरीतत्वञ्च बोधयितुं शक्यम्। शीतोष्णतामिवाग्नेः। न चेष्टयोगचिकीर्षात्मनोऽनिष्टवियोगचिकीर्षा च शास्त्रकृता सर्वप्राणिनां तद्दर्शनाच्छास्त्रकृतश्चेत्तदुभयं गोपालादीनां न दृश्येत अशास्त्रज्ञता तेषाम्। यद्धि स्वतोऽप्राप्तं तच्छास्त्रेण बोधयितव्यम्। तच्चेत् कृतकर्त्तव्यता-

---

सर्व्वेण सर्व्वदापि कर्त्तव्यं सङ्कोचे हेत्वभावादित्यर्थः॥ असङ्गब्रह्मात्मत्वज्ञानस्य कर्म्मकर्त्तव्यतायाश्च शास्त्रेण कृतत्वादुभयोरपि शास्त्रयोः प्रामाण्याविशेषात् कदाचिदात्मज्ञानं कदाचित् कर्म्मानुष्ठानञ्च स्यादिति शङ्कते। तदपीति॥ तदेव विवृणोति। यथेति॥ स्वाभाविककर्त्रात्मबोधेन सकृदुत्पन्नेनैव कर्त्तृताबोधबाधनान्न पुनः शास्त्रेण कर्त्तृत्वबोधः सम्भवतीत्याह। नेति॥ कृताकृतेत्यत्र कृतमिति इदानीमकृतं इतःपरं कर्त्तव्यं यत्तदुच्यते। एवं तावन्नियोगाविषयात् कर्त्रात्मदर्शित्वाद् विदुषः प्रयोजनार्थित्वाभावाच्च न कर्मेत्युक्तम्। इदानीं स्वत इष्टानिष्टसंयोगवियोगरूपप्रयोजनार्थिताभावेऽपि विदुषः स्वर्गकामो यजेतेति शास्त्रेणैव साधीयत इत्याशङ्क्य स्वभावतः प्राप्तप्रयोजनार्थितानुवादेन तदुपायमात्रं शास्त्रेण बोध्यते न तु साधीयते। अन्यथा अशास्त्रज्ञानां तदर्थिता न स्यादित्याह न चेष्टेति॥ अत्र चिकीर्षाशब्देन फलेच्छामात्रमुच्यते न तु कर्त्तुमिच्छा फले तदयोगादिति। ननु कृताकृतसम्बन्धित्वं तद्विपरीतञ्च विरुद्धत्वान्न बोधयति चेच्छास्त्रं तर्हि कृताकृतासम्बन्धित्वमेव माबोधीदित्याशङ्क्य तस्य मानान्तरासिद्धत्वेनावश्यं शास्त्रबोध्यत्वे वक्तव्ये तद्विपरीतस्य मानान्तरसिद्धस्य न शास्त्रबोध्यत्वं विरुद्धत्वादित्याह यद्धीति। तच्चेदिति। निश्चयार्थे कृते सतीदं कृतमिदं कर्त्तव्यमिति ज्ञानविरोधीत्यर्थः। कर्त्तव्यतां तज्ज्ञानमित्यर्थः। विध्यभावेन वेदा-

विरोध्यात्मज्ञानं शास्त्रेण कृतं कथं तद्विरुद्धकर्त्तव्यतां पुनरुत्पादयेच्छीततामिवाग्नौ तमइव भानौ। न बाधयत्येवेति चेन्न। स म आत्मेति विद्याऽऽत्मज्ञानं ब्रह्मेति चोपसंहारात्। तदात्मानमेवावेत् तत्त्वमसीत्येवमादिवाक्यानां तत्परत्वात्। उत्पन्नस्य ब्रह्मात्मविज्ञानस्याबाध्यमानत्वान्नानुत्पन्नं भ्रान्तं वेति शक्यं वक्तुम्। त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेत्। न। नाकृतेनेह कश्चनेति स्मृतेः। य आहुर्विदित्वा ब्रह्म व्युत्थानमेवमेव कुर्य्या-

---

त्वात्मप्रत्यगात्मबोधकत्वमित्याशङ्क्य पुरुषस्य कर्त्रात्मभिमुखीकरणार्थं त्वाद्विधेरिष्टात्मज्ञानाभिमुखीकरणार्थं विधिस्वरूपस्यार्थवादत्व सत्त्वात् स्वरूपबोधक तत्परवाक्यस्यापि सत्त्वान्नैवमित्युत्तरमाह। न [illegible] इदमित्याद्युपक्रमादितात्पर्य्यलिङ्गं सूचयति। ज्ञानोत्पत्त्युत्तरकालीनाया एव श्रुतेर्बाधाद्यनुत्पत्तिशङ्का न कार्य्येत्याह। तदात्मानमिति॥ तर्हीति जीवरूपेणावस्थितं ब्रह्म स्वयं॥ छान्दोग्यवाक्यादप्येवमेवेति वदन् गतिसामान्यन्यायं दर्शयति। तत्त्वमसीति॥ अनेन तद्वाक्य विवक्षावित्ति वाक्यशेषोऽप्युपलक्ष्यते। अयमात्मा ब्रह्मेत्यादिवाक्यार्थः। कर्त्रात्मबोधककर्मकाण्डविरोधादुत्पन्नमपि ज्ञानं भ्रान्तमित्याशङ्क्य तस्य यथा शास्त्रकर्त्रात्मानुवादेनोपायमात्रपरत्वात् वस्तुपरवेदान्तजन्यज्ञानबाधकत्वमित्याह। उत्पन्नस्येति॥ नानुत्पन्नमिति वाक्यश्रवणानन्तरमकर्त्रात्माहमिति ज्ञानस्यानुभवसिद्धत्वाच्चाहमकर्त्तेति विपरीतज्ञानादर्शनाच्च नोभयं वक्तुं शक्यमित्यर्थः। विदुषः प्रयोजनतृष्णाभावाच्च कर्मणि प्रवृत्तिरित्युक्तम्। तर्हि तत्त्यागेऽपि प्रयोजनाभावात् तत्रापि न प्रवृत्तिः स्यादिति शङ्कते। त्यागेऽपीति॥ तस्य विदुषः कृतेन कर्मणार्थो नास्ति। अकृतेन कर्माभावेनापीह लोकेऽर्थो नास्तीति गीतासु

दिति। तेषामप्येष समानो दोषः। प्रयोजनाभाव इति चेन्न। अक्रियामात्रत्वाद्व्युत्थानस्य। अविद्यानिमित्तो हि प्रयोजनस्य भावो न वस्तुधर्म्मः। सर्व्वप्राणिनां तद्दर्शनात्। प्रयोजनतृष्णया च प्रेर्य्यमाणस्य वाङ्मनःकायैः प्रवृत्तिदर्शनात्। सोऽकामयत जाया मे स्यादित्यादिपुत्रवित्तादि पाङ्क्तलक्षणं काम्यमेवेति। उभे ह्येते साध्यसाधनलक्षणे एषणे एवेति वाजसनेयिब्राह्मणेऽवधारणात्। अविद्याकामदोषनिमित्ताया वाङ्मनःकायप्रवृत्तेः पाङ्क्त-

---

करत्वात्। त्यागेऽपि प्रयोजनाभावस्य तुल्यत्वमिति चेदित्यन्वयः॥ ब्राह्मणमेव विवृणोति। य आहुरिति॥ कर्मत्यागस्य व्यापारात्मकत्वे व्यापारस्य क्रियात्मकत्वात्तदनुष्ठानं प्रयोजनापेक्षितं स्यात्। न त्वेतदस्ति किन्तु क्रियाभावमात्रमौदासीन्यरूपम्। तस्य च स्वास्थ्यरूप- [illegible] नेति॥ त्यागस्यान्यत्र कृप्तव्यापारहेतुजन्यत्वाभावाच व्यापारत्वमिति वक्तुं अन्यत्र कृप्तव्यापारहेतुमाह। अविद्येत्यादिना॥ यद्वा विदुषः कथं यत्नं विना व्युत्थानमौदासीन्यमात्रं च सिध्यतीत्याशङ्क्य क्रियाहेत्वभावात् क्रियाभाव इति वक्तुं तद्धेतुमाह। प्रयोजनस्य भाव इति॥ प्रयोजनत्वे तृष्णेत्यर्थः॥ तस्या वस्तुधर्मत्वे विदुषोऽपि तृष्णा स्यादिति तन्निषेधति। न वस्तुधर्म्म इति॥ न वस्तुस्वभाव इत्यर्थः॥ वस्तुधर्मत्वे हि विदुषामविदुषाञ्च सुप्तमूर्च्छितादीनां साधारण्यान्न त्वेतदस्ति। तत्र हेतुमाह। सर्व्वेति॥ तद्दर्शनादिति पाठे वस्तुस्वभावाप्राणिनां गोपालादीनामपि तृष्णादर्शनाच्च वस्तुधर्म्म इति वर्णयितुं योग्यम्। तृष्णाया अविद्याजन्यत्वमुक्त्वा तस्या व्यापारहेतुत्वमाह। प्रयोजनेति। दर्शनादिति पञ्चमी॥ अविद्याकामदोषनिमित्ताया इत्युत्तरत्र हेतुत्वेन सम्बध्यते। न केवलं दर्शनमेव किन्तु श्रुतिरप्यस्तीत्याह। सोऽकामयत इत्यादिना॥ उभे ह्येते एषणे एवेति

स्वरूपायाविदुषोऽविद्यादिदोषाभावादनुपपत्तिः। अभावादक्रियामात्रं व्युत्थानं न तु यागादिवदनुष्ठेयरूपं भावात्मकं तच्च विद्यावत् पुरुषधर्म्म इति न प्रयोजनमन्वेष्टव्यम्। न हि तमसि प्रवृत्तस्योदिते आलोके यत् तत्पङ्ककण्टकाद्ययतनं तत्किंप्रयोजनमिति प्रश्नार्हं व्युत्थानं तदर्थप्राप्तत्वान्न चोदनार्थं इति। गार्हस्थ्ये चेत् परब्रह्मविज्ञानं जातं तत्रैवास्त्वकुर्व्वत आसनं न ततोऽन्यत्र गमनमिति चेन्न। कामप्रयुक्तत्वाद्गार्हस्थ्यस्य। एतावान् वै काम इति। उभे ह्येते

---

वाक्येन च पुत्रवित्तादि काम्यमेवेति वाजसनेयिब्राह्मणेऽवधारणादित्यन्वयः। पाङ्क्तरूपमिति जायापुत्रदैवमानुषवित्तद्वयकर्म्मभिः पञ्चभिर्योगात् पाङ्क्तरूपं कर्म्मेत्यर्थः॥ उभे इत्यस्यार्थमाह। साध्यसाधनेति॥ एवं क्रियाहेतुपदार्थे तदभावादेव विदुषः क्रियाभावोऽर्थसिद्ध इत्याह। अविद्याकामेति॥ पाङ्क्तरूपाया इति जायापुत्रदैववित्तमानुषवित्तकर्म्मभिः पञ्चभिर्लक्षणे साध्यत इति वैदिकी प्रवृत्तिः पाङ्क्तरूपेत्युच्यते। पञ्चसङ्ख्यायोगेन गौण्या वृत्त्या पङ्क्तिश्छन्दः सम्बन्धोपचारात् पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ इति श्रुतेरित्यर्थः। पाङ्क्तरूपाया इत्यनन्तरमनुपपत्तिरित्यनुषङ्गः। व्युत्थानमित्यनन्तरमर्थसिद्धमिति शेषः। इत्थं क्रियाभावस्यौदासीन्यात्मकस्य पुरुषस्वभावत्वेनार्थसिद्धत्वे सति न प्रयोजनापेक्षेत्याह तच्चेति॥ पुरुषस्वभाव इत्यर्थः॥ अज्ञानकार्य्यस्याज्ञाननिवृत्तौ अयत्नत एव निवृत्तिरित्यत्र दृष्टान्तमाह। न हीति॥ व्युत्थानस्य पुंव्यापाराधीनत्वाभावे विधेरवकाशाद्विदुषो नियमेन व्युत्थानं न सिद्ध्यतीति। यद्युक्तं व्युत्थानं तद्धीति॥ ततोऽन्यत्र गमनमिति पारिव्राज्यस्वीकार इत्यर्थः। किं गार्हस्थ्यपदेन गृहस्थोऽहमित्यभिमानपुरःसरं पुत्रविद्याद्यभिमान उच्यते उत गृहस्थचिह्नधारणम्। नाद्यः। विद्ययाऽविद्याकार्याभिमाननिवृत्तेरित्याह। न कामेति॥ न द्वितीयः। विदुषोऽभिमानराहित्यस्य

एवमेव एवेत्यवधारणात्। कामनिमित्तपुत्रवित्तादिसम्बन्ध-
नियमाभावमात्रम्। न हि ततोऽन्यत्र गमनं व्युत्थान-
मुच्यते। अतो न गार्हस्थ्ये एवाकुर्वत आसनमुत्पन्नविद्यस्य
एतेन गुरुशुश्रूषातपसोरप्यप्रतिपत्तिर्विदुषः सिद्धा। अत्र
केचिद्गृहस्था भिक्षाटनादिभयात् परिभवाच्च त्रस्यमानाः
सूक्ष्मदृष्टितां दर्शयन्त उत्तरमाहुः। भिक्षोरपि भिक्षाटना-
दिनियमदर्शनात् देहधारणमात्रार्थिनो गृहस्थस्यापि
साध्यसाधनैषणोभयविनिर्मुक्तस्य देह मात्रधारणार्थ-

---

मुख्यत्वात्। न चैवं पारिव्राज्यलिङ्गेऽप्यभिमानाभावात्तस्याप्यसिद्धिरिति
वाच्यम्। सर्वतोऽभिमानराहित्येन सर्वसम्बन्धराहित्यं हि परमहंस-
पारिव्राज्यलक्षणं न लिङ्गधारणम्। न लिङ्गं धर्म्मकारणमिति स्मृतेः
ततश्च लिङ्गेऽप्यभिमानशून्यस्य पारिव्राज्यं सिद्धमित्याह। कामनिमि-
त्तेति॥ गार्हस्थ्य इत्यभिमानात्मक इत्यर्थः तर्हि गुरुशुश्रूषादावप्यभि-
मानो न स्यादित्याशङ्क्येष्टापत्तिरित्याह। एतेनेति॥ ननु पुत्रादिसम्ब-
न्धनियमरहितस्यापि त्वन्मते देहधारणार्थिनो भिक्षोः परिग्रहव्याव-
र्त्तनार्थो भिक्षाटनादिरेवेति नियमोऽङ्गीक्रियते। तथा गृहस्थस्याप्य-
भिमानशून्यस्यैव सतो देहधारणार्थं गृह एवावस्थानं न भिक्षुकत्व-
विशेषादिति शङ्कन्ते। अत्र केचिद्गृहस्था इति॥ तेषां न न्यायो मूलं
किन्तु दृष्टमयाचितादिकमेव मूलमित्यपहसन्नाह। भिक्षाटनादीति॥
परिभवः पामरैः क्रियमाणस्तिरस्कारः॥ सूक्ष्मेति काका व्यतिरेकेण
स्थूलदृष्टय इत्यर्थः। भिक्षाटनादीत्यादिशब्देन प्राक्प्रणीतमयाचित-
मितादयो गृह्यन्ते। देहधारणमात्रार्थिनो भिक्षोरिति पूर्व्वेणान्वयः॥
सिद्धान्ती तस्यैवम्भूतस्य स्त्रीपरिग्रहोऽस्ति वा न वेति विकल्प्याद्ये
दूषणमाह। न चेति॥ स्वपत्नीविशेषणत्वेन स्त्रीविशेषो गृह्यते। न
भिक्षोः। स्त्रीपरिग्रहवत एव द्रव्यपरिग्रहाधिकारात्। तदभावेऽपीह-

मशनाच्छादनमात्रमुपजीवतो गृह एवास्त्वाश्रममिति । न स्वगृहविशेषपरिग्रहनियमस्य कामप्रयुक्तत्वादित्युक्तोत्त-रमेतत् । स्वगृहविशेषपरिग्रहाभावे च शरीरधारणमात्र-प्रयुक्ताशनाच्छादनार्थिनः स्वपरिग्रहविशेषाभावेऽर्थाद्भिक्षु-त्वमेव । शरीरधारणार्थायां भिक्षाटनादिषु प्रवृत्तौ यथा नियमो भिक्षोः शौचादौ च तथा गृहिणोऽपि विदुषोऽ-कामिनोऽस्तु नित्यकर्मसु नियमेन प्रवृत्तिर्यावज्जीवादि-श्रुतिनियुक्तत्वात् प्रत्यवायपरिहारार्थेति । एतन्नियोगा-

---

स्वपरिग्रहनिवृत्तेः । तदभावे प्रकारान्तरेण जीवनासिद्धेरर्थाद्भिक्षा-टनादिनियम एव भिक्षुतेत्याह । स्वगृहेति ॥ न च पुत्रादिपरि-गृहीतेन जीवनमस्त्विति शङ्क्यम् । तैरपि स्वस्वत्वेन सम्बन्धाभावे स्वकीयस्यापि परकीयद्रव्यतुल्यत्वेन तत्रापि भिक्षुत्वनियमादिति । यथा तु भिक्षोरपि भिक्षाटनादौ सप्तागारान् सङ्कल्प्यानित्यादिनियमः । शौचादौ च चातुर्गुण्यादिनियमश्च प्रत्यवायपरिहारार्थं यथेष्यते तथा यावज्जीवादिश्रुतिवशात् प्रत्यवायपरिहारार्थं नित्यकर्म्मणि निय-मेन प्रवृत्तिरित्याशङ्क्य तदनुवदति । शरीरधारणार्थायामिति ॥ अकुर्व्वत एव गृहेऽवस्थानं पूर्व्वमते शङ्कितम् । अस्मिन्मते त्वग्निहोत्राद्यनुष्ठा-नमपि कर्त्तव्यमिति शङ्क्यते । तथेति ॥ पूर्व्वम् परिग्रहव्यावृत्त्यर्थो भिक्षाटनादिविषयो दृष्टशरीरधारणप्रयोजनो नियमो दृष्टान्तत्वेनोक्त इह तु स भिक्षाटनादिगतसप्तागारत्वादिविषयो दृष्टार्थो दृष्टान्तत्वेनोक्त इति भेदं दूषयति । एतदिति ॥ तस्य सर्व्वनियोक्तृनीश्वरात्मत्वाच्च न नियोज्यत्वमित्याद्युक्तमित्याह । अशक्येति ॥ तर्हि तच्छ्रुतेरप्रामा-ण्ये भिक्षाटनादिनियमविधेरपि तत् स्यादित्यभिप्रायेण शङ्कते । यावज्जीवेति ॥ अविदुषि नियोज्ये तत् प्रामाण्यं घटत इति नोक्त-दोष इत्याह । नेति ॥ तदुक्तप्रतिबन्दीं परिहर्त्तुमनुवदति । यत्त्विति ॥ दूषयति । तत्प्रवृत्तेरिति ॥ आचमनविधिनाऽऽचमनप्रवृत्तस्यार्थिको यः

विषयत्वेन विक्षुष: प्रत्युक्तमशक्यनियोज्यत्वाच्चेति । याव-ज्जीवादिनित्यचोदनानर्थक्यमिति चेन्न । अविद्वद्विषयत्वे-नार्थवत्त्वात् । यत्तु भिक्षो: शरीरधारणमात्रप्रवृत्तस्य प्रवृत्तेर्नियतत्वं तत् प्रवृत्तेर्न प्रयोजकम् । आचमन-प्रवृत्तस्य पिपासापगमवन्नान्यप्रयोजनार्थत्वमवगम्यते । न चाग्निहोत्रादीनान्तद्वदर्थप्राप्तप्रवृत्तिनियतत्वोपपत्ति: । अर्थ-प्राप्तप्रवृत्तिनियमोऽपि प्रयोजनाभावेऽनुपपन्न एवेति चेन्न ।

---

पिपासापगमस्तस्य तथा नान्यप्रयोजनार्थत्वं प्रयोजनम् प्रयुक्तिस्तदर्थत्वं नाचमनप्रवृत्तिप्रयोजकत्वम् । तद्वज्जीवनार्थं भिक्षादौ प्रवृत्तस्य यस्तत्र नियम: स न भिक्षादिप्रवृत्ते: प्रयोजक इत्यर्थ: । एतदुक्तं भवति नियोज्यत्वाभावात् किन्न ब्रह्मविदो नियमविध्यनुपपत्तिराशङ्कते । तत्र युज्यते । कथं नियोज्यो हि नियोगसिध्यर्थमपेक्ष्यते । नियोगस्य प्रवृत्तिसिध्यर्थ: । प्रवृत्तिश्चेदन्यत: सिद्धा किं नियोगेन । अतएव दर्शपूर्णमासनियोगादेवावहननियमेन प्रवृत्तिसिद्धौ तत्र न पृथक् नियोगोऽङ्गीक्रियते । तदभावे च न नियोज्यापेक्षेति । ब्रह्मविदो नियोज्यत्वाभावेऽपि न नियमविध्यनुपपत्तिरिति । अग्निहोत्रादिप्र-वृत्तेस्तु अन्यतोऽसिद्धत्वेन तद्विधित एव तत्र प्रवृत्तेर्वक्तव्यत्वेन तत्सिध्यर्थं नियोगे वाच्ये तस्य तत्र नियोज्यापेक्षेति वैषम्यमाह । न चाग्निहोत्रेति ॥ नियमविधौ नियोज्यानपेक्षायामपि तस्य क्रियात्मकत्वात् प्रयो-जनापेक्षा वाच्या । तदभावान्न नियम: सिध्यतीति शङ्कते । अर्थ-प्राप्तेति ॥ तन्नियमस्यापि पूर्ववासनावशादेव प्राप्तत्वात्तत्रापि न नियमविधेरवकाशो येन प्रयोजनापेक्षा स्यादिति परिहरति । न तदिति ॥ यद्यपि नियतेन वाऽनियतेन वा भिक्षाटनादिना जीवनं सिध्यति तथापि विद्योत्पत्ते: पूर्वं विद्यासिध्यर्थं नियमस्यानुष्ठितत्वात्तद्वास-नाप्राबल्याद्विद्योत्पत्त्यनन्तरमपि नियम एव प्रवर्त्तते । नानियमे तद्वासनानां नियमवासनाभिरत्यन्तमभिभूतत्वेन पुनस्तदुद्बोधनस्य यत्नसाध्यत्वात्ततस्तत्र न प्रवर्त्तत इति नियमोऽप्यर्थसिद्ध इत्यर्थ: ।

तद्विषयस्य पूर्व्वप्रवृत्तिसिद्धत्वात्तदतिक्रमे यत्नगौरवादर्थ-प्राप्तस्य च व्युत्थानस्य पुनर्व्वचनादिक्रमः कर्त्तव्यत्वोपपत्तिः। अविदुषाऽपि मुमुक्षुणा पारिव्राज्यं कर्त्तव्यमेव। तथा च शान्तो दान्त इत्यादिवचनं शमदमादीनामात्मदर्शन-साधनानामन्याश्रमेष्वनुपपत्तेः। अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टमिति च श्वेताश्वतरे विज्ञायते। न कर्म्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति

---

एतेन प्रत्यवायपरिहारार्थत्वमपि नियमानुष्ठानस्य निरस्तं तस्य विदुषः प्रत्यवायाप्रसक्तेरिति। एवमुपकारोक्त्या व्युत्थानस्य विधिं विना स्वतः प्राप्तत्वे सति तत्कर्त्तव्यताविधिमपि विदित्वा व्युत्थायेत्यादिकमनु-मोदते विद्वानित्याह। अर्थप्राप्तस्येति॥ विधितः कर्त्तव्यत्वोपपत्तिरि-त्यर्थः। न च विधेः प्रयोजनाभावेऽप्रवर्त्तकत्वादिति वाच्यम्। प्रैषो-च्चारणाभयदानादिवैधरूपस्य प्राशस्त्यार्थत्वेन विधेरर्थवत्त्वात्॥ न च तस्यापि वैयर्थ्यं शक्यम्। विदुषि परमहंसे लोकसङ्ग्रहार्थत्वात्। तस्य तु सङ्कल्पकस्य पूर्व्वाभ्यस्तमैत्रीकरुणादिवासनाप्राप्तत्वेन ब्रह्मविद्यो-पदेशादाविव प्रयोजनानपेक्षणात्। यद्वा प्रारब्धकर्म्मविक्षेपदेहेन्द्रि-याद्यभिमानाभासेनाविचारितसावद्यजीवादिस्मृतिजनितकर्म्मकर्त्तव्यताभ्रान्तौ तन्निवर्त्तते न वा विदुषो व्युत्थानविधेरर्थवत्त्वोपपत्तिः। एवं विदुषो व्युत्थानप्रसाधनेन विद्याया अकर्म्मनिष्ठत्वं साधितम्। तेनैव च तस्याः कर्म्मासम्बन्धोऽप्यर्थात् साधितः। इदानीं विविदिषोरपि व्युत्था-नम् प्रसाधयन् विद्यायाः कर्म्मनिष्ठत्वं कर्म्मसम्बन्धित्वञ्च दूरादपास्त-मित्याह। अविदुषापीति॥ तत्र श्रुतिमाह। तथा चेति॥ उपरतस्ति-तिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदिति श्रुतिशेषः। तत्रो-परतशब्देन सन्न्यासो विहित इति भावः। शमादिसाधनानां पौष्क-ल्येनानुष्ठानस्य गृहस्थादिष्वसम्भवात्सन्न्यासविधानमर्थादाक्षिप्यते। सन्न्यास इति॥ श्रुतार्थापत्तिमाह। शमादीनाञ्चेति॥ चशब्द उपरतशब्दसमु-

च। ज्ञात्वा नैष्कर्म्यमाचरेदिति स्मृतेः। ब्रह्माश्रमपदे वसेदिति च। ब्रह्मचर्य्यादिविद्यासाधनानाञ्च साकल्येनात्याश्रमिषूपपत्तेर्गार्हस्थ्ये सम्भवात्। न चैवमसम्पन्नं साधनं कस्यचिदर्थस्य साधनायालम्। यद्विज्ञानोपयोगीनि च गार्हस्थ्याश्रमकर्म्माणि तेषां परं फलमुपसंहृतम्। देवताप्यलक्षणं संसारविषयमेव। यदि कर्म्मिण एव परमात्मज्ञानमभविष्यत् संसारविषयस्यैव फलस्योपसंहारो नोपा-

---

यार्थः। नेदं विद्वद्विषयम्। तस्य साधनविधिवैयर्थ्यात् किन्तु विविदिषुविषयमिति वक्तुमात्मदर्शनसाधनानामित्युक्तम्। अत्याश्रमिभ्य इति ब्रह्मचर्य्यादीन् हंससन्न्यासान्तानाश्रमधर्मवदाश्रमानतिक्रम्य वर्त्तते परमहंस इति। सोऽत्याश्रमशब्देनोच्यत इति तद्विधिरत्र प्रतीयत इत्यर्थः। ऋषिसङ्घजुष्टं मन्त्रसमूहैर्म्मुनिसमूहैर्वा सेवितं तत्त्वं प्रोवाचेत्यर्थः। न कर्मणेति त्यागस्य साक्षादमृतत्वसाधनत्वाभावेनामृतत्वसाधनं ज्ञानं त्यागेनानस्युः व्याप्नुवन्त इत्यभिधानेन ज्ञानसाधनत्वे त्यागोऽत्र विहित इत्यर्थः। ज्ञात्वेति आपाततो ब्रह्म ज्ञात्वा निश्चयार्थं नैष्कर्म्यं कर्मत्यागरूपं सन्न्यासमाचरेदिति इत्यर्थः। ब्रह्मेति ज्ञानसाधनीभूत आश्रमो ब्रह्माश्रमः सन्न्यास इत्यर्थः। किञ्च एकाकी यतचित्तात्मा इत्याद्युपक्रम्य ब्रह्मचारी व्रते स्थितः। मनः संयम्य मच्चित्तो युक्त आसीत मत्पर इत्यन्तेन ब्रह्मचर्य्यादिसाधनविधिबलादप्यर्थात् सन्न्यासविधिरित्याह। ब्रह्मचर्य्यादिति॥ ननु गृहस्थस्यापि ऋतुकालमात्रगमनलक्षणं ब्रह्मचर्य्यं कदाचिद्ध्यानकाले एकाकित्वञ्च सम्भवतीत्याशङ्क्य तस्यापुष्कलत्वात्ततो ज्ञानासिद्धेर्ध्यानकाले पत्नीसम्बन्धाप्रसक्तेस्तद्विधिवैयर्थ्याच्च नैवमित्याह। न चेति॥ अतो न कर्म्मिनिष्ठत्वं कर्मसम्बन्धित्वञ्चात्मज्ञानस्येत्यर्थः॥ यत्तु कर्म दहतीत्यहलक्षणं प्रस्तुत्यात्मज्ञानं प्रारभ्यत इत्यादिना कर्मसम्बन्धित्वमुक्तं तत्राह। यद्विज्ञानेति॥ तथा पूर्व्वोक्तकर्मसम्बन्धि ज्ञानं संसारफलकमन्यदेव तत्रोपसंहृतमिति न

पत्त्यात्। अङ्गफलान्तरमिति चेन्न। तद्विरोध्यात्मवस्तुविषय-
त्वात्। आत्मविद्याया निराकृतसर्व्वनामरूपकर्म्मपरमार्थात्म-
वस्तुविषयं ज्ञानममृतत्वसाधनम्। गुणफलसम्बन्धे हि
निराकृतसर्व्वविशेषात्मवस्तुविषयत्वं ज्ञानस्य न प्राप्नोति
तच्चानिष्टम्। यत्र त्वस्य सर्व्वमात्मैवाभूदित्यधिकृत्य क्रिया-
कारकफलादिसर्व्वव्यवहारनिराकरणाद्विदुषः। तद्विपरी-
तस्याविदुषो यत्र हि द्वैतमिवेत्युक्त्वा क्रियाकारकफलरूप-
स्यैव संसारस्य दर्शितत्वाच्च वाजसनेयिब्राह्मणे तथेहापि

---

तत्परमात्मज्ञानमित्यर्थः॥ ननु पूर्व्वोक्तमेव परमात्मज्ञानं तच्च कर्म-
सम्बन्ध्येवेत्याशङ्क्य क्रियाकारकफलकत्वेनोपसंहारात्परमात्मज्ञानस्य च
मुक्तिफलकत्वान्न तु तत्परमात्मज्ञानमित्याह। यदि कर्म्मिण एवेति॥
कर्म्मिनिष्ठत्वेनोक्तज्ञानमेव परमात्मज्ञानं स्यादित्यर्थः॥ परमात्मज्ञानाङ्ग-
भूतपृथिव्यग्न्यादिदेवताज्ञानस्य तत्संसारफलं नाङ्गिनः परमात्मज्ञान-
स्येति न तस्य मुक्तिफलत्वविरोध इति शङ्कते। अङ्गेति॥ परमात्मज्ञान-
स्याङ्गसम्बन्धफलसम्बन्धादिसर्व्वविशेषरहितनिर्व्विशेषवस्तुविषयत्वान्न त-
स्याङ्गादिसम्बन्धित्वं येन तदङ्गविषयत्वं फलस्य स्यादिति परिहरति॥
न तदिति॥ तदेव स्पष्टयति। निराकृतेत्यादिना॥ तच्चानिष्टमिति
आत्मा वा इदमित्यादेरुपक्रमादिलिङ्गैरात्मनो निर्व्विशेषत्वसिद्धेरि-
त्यर्थः वाजसनेयिब्राह्मणे च परात्मविदः सर्व्वसम्बन्धशून्यत्वमुक्त्वा अवि-
दुषः संसारफलत्वोक्तेश्चेह संसारफलस्यातीतस्य ज्ञानस्य परमात्मज्ञानत्वं
वक्ष्यमाणस्य निर्व्विशेषवस्तुवियस्यैव परमात्मज्ञानत्वं मुक्तिफलत्वञ्चेत्याह।
यत्रेत्यादिना॥ तथेहापीतिवाक्ये फलपदद्वयपाठे एकं फलं निष्पाद्यत्वार्थकं
निष्पाद्यत्व इपि संसारविषयं संसारान्तर्गतमिति वक्तुम्। एवं कर्म्मासम्बन्धित्वं
ज्ञानस्योक्त्वा यावज्जीवादिश्रुतेः कर्मत्यागो न सम्भवतीति यत्पूर्व्व-

ह्यवताच्यं संसारविषयं यत्फलमशनायादिमद्द्वयात्मकं तत्फलमुपसंहृत्य केवलं सर्वात्मवस्तुविषयज्ञानमखतत्वाय यच्यामीति प्रवर्त्तते। ऋणाप्रतिबन्धश्चाविदुष एव। सोऽयं मनुष्यलोकः पुत्रेणैवेत्यादिलोकत्रयसाधननियमश्रुतेः। विदुषश्चर्णाप्रतिबन्धाभावो दर्शित आत्मलोकार्थिनः किं प्रजया करिष्याम इत्यादिना। तथैतद्ध स्म वै तद्विद्वांस आहुऋषयः कावषेया इत्यादि। एतद्ध स्मैवैतत् पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रुरिति कौषीतकीनाम्। अविदुष-

---

त्वादिनोक्तं तत्र यावज्जीवादिश्रुतेरविद्वद्विषयत्वहुक्तम्॥ ऋणश्रुतेरिदानीं गतिमाह। ऋणेति॥ ऋणस्यानपाकृतस्य मनुष्यादिलोकप्राप्तिम् प्रति प्रतिबन्धकत्वात्तदर्थिनोऽविदुष एवर्णापाकरणं कर्त्तव्यं न मुमुक्षोः। मुक्तिं प्रति तस्याप्रतिबन्धकत्वादित्यर्थः। ननु ऋणस्य मुक्तिम् प्रत्यपि प्रतिबन्धकत्वमस्तु विशेषाभावात्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यध इति स्मृतेश्चेत्याशङ्क्याह। सोऽयमिति॥ सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन। कर्म्मणा पितृलोको विद्यया देवलोक इति श्रुतेः। पुत्रादीनां मनुष्यलोकादिहेतुत्वावगमात् पुत्रादिभिरपाकर्त्तव्यानां पुत्राद्यभावरूपाणामृणानां पुत्रादिसाधनाभावेन साध्यलोकाभावान्न मुक्तिं प्रति तस्यास्तदभावरूपपुत्रादिसाध्यत्वाभावात्। स्मृतेश्च रागिणां प्रति सन्न्यासनिन्दार्थवादमात्रत्वादित्यर्थः। न केवलमुक्तन्यायतो मुक्तिम् प्रत्यप्रति.बन्धकत्वं किन्तु श्रुतितोऽपीत्याह। विदुष इति॥ श्रुतित्वेन क्रमेण प्रजाध्ययनकर्म्मणामननुष्ठितानामप्रतिबन्धकत्वं दर्शितम्। कावषेया इत्यनन्तरं किमर्था वयमध्येष्यामहे इति शेषो द्रष्टव्यः॥ यद्यपीति। अविदुषस्तर्ह्यीति। यद्यप्यविदुषोऽपि लोकत्रयम् प्रत्येव प्रतिबन्धकत्वात् मुक्तिं प्रति प्रतिबन्धकत्वाभावादृणस्यानपाकरणीयत्वान्मुमुक्षोः पारिव्राज्यसम्भवादाशङ्का न सम्भवति तथापि विद्वांस आहुरित्युक्तश्रवणमात्रेणेयं शङ्का। यद्वा

त्र्यृणानपाकरणे पारिव्राज्यानुपपत्तिरिति चेन्न। प्राग्गार्हस्थ्यस्याप्रतिपत्तेर्ऋणित्वासम्भवादधिकारानारूढो-ऽप्यृणी चेत् स्यात् सर्वस्य ऋणित्वमित्यनिष्टम् प्रसज्येत। प्रतिपन्नगार्हस्थ्यस्यापि इष्टा वनी भूत्वा प्रव्रजेत् यदि वेत-रथा ब्रह्मचर्य्यादेव प्रव्रजेद्गृहाद्वा वनाद्वेति। आत्मदर्श-नोपायसाधनत्वेनेष्यत एव पारिव्राज्यं यावज्जीवादिश्रुती-नामविद्वदमुमुक्षुविषये सार्थकता। छान्दोग्ये च केषाञ्चिद्

---

परिहारान्तरं वक्तुमाशङ्का द्रष्टव्या। ऋणस्य स्वर्गप्रतिबन्धकत्वं तस्यैव तन्निराकरणाधिकारात्। ततश्च गार्हस्थ्यप्रतिपत्तेः प्राक् ब्रह्मचर्य्य एव मुमुक्षोः पारिव्राज्यं सम्भवतीति परिहरति। नेति॥ यद्यप्युपनयना-नन्तरमेव ऋणनिवर्त्तनेऽधिकारः सम्भवतीति प्राग्गार्हस्थ्येऽप्युक्तं तथापि विविदिषासन्न्यासेऽधीतवेदस्यैवाधिकार इति अधीतवेदस्य गार्हस्थ्यप्रति-पत्तेः प्रागिति द्रष्टव्यम्। ननु जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति। जाय-मानमात्रस्यर्णवत्त्वं प्रतीयत इत्याशङ्क्यर्णित्वोक्तेः प्रयोजनं न साक्षात् किञ्चिदस्त्यपि तु ब्रह्मचर्य्यादिकर्त्तव्यताज्ञापनम्। न चाधिकारानारूढ़-स्तत्कर्त्तुं शक्नोति। जायमानमात्रस्यासामर्थ्यात्। किञ्च ब्राह्मणपदग्रह-णात् क्षत्रियादेर्ऋणाभावप्रसङ्गः। द्विजात्युपलक्षणत्वेऽधिकार्य्युपलक्ष-णत्वमेव न्याय्यम्। अतो जायमानपदमधिकारं लक्षयतीति जायमानो-ऽधिकारी सम्पद्यमान इति तदर्थः। ततश्च ततः प्राक् नर्णसम्बन्ध इत्याह। अधिकारेति॥ अनिष्टमिति ब्रह्मचारिणोऽप्यृणित्वे ब्रह्मचर्य्य एव मृतस्य नैष्ठिकस्य च लोकप्रतिबन्धः। स्याच्चानिष्टम्। अष्टाशीति सहस्राणीत्या-रभ्य तदेव गुरुवासिनामित्यादिना पुराणे लोकप्राप्त्युक्तेरित्यर्थः॥ न केवलं गार्हस्थ्यात् प्रागेव सन्न्यासविधिः किन्तु विधिबलाद्गृहस्थस्यापि तदस्तीत्याह। प्रतिपन्नेति॥ आत्मदर्शनेति आत्मदर्शने ये उपायाः श्रवणादयस्तत्साधनत्वेनेत्यर्थः। न चर्णश्रुत्या पारिव्राज्यविधिविरोधः। तस्याः

द्वादशरात्रमग्निहोत्रं हुत्वा तत ऊर्द्धं परित्यागः श्रूयते। यत्त्वनधिकृतानाम् पारिव्राज्यमिति। तन्न। तेषाम् पृथगेवोत्सन्नाग्निर्निरग्निको वेत्यादिश्रवणात् सर्वस्मृतिषु चाविशेषेणाश्रमविकल्पः प्रसिद्धः समुच्चयश्च। यत्तु विदुषोऽर्थप्राप्तं व्युत्थानमित्यशास्त्रार्थत्वे गृहे वने वा तिष्ठतो न विशेष इति तदसत्। व्युत्थानस्यैशार्थप्राप्तत्वान्नान्यत्रावस्थानं स्यात्। अन्यत्रावस्थानस्य कामकर्मप्रयुक्तत्वं ह्यवोचाम।

---

अवदानार्थवादमात्रत्वेन स्वार्थे तात्पर्य्याभावात्। अन्यथा तदवदानैरेवावदयते तदवादानामवदानत्वं इत्यवदानमात्रनिरस्तत्वोक्त्या ब्रह्मचर्य्यादीनामप्यननुष्ठेयत्वप्रसङ्गादिति भावः॥ एवमपि यावज्जीवादिश्रुतिविरोधः सन्न्यासश्रुतेरित्याशङ्क्याह। यावज्जीवेति॥ विरक्तमुमुक्षुमात्रविषयिण्या सन्न्यासश्रुत्या यावज्जीवादिवाक्यश्रुतेरमुमुक्षुविषये सङ्कोच इत्यर्थः। अग्निहोत्रविषयकयावज्जीवादिश्रुतेर्नानयैव सङ्कोचः किन्तु श्रुत्यन्तरेणैव द्वादशरात्रानन्तरमग्निहोत्रत्यागविधायिन्या सा पूर्व्वमेव सङ्कोचिता न तां विरोद्धुं शक्नोतीत्याह। छान्दोग्य इति॥ केषाञ्चिच्छाखिनां त्रयोदशरात्रमहृतवासा यजमानः स्वयमग्निहोत्रं जुहुयाद्यथाप्रवसन् तत्रैव सोमेन पशुना वेष्टाऽग्नीनुत्सृजतीति श्रूयत इत्यर्थः। ननु पारिव्राज्यश्रुतिरप्यनधिकृतविषये सङ्कोचितेत्याह। यत्त्विति॥ वचनान्तरेणैव तेषां तद्विधेर्नोत्थानधिकारिविषयः किन्त्वधिकार्य्येवेति परिहरति। नेति॥ उत्सन्नाग्निर्नष्टाग्निः निरग्निकोऽपरिगृहीताग्निरिति भेदः॥ स्वत्युपदर्शितत्वेऽपि पारिव्राज्यश्रुतिर्दृढीयसीत्याह। सर्व्वस्मृतिषु चेति॥ अत एव ब्रह्मचर्य्यवान् प्रव्रजति। बुद्धा कर्म्माणि। यमिच्छेत्तमावसेत्। ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः। य इच्छेत् परमं स्थानमुत्तमां वृत्तिमाश्रयेदित्यादिषु विकल्पः सिद्धः। अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्म्मतः। इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेदित्यादिषु समुच्चयश्च सिद्ध इत्यर्थः॥ एवं विवि-

तदभावमात्रं व्युत्थानमिति। यथा कामित्वन्तु विदुषो-ऽत्यन्तमप्राप्तं अत्यन्तमूढविषयत्वेनावगमात् तथा शास्त्र-विहितमपि कर्म्मात्मविदोऽप्राप्तं गुरुभारतयाऽवगम्यते किमुताऽत्यन्ताविवेकनिमित्तं यथा कामित्वम्। न ह्युन्मा-दतिमिरदृष्ट्युपलब्धं वस्तु तदपगमेऽपि तथैव स्यादुन्माद-तिमिरदृष्टिनिमित्तत्वादेव। तस्मादात्मविदो व्युत्थानव्यति-रेकेण न यथा कामित्वम्। न चान्यत् कर्त्तव्यमित्येतत् सिद्धम्। यत्तु विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सहेति। न

---

दिषा सन्न्यासं प्रसाध्य पूर्व्वत्र साधितविद्वत्सन्न्यासे शङ्कामनुवदति। यच्चेति॥ पूर्व्वत्र गृह एवास्यासनमिति शङ्का निरस्ता इह तु गृहे वा वने वाऽस्यासनमित्यनियमशङ्कां निराकर्त्तुं सा पुनरनूद्यते। यथेष्टचेष्टा-मधिकां परिहर्त्तुञ्चेति द्रष्टव्यम्॥ यद्यप्यर्थप्राप्तस्यापि पुनर्व्वचनादित्यत्र विद्वद्व्युत्थानस्यापि शास्त्रार्थत्वमुक्तमेव तथाप्यशास्त्रार्थत्वमङ्गीकृत्या-प्याह। तदसदिति॥ यदि व्युत्थानवद्गार्हस्थ्यमप्यर्थप्राप्तं स्यादेवमनि-यमो न त्वेतदस्तीत्याह। व्युत्थानस्यैवेति॥ अन्यत्वेति गार्हस्थ्येत्यर्थः। नन्वन्यत्वावस्थानवद्व्युत्थानस्यापि कामादिप्रयुक्तत्वमनुष्ठेयत्वादित्याश-ङ्क्याह। तदभावेति॥ कामाद्यभावमात्रमेव व्युत्थानमित्युक्तत्वात्तस्य नानु-ष्ठेयत्वमित्यर्थः। एवमनियमशङ्कां निरस्य व्युत्थानस्य शास्त्रार्थत्वे यथेष्टचेष्टामाशङ्क्य निराकरोति। यथा कामित्वन्त्विति॥ चेष्टामात्रमेव कामादिप्रयुक्तम्। निषिद्धचेष्टा तु शास्त्रार्थज्ञानशून्यात्यन्तमूढविषया। तदुभयस्य विदुषो नास्तीति चेष्टामात्रमेवाप्रसक्तं निषिद्धचेष्टा तु दूरा-पास्तेत्यर्थः॥ एतदेव विवृणोति। तथेति। तथा हीत्यर्थे तथाशब्दः। गुरुभारतयातिक्लेशतया यतोऽवगम्यतेऽतोऽप्राप्तमित्यन्वयः॥ अविवेकादि-निमित्तापगमे नैमित्तिकापगम इत्यत्र दृष्टान्तमाह। न हीति॥ उन्माद-दृष्ट्युपलब्धं गन्धर्वनगरादि तिमिरदृष्ट्युपलब्धं द्विचन्द्रादिरिति विवेकः। न चान्यदिति वैदिकं कर्मेत्यर्थः। ननु विद्यया अविद्यायाः सद्भाव-

विद्यावतो विद्यया सहाविद्यापि वर्त्तेत इत्यर्थः । न त्वे-
कस्मिन् पुरुषे एकदैव सह सम्बध्येयातामित्यर्थः । यथा
शुक्तिकायां रजतं शुक्तिकाज्ञाने एकस्य पुरुषस्य । दूर-
मेते विपरीते विषूची अविद्या या च विद्येति ज्ञातेति हि
काठके । तस्मान्न विद्यायां सत्यामविद्यासम्भवोऽपि । तपसा
ब्रह्म विजिज्ञासस्वेत्यादिश्रुतेः । तपआदि विद्योत्पत्तिसाधनं
गुरूपासनादि च कर्माविद्यात्मकत्वादविद्योच्यते । तेन
विद्यामुत्पाद्य मृत्युं काममतितरति । ततो निष्काम-

---

श्रवणादिविदुषोऽपि तन्मूलकामादिकं स्यादेवेति तन्निमित्ता यथेष्टचेष्टा
स्यादित्यत आह । यत्त्विति ॥ यत्तु विद्याञ्चेति वचनं तस्य नायमर्थ इति ।
तस्येतिशब्दाध्याहारेण वाक्यं योज्यम् । एकस्मिन्निति कालभेदेन स्थित-
योरप्येकस्मिन् पुरुषे साहित्यन्तदर्थ इत्यर्थः । नन्विदं साहित्यं न स्वरसं
किन्त्वेककाले सहत्वं स्वरसमित्याशङ्क्य श्रुत्यन्तरे विद्याविद्ययोः साक्षात्-
साहित्यस्यासम्भवोक्तेरुक्तमेव साहित्यं ग्राह्यमित्याह । दूरमेते इति ॥
विषूचीति विष्वग्गमने विरुद्धे इत्यर्थः । अस्मिन्नपि मन्त्रेऽविद्यया
मृत्युन्तीर्त्वेत्युत्तरार्द्धपर्य्यालोचनयाऽविद्याया विद्योत्पत्तिहेत्ववगमात्
तयोः कालभेदेनैव सहत्वमित्याह । तपसेत्यादि ॥ यद्वा गुरूपासनतपसी
अविद्येत्युच्यते । तयोश्च श्रवणादिकालेऽनुष्ठेयत्वाद्विद्योत्पत्तिकाले एकस्मिं-
स्तयोः साहित्यमस्तीत्यर्थान्तरमाह । तपसेति ॥ अस्मिन्नर्थे मन्त्रशेषो-
ऽप्यनुगुण इत्याह । तेन विद्यामिति ॥ साक्षादविद्या मृत्युत्वेन मृत्यु-
तरणहेतुत्वानुपपत्तेरविद्याशब्देन तपआदिकमेवोच्यते । तद्विद्याव्यव-
धानश्रावणात् कल्प्यत इत्यर्थः । अविद्वद्विषयत्वेनेति जिजीविषेदिति
जीवितेच्छारूपाविद्याकार्य्येण तस्याः सूचनादित्यर्थः । परिहृतमिति
यावज्जीवादिश्रुतिन्यायेन परिहृतप्रायमित्यर्थद्वारा तृतीयस्य चतुर्थपादे
सूत्रं नाविशेषादिति सूत्रेण परिहृतमित्यर्थः । असम्भवादिति विरो-
धेन विद्यया सहासम्भवादित्यर्थः । उदाहृतश्रुतिसूत्रस्यासम्भवादिति वा ॥

त्यक्तैषणो ब्रह्मविद्ययाऽमृतत्वमश्नुत इत्येतमर्थं दर्शयन्नाह। अविद्यया मृत्युन्तीर्त्वा विद्ययामृतमश्नुते इति। यत्तु पुरुषायुः सर्वकर्म्मणैव व्याप्तम्। कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समा इति अविद्वद्विषयत्वेन परिहृतं इतरथाऽसम्भवात्। यत्तु शास्त्रामपि पूर्व्वोक्तं तुल्यत्वात् कर्म्मणा विकल्पमात्मज्ञानमिति तत्सविशेषनिर्विशेषात्मतया प्रत्युक्तं उत्तरत्र व्याख्याने दर्शयिष्यामः। अतः केवलनिष्क्रियब्रह्मात्मैकत्वविद्याप्रदर्शनार्थमुत्तरो ग्रन्थ आरभ्यते।

---

प्रत्युक्तमिति निर्व्विशेषात्मज्ञानस्य कर्म्मादिकारकोपमर्द्दकत्वेन। विरुद्धत्वादुपमर्द्दे चेति स्वरूपेणाविरुद्धत्वं प्रत्युक्तमित्यर्थः। तस्माद्ब्रह्मात्मविद्याया अकर्मनिवृत्तत्वं कर्म्मासम्बन्धित्वं केवलात्मविषयत्वञ्च सिद्धमिति पूर्वोक्तकर्म्मभिर्विद्यया च शुद्धसत्त्वस्य तत एव साधनचतुष्टयसम्पन्नस्य केवलात्मस्वरूपावस्थानलक्षणमोक्षसिध्यर्थं केवलात्मविद्याऽऽरभ्यत इत्युपसंहरति। अत इति॥ नन्वात्मनः सविशेषत्वप्रतीतेस्तद्विरोधात् कथं केवलत्वमित्याशङ्क्य विशेषस्य सर्व्वस्यात्मनि मायाकल्पितत्वान्न वास्तवनिर्विशेषत्वविरोध इति तदर्थं माययात्मनः सकाशात् सृष्टिं वक्तुं सृष्टेः पूर्वमात्मनो निर्व्विशेषरूपं दर्शयितुमात्मा वा इत्यादि वाक्यम्॥ तत्रात्मशब्दार्थमाह। आत्मेति॥ आत्मेतिपदेन सर्व्वज्ञादिरूप आत्मोच्यत इत्यन्वयः। अद्वय इत्यन्तरमुच्यत इति शेषः। नन्वात्मशब्देन कथमुक्तलक्षण आत्मोक्त इत्याशङ्क्यात्मशब्दस्य स्वरूपव्युत्पत्तिबलाद्वा चेत्याह। आप्नोतेरिति॥ वा शब्दश्चार्थे आदानञ्च समुच्चिनोति। तथा च स्मृतिः! यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्तित इति॥ अत्राप्तिर्नाम व्याप्तिरुच्यते सत्तास्फुरणाभ्यां सर्व्वं व्याप्नोतीति सर्व्वगतत्वं सर्व्वशक्तित्वञ्चोच्यते : सत्ताप्रदानेनोपादा-

# ऋग्वेदीयैतरेयोपनिषत् ॥

॥ ॐ परमात्मने नमः ॥ हरिः ॐ ॥

आत्मा वा इदमेक एवाग्र आसीत् ।

---

आत्मेति । आप्नोतेरत्तेरततेर्वा परः सर्वज्ञः सर्वशक्तिरशनायादिसर्वसंसारधर्मवर्जितो नित्यशुद्धबुद्धमुक्तस्वभावोऽजोऽजरोऽमरोऽमृतोऽभयोऽद्वयः । वै इदं यदुक्तं नामरूपकर्मभेदभिन्नं जगदात्मैवैकोऽग्रे जगतः सृष्टेः प्रागासीत् । किं नेदानीं स एवैको न कथं तर्ह्यासीदित्युच्यते । यद्यपीदानीं स एवैकस्तथाप्यस्ति विशेषः । प्रागुत्पत्तेरव्याकृत-

---

नत्वश्रवणात् सर्व्वशक्तित्वम् । अत्तीत्यनेन संहर्तृत्वम् । अततीत्यनेन त्रिविधपरिच्छेदराहित्यमुच्यत इति । अशनायादिवर्जितत्वादिति विषयादानेन द्रष्टा च प्रत्यगभेदश्चोच्यत इत्युक्तरूप आत्मपदेनोच्यत इत्यर्थः । अभिव्यक्तनामरूपव्यावर्त्तनेनात्ममात्रावधारणार्थो वैशब्द इत्याह । वै इति ॥ यदुक्तमिति पूर्वत्र प्राणशब्दितप्रजापतिरूपत्वेन यदुक्तमित्यर्थः । यदुतेति पाठः साधुः । अत्रेदमितिपदेन प्रत्यक्षादिप्रसिद्धमुच्यते । अग्रे इति विशेषणादासीदिति भूतत्वोक्तेश्च पूर्वमेवात्ममात्रं इदानीं त्वात्ममात्रं न भवति किन्तु पृथक् तदिति प्रतीयत इति नाद्वितीयात्मेति शङ्कते । किं नेदानीमिति ॥ यदस्य मायिकस्य कदाचिदपि स्वतः सत्त्वायोगादात्मनो द्वितीयत्वस्य न विरोध इत्याह । नेति ॥ तर्ह्यात्ममात्रस्येदानीमपि सत्त्वे तस्य भूतत्वोक्तेः का गतिरिति पृच्छति । कथं तर्ह्यासीदिति ॥ इदमुपलक्षणमग्रे इत्यपि कथमिति द्रष्टव्यम् । जगतः कालत्रयेऽप्यात्मव्यतिरेकेणाभावो यद्यपि तथापि तथा बोधने बोध्यस्य प्रत्यक्षादिविरोधाशङ्कयोक्तमात्मतत्त्वं बुद्धौ नारोहेत् । अतःप्रागुत्पत्तेरासीदित्युच्यते बोध्यस्य चित्तमनुसृत्य तदपि जगतो नामरू-

रूपदमानमात्मभूतं आत्मैकशब्दप्रत्ययगोचरं जगदिदानीं व्याकृतनामरूपभेदत्वादनेकशब्दप्रत्ययगोचरमात्मैकशब्दप्रत्ययगोचरञ्चेति विशेषः। यथा सलिलात् पृथक् फेनं नामरूपव्याकरणाभाक् सलिलैकशब्दप्रत्ययगोचरमेव फेनम्। यदा सलिलात् पृथङ्नामरूपभेदेन व्याकृतं भवति तदा सलिलं फेनश्चेत्यनेकशब्दप्रत्ययभाक् सलिलमेवेति चैकशब्दप्रत्ययभाक् न फेनं भवति तद्वत्। नान्यत् किञ्चन

---

पाभिव्यक्त्यभावमपेक्ष्यैव न त्विदानीमात्ममात्रत्वाभावाभिप्रायेणेत्युत्तरमाह। यद्यपीत्यादिना॥ अव्याकृतो नामरूपभेदो यस्मिन्नात्मनि तथाविधात्मभूतमित्यर्थः। आत्मैकशब्दप्रत्ययगोचरमिति यद्यपि प्रागुत्पत्तेर्वाग्बुद्ध्योरभावेन शब्दप्रत्ययौ तावपि न स्तस्तथापीदानीं तदानींतनात्मतत्त्वं सुप्तादुत्थितः सुप्तिकाले नात्मतत्त्वमिव प्रमाणान्तरे ज्ञात्वा तदानीमात्मैक एवासीदिति वदति। प्रत्येतिचेति॥ तथोक्तमीश्वरस्यैवात्मैकशब्दप्रत्ययौ स्त इति द्रष्टव्यम्। अनेकशब्देति अविवेकिनां घटादिशब्दप्रत्ययगोचरं घटः सन्नित्यात्मशब्दपर्य्यायसच्छब्दगोचरञ्चेत्यर्थः। गोचरशब्दस्य भावप्रधानत्वमङ्गीकृत्य गोचरत्वं यस्येति बहुव्रीहिणा नपुंसकत्वं द्रष्टव्यम्। आत्मैकशब्देति विवेकिनामित्यर्थः॥ उक्तमर्थं दृष्टान्तेन विशदयति। यथेति। अनात्मशब्दव्युत्पत्तिबलात् सर्व्वज्ञादिशब्दोपलक्षितं सत्यज्ञानानन्दरूपोऽखण्डैकरस आत्मोपक्षिप्तः। तस्यैवार्थस्य दृढीकरणार्थमेकादिपदानि। तत्रैक इत्यात्मान्तराभाव उच्यते। एवेत्यनेन वृक्षादावेकत्वेऽपि शाखादिभिर्नानात्ववदेकस्यात्मनो नानात्मत्वाभाव उच्यते इति स्वजातीयभेदस्वगतभेदनिराकरणार्थत्वेन पदद्वयमित्यभिप्रेत्य विजातीयभेदनिराकरणार्थत्वेन नान्यत् किञ्चनेति पदं व्याचष्टे। नान्यदिति। ननु जडप्रपञ्चस्य कारणीभूता जडा माया वर्त्तत इति कथं विजातीयभेदनिषेध इत्यत आह। मिषदिति॥ मायायाः सत्त्वेऽपि तदानीं व्यापाराभावाद्व्यापारवतोऽन्यस्य निषेधः सम्भवतीत्यर्थः॥ ननु निर्व्यापाराया अपि तस्या

## नान्यत्किञ्चन मिषत् ।

न किञ्चिदपि मिषदिति । मिषद्व्यापारवदितरद्वा ।

---

अन्यस्याः सत्त्वं आत्मशब्दोक्तं तस्याखण्डैकरसत्वं न किञ्चिदित्यत आह । इतरद्वेति । निर्व्यापारं चेत्यर्थः । ननु माया तथाविधाऽस्तीति पूर्वोक्तदोषः पुनः स्यादित्याशङ्क्य मिषदित्यनेन न स्वतन्त्रं स्वतः सत्ताकमुच्यते तथाविधस्य च निषेध इति । व्यतिरेकदृष्टान्तमाह । यथेति । अनात्मपक्षपातीति आत्मशक्तित्वात्तत्त्वेनाभूतमात्मपक्षपातीत्युच्यते न तद्भिन्नमित्यर्थः ॥ शक्तित्वेऽपि प्राभाकराणामिव तस्याः स्वतः सत्त्वं स्यादित्याह । स्वतन्त्रमिति ॥ यथा साङ्ख्यानां प्रधानशक्तिभूतं स्वतः सत्ताकमस्ति । काणादानाञ्च तथाविधा अणवः सन्ति तथाविधमात्मव्यतिरिक्तं मिषदित्यनेनानूद्य निषिध्यते । माया तु न तथा भूतेति नोक्तदोष इत्यर्थः । दीपिकायान्तु धातूनामनेकार्थत्वेन मिषदिति धातोरासीदित्यर्थमुक्त्वा नान्यत् किञ्चनासीदिति वाक्यार्थ उक्तः । तदयं वाक्यार्थः इदं जगदग्रे सजातीयविजातीयस्वगतभेदरहितात्मैवासीदित्यनेनात्मनोऽद्वितीयत्वं जगतस्तथाविधात्ममात्रतया मृषात्वञ्च सूचितमनेनाग्रे जगत आत्ममात्रत्वोक्तेर्न किञ्चित्प्रयोजनमात्मैक एवासीन्नान्यत् किञ्चनेत्येतावतैवाखण्डत्वसिद्धेरित्याशङ्का निरस्ता जगन्मृषात्वसूचनस्यैव प्रयोजनत्वात् । न चैवमर्थभेदे वाक्यभेदः स्यादिति वाच्यम् । अखण्डत्वसम्पादनार्थमेव जगदनिर्वचनीयत्वस्येदं जगदखण्डात्मैवेति विशिष्टविशेषणोक्तत्वात् । विशेषणानामन्यार्थोपस्थितेः सोमेन यजेतेत्यत्र चेत्यत्वार्थद्वयस्यापि सूचितत्वाद्वेदान्तेऽपि तस्य त्रय आवसथास्त्रयः स्वप्ना इति जाग्रदादेः स्वप्नत्वेन मृषात्वमुक्त्वा स एतमेव पुरुषं ब्रह्म ततममपश्यदित्यात्मशब्दोक्तम् । ततस्त्वं त्रिविधपरिच्छेदराहित्यलक्षणमखण्डत्वम् वक्ष्यति । न चेदमात्मैवासीदिति सामानाधिकरण्येनात्मनो जगदद्वैविध्यमेव प्रतीयते न तु मृषात्वमिति वाच्यम् । आत्मैक एवेति पदैरुक्तोऽखण्डैकरसे तद्विपरीतजगत्प्रतीतेरतात्त्विकत्वबुद्धिरूपत्वेन मृषात्वसिद्धेर्जगद्वैविध्यस्य घटः सन्नित्यादिवदेव प्रत्यक्ष-

यथा सांख्यानामात्मपक्षपातीति स्वतन्त्रं प्रधानम् । यथा

विद्वत्वेन प्रयोजनाभावेन च तत्प्रतिपादनस्यानुपपत्तेश्च मृषात्वमेव तदर्थः। निषदित्यनेन स्वातन्त्र्यनिषेधेन स्वतः सत्तानिषेधादपि मृषात्वसिद्धेश्च। स्वतः सत्तावत्त्वे स्वव्यापारे स्वातन्त्र्यमेव स्यात् । न चानेन प्रकारेणेदानीमपि मृषात्वस्याबाधकत्वस्य च वक्तुं शक्यत्वादस्य इति विशेषणं व्यर्थमिति वाच्यम् । इदानीमात्माभिन्नतया पृथक् सत्त्वेन च प्रतीयमानत्वेन तस्य वस्तुत आत्ममात्रत्वे बोधिते विरोधप्रतीत्या तत्र पुनरारोहः स्यादिति गुरुशिष्यन्यायेनादौ पृथङ्नामरू-पानभिव्यक्तिदशायामात्ममात्रत्वं बोध्यते। तस्मिन् बोधिते पश्चा-त्तन्न्यायेनेदानीमपि स्वयमेवात्ममात्रत्वं ज्ञास्यतीत्यभिप्रायेणास्य इति विशेषणोपपत्तेः । यद्वा वाजसनेयिके तद्धेदं तर्ह्यव्याकृतमासी-दिति श्रुतेः प्राक्कार्यस्यानभिव्यक्तनामरूपावस्थाबीजभूताव्याकृतात्मतो-च्यते इह त्वात्ममात्रता अतः श्रुत्योर्विरोधपरिहारायोपसंहारे कर्त्तव्ये इहाव्याकृतपदमुपसंह्रियते। तत्र चात्मपदमितीदमग्रे अव्याकृत-मासीत्तच्च यदात्मैवासीदिति वाक्यं सिध्यति। तत्राव्याकृतशब्देन तम आसीत्तमसा गूढमग्रे । मायां तु प्रकृतिं विद्यादित्यादिषु जगद्बीजावस्थायां तमआदिशब्दप्रयोगात् तमोरूपा मायोच्यते तत्कार्यस्याप्यनभिव्यक्तनामरूपात्मकमायात्मकत्वं सिध्यति। त-स्याश्चात्मतादात्म्योक्त्या साङ्ख्यमतवत् स्वतन्त्रत्वनिरासेन तत्र क-ल्पितत्वं सिध्यति। तयोः कार्यकारणभावाद्यभावेन प्रकारान्तरेण तादात्म्यानिर्वाहात्तत्रात्मनोऽवस्तुत्वं तद्भिन्नस्य मृषात्वञ्चात्मनः परिणममानाऽविद्याधिष्ठानत्वेन विवर्त्तोपादानत्वं तस्याश्च परि-णामित्वञ्च सूचितम्भवति। कार्यस्य मृषात्वार्थमेवाव्याकृतात्मत्व-मुच्यते। तस्याव्याकृतस्यात्मतादात्म्येन मायात्वेन च मृषात्वादिदानीन्तु नानभिव्यक्तनामरूपबीजात्मत्वमित्यस्य इति विशेषणमर्थवत्। तदभि-प्रेत्यैव भाष्ये प्रागुत्पत्तेरनभिव्यक्तनामरूपभेदात्मभूतमात्मैकशब्दप्रत्यय-गोचरं जगदिदानीन्तु व्याकृतनामरूपभेदवत्त्वादनेकशब्दप्रत्ययगोचर-मात्मैकशब्दप्रत्ययगोचरञ्चेति विशेष इतीदानीन्तनाभिव्यक्तनामरूप-बीजात्मत्वमेवास्य शब्दस्य भावार्थत्वमुक्तम् । न च भाष्यादिदानीमेव

च कार्य्योपादानामभावो न तद्व्यतिरिक्तान्यदात्मनः किञ्चि-

---

न्मायात्मत्वेन मृषात्वमुच्यतामिति वाच्यम्। इदानीं प्रत्यक्षादि-
विरोधेन तथा बोधयितुमशक्यत्वादित्युक्तत्वान्नामरूपाभिव्यक्तेः सृष्टेः
पूर्व्वमभावेनेदानीमेव विद्यमानत्वेन कादाचित्कत्वादपि रज्जुसर्पा-
दिवन्मृषात्वमिति वक्तुमपि प्रागव्याकृतत्वोक्तिरर्थवतीति न किञ्चि-
दवद्यम्। अथवा जगदधिष्ठानं किञ्चित् सद्रूपं सम्भावयितुमिदमग्र
आसीदित्युच्यते। असम्भाविते तस्मिन्नखण्डत्वोक्तेर्निर्व्विषयत्वं प्रसज्येत।
अनेनासच्छशविषाणादेरिव सद्रूपेणोत्पत्त्यसम्भवात् कार्य्यस्य प्रागवस्था
सदात्मिका चित्सम्भाविता। तस्याश्च चेतनत्वे कार्य्याकारेण स्वतोऽप्रवृत्ते-
रतिरिक्तचेतनाधिष्ठानाङ्गीकारे च गौरवात्। उपादानाधिष्ठान-
त्वयोरेकस्मिन्नेवात्मघटसम्भवाच्च चेतनत्वमात्मैवेत्यनेन सम्भाव्यते।
एवं सम्भाविते ह्यधिष्ठाने उपादानकारणे आत्मन्यखण्डैकरसत्वं
तस्य वक्तुमेक एव नान्यत्किञ्चनेति पदानि अस्मिन् पक्षे चेदमग्र
आत्मैवासीदित्यनेन सम्भावितं कार्य्यस्य प्राग्रूपमनूद्य यदात्मकमिद-
मासीत् स एक एव नान्यत् किञ्चनेत्यखण्डैकरसत्वं विधीयते इति
न कस्यचिदप्यानर्थक्यम्। अत एव छान्दोग्ये सदेव सौम्येदमग्र आसीदि-
त्यस्य सद्रूपकारणसम्भावनार्थत्वादेव तद्विरुद्धार्थे तद्धैक आहुरित्यादिना
सत्कारणवादो निरस्तः। अन्यथा सिद्धस्य सतोऽद्वितीयत्वमात्रविव-
क्षायां तस्याप्रस्तुतत्वप्रसङ्गात्। अस्मिन्नपि व्याख्याने कारणस्याद्वि-
तीयत्वादिवचसा तदन्यस्य मृषात्वमपि सिद्ध्यति। कार्य्यस्य मृषात्वे तन्नि-
रूपितं कारणत्वमपि तथेति। तथाविधात्मज्ञानान्मुक्तिरपि वक्ष्यमाणा
सिद्ध्यतीति न किञ्चिदवद्यम्। दीपिकायान्तु इदमात्मैवासीदिति
सामानाधिकरण्यबाधायां यश्चौरः स स्थाणुरितिवदिदानीं जगद्विषि
ष्टात्मप्रतिभासेन तत्र बाधानुपपत्त्या स्थितिकालम्परित्यज्याग्रशब्देन
सृष्टेः प्राचीनः काल उपादीयते। सृष्टप्रपञ्चबाधया सिद्धस्याख-
ण्डैकरसत्वस्य स्पष्टीकरणार्थमेकादिशब्दा इति नकस्याप्यानर्थक्यमि-
त्युक्तम् तत्राऽग्रशब्दस्य न प्रयोजनमारोप्य प्रतीतिदशायामेव यश्चौरः
स स्थाणुरित्यादौ बाधदर्शनेनेहापि जगत्प्रतीतिदशायामेव तद्बाध-

दपि वस्तु विद्यते। किन्त्वात्मैक एव आसीदित्यभिप्रायः। स सर्वज्ञस्वाभाव्यादात्मा एकः सन्नीक्षत। ननु प्रागुत्पत्तेरकार्य्यकारणत्वात् कथमीक्षितवान्। नायं दोषः। सर्वज्ञस्वाभाव्यात्। तथा च मन्त्रवर्णः। अपाणिपादो

नस्य न्याय्यत्वात् सृष्टेः प्रागप्रतीतस्य बाधानुपपत्तेश्च। किञ्च कालत्रयनिषेधो हि बाधः प्राक्काल एवेति निषेधे बाध एव न स्यात्। न हि पाकरक्ते घटे पूर्व्वं न रक्तो घट इति प्रत्ययबाधं मन्यन्ते। अत एव भाष्ये प्रागुत्पत्तेरव्याकृते नामरूपभेदात्मभूतं जगदासीदिति जगतः कारणात्मना सत्तैवोक्ता न तु बाध इति। न च सृष्टेःप्राक्कालाभावेनाऽप्य इति कालसम्बन्धायोग इति वाच्यम्। प्राक्काले घटशरावादिकं मृदेवासीदित्यादिवाक्येषु कालसम्बन्धेनैव बोधनस्य व्युत्पन्नत्वेनेहापि तथैव बोधयितुं कालसम्बन्धारोपोपपत्तेः। यथा देवदत्तस्य शिर इत्यादाववयवावयविभेदेन बोधनस्य दृष्टत्वेन राहोः शिर इत्यादावपि तत्कल्पनम्। यथा वा पूर्व्वकालेऽपि काल आसीदित्यादौ कालान्तरसम्बन्धारोपणं तद्वत्। दीपिकायान्तु परत्वापरो बोधनीय इति न्यायेन परमे तत्कालस्य नित्यत्वेन प्रागपि सत्त्वात्तद्रीत्या कालसम्बन्ध उक्त इत्युक्तम्। न चात्मा वा आसीदिति सत्तावैशिष्ट्यमेव प्रतीयते कर्त्तुः क्रियाश्रयत्वादिति वाच्यम्। सविता प्रकाशत इत्यादौ कर्त्तृवाचिप्रत्ययस्य धात्वर्थमात्रार्थत्वेन सवितुःप्रकाशरूपप्रत्ययवदात्मन एव सद्रूपत्वप्रतीतेः। अतिरिक्त सत्ताजात्यभावाच्चान्यथा सत्तासीदित्यादावगतेरिति सर्व्वं सुस्थम्।

एवं सूचितमात्मनोऽखण्डैकरसत्वं साधयितुमुपक्षिप्तं प्रपञ्चस्य मृषात्वं तदध्यारोपापवादाभ्यां दृढीकर्त्तुमध्यायशेषः तत्राप्यध्यारोपार्थं स जातो भूतानीत्यतः प्राक्तनस्तदादिरपवादार्थः। तत्रापि वाचारम्भणन्यायेनात्मातिरिक्तस्य विकारस्य मृषात्वं वक्तुं सृष्टिवाक्यम्। तत्र स्रष्टुरात्मनः सम्भावितं चेतनवत्त्वं दृढीकर्त्तुमीक्षणमाह। स सर्वज्ञेति-

अजवनो ग्रहीता इत्यादिः । केनाऽभिप्रायेणेत्याह । लोकानम्भः प्रभृतीन् प्राणिकर्मफलोपभोगस्थानभूतान्नु सृजै सृजेमेति । एवमीक्षित्वाऽऽलोच्य स आत्मा इमाँल्लोकानसृजत सृष्टवान् ॥ १ ॥

---

नन्वेकस्याद्वयस्य कथमीक्षणं साधनाभावादित्याशङ्क्य न तस्य साधनापेक्षेत्यभिप्रेत्यैकः सन्नपि सर्वज्ञस्वाभाव्यादैक्षतेत्युक्तमतोऽनागमाभावश्चाशङ्क्यः ॥ इममेवाभिप्रायं शङ्कापरिहाराभ्यां स्फुटीकरोति । नन्विति ॥ तत्र करणानीन्द्रियाणि कार्यं शरीरमिति विवेकः । तद्रहितस्यापि सार्वज्ञ्ये श्रुतिमाह । तथा चेति ॥ अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तमिति मन्त्रशेषः न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधाऽनुभूयते स्वाभाविकी ज्ञानबलक्रियापि चेत्यादिरादिशब्दार्थः ॥ ननु स्वाभाविकनित्यचैतन्येन कथं कादाचित्कमीक्षणमिति । अत्र केचित् सर्गादौ प्राणिकर्मभिरेका सृज्याकाराऽविद्यावृत्तिरुत्पद्यते । तस्यामात्मचैतन्यम् प्रतिबिम्बितं तदेवेक्षणं तस्यादिकार्यत्वात् सर्गनिर्वाहकमिति न तत्राप्यविद्यान्तरापेक्षा सर्वैरपि प्रथमकार्येऽनवस्थापरिहारायैव चेष्टत्वादित्याहुः अपरे तु प्राणिकर्मवशात् सृष्टिकालेऽभिव्यञ्जकोपाधिभूतानभिव्यक्तनामरूपावच्छिन्नं सत्स्वरूपचैतन्यमेवोन्मुखस्य कादाचित्कत्वात् कदाचित् कर्म्मैक्षणमित्याहुः । अन्ये त्वीक्षणमाकाशस्य कारणस्याचैतन्यव्यावर्त्तिपरत्वादीक्षणे तात्पर्याभावाच्च न तत्र भूयानाग्रहः कर्त्तव्य इत्याहुः ॥ नु शब्दो वितर्कार्थ इति सन्धिं निधायाह । न्विति ॥ लोकार्थस्य विभ्वादेः स्वात्मन्यसम्भवात् कोटौ तदन्यत्वमाह । सृजे इति । सृजेयमितीत्यस्यैवार्थ इति पूर्व्वेणान्वयः । ईक्षणस्य पूर्व्वकालीनत्वं वदन् सृष्टिहेतुत्वमाह । एवमिति ॥ १ ॥

# स इमाँल्लोकानसृजत

यथेह बुद्धिमांस्तक्षादिरेवम्प्रकारान् प्रासादादीन् सृजा इतीक्षित्वेक्षणानन्तरं प्रासादादीन् सृजति तद्वत्। ननु सोपादानस्तक्षादिः प्रासादादीन् सृजतीति युक्तं निरुपादानस्त्वात्मा कथं लोकान् सृजतीति। नाऽयं दोषः। सलिलफेनस्थानीये नामरूपेऽव्याकृते आत्मैकशब्दवाच्ये व्याकृतफेनस्थानीयस्य जगत उपादानभूते सम्भवतः। तस्मा-

---

अत्रेक्षणपूर्वकसृष्ट्युक्तेः प्रयोजनं स्रष्टुश्चेतनत्वसिद्धिरित्यभिप्रेत्य तथाविधस्य तस्य चेतनत्वमुदाहरति। यथेति॥ नन्वीक्षितुस्तक्षादेर्बाह्योपादानकारणसहितत्वात्प्रासादादेः स्रष्टृत्वं युक्तम्। इत्यात्मा त्विदमेक एवेत्युक्तत्वाद्द्वितीयत्वेनोपादानकारणान्तराभावात् स्रष्टृत्वं न युक्तमिति शङ्कते। नन्विति॥ न च बहु स्यां प्रजायेयेति तदात्मानं स्वयमकुरुतेति श्रुत्याऽऽत्मन एवोपादानत्वात्सोपादानकारणमेवेति वाच्यम्। मृदादेर्व्यवहारिकत्वेन घटादिवत्परिणामत्वात्तस्य परिणाम्युपादानं वक्तव्यम्। न चात्मा तथा भवितुमर्हति तस्य निरवयवत्वेनापरिणामित्वादिति भावः॥ अत्र वियदादेः परिणामित्वमङ्गीकृत्य तत्राभिव्यक्तनामरूपावस्थं बीजभूतमव्याकृतं तद्धेदं तर्ह्यव्याकृतमासीत्तम आसीत् मायां तु प्रकृतिं विद्यादित्यादिश्रुतिसिद्धं परिणाम्युपादानमस्तीत्याह। नायमिति॥ आत्मभूत इत्यनेनानभिव्यक्तनामरूपसहिताव्याकृतस्यात्मन्यध्यस्तत्वेन परिणममानाविद्याधिष्ठानत्वेनात्मनो विवर्त्तोपादानत्वं तयोरात्ममात्रत्वेन रूपत्वात्॥ आत्मनो द्वितीयत्वञ्च न विरुद्धम् इति दर्शयति। नामरूप इति॥ तदाश्रयमव्याकृतमित्यर्थः। इदानीं घटादिष्वपि विवर्त्तत एव परिणामो नामविवर्त्तादन्यो नान्यश्च विवर्त्त इति परिणाम इति च पर्य्याय इत्यारम्भणाधिकरणन्यायेन विवर्त्ततया सिद्धेर्विकारेऽप्यात्मकृतेः परिणामादिति सूत्रकारेण परिणामशब्दप्रयोगाच्च सिद्धं

**अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं**

दात्मभूतनामरूपोपादानः सन् सर्वज्ञो जगन्निर्म्मिमीत इति न विरुद्धम्। अथवा यथा विज्ञानवान्मायावी निरुपादान आत्मानमेवात्मान्तरत्वेनाकाशे गच्छन्तमिव निर्म्मिमीते तथा सर्वज्ञो देवः सर्वशक्तिर्महामाय आत्मानमेवात्मान्तरत्वेन जगद्रूपेण निर्मिमीत इति युक्ततरम्। एवञ्च सति कारणकार्य्योभयासद्वादादिपक्षाश्च न प्रसज्यन्ते सुनिराकृताश्च भवन्ति। काँल्लोकानसृजतेत्याह।

---

तत्र चात्मन एवोपादानत्वम्। माया तु सहायमात्रमित्यभिप्रेत्यात्मनि चैवं विचित्राश्च हीति द्वितीयस्य प्रथमपादे सूत्रोपन्यासेन परिहारान्तरमाह। अथवेति॥ विज्ञानवानित्याकाशेन गच्छन्तमिव स्थितमात्मान्तरं व्याप्नोतीति ज्ञानवानित्यर्थः। इदञ्च विशेषणमीश्वरस्य स्रष्टृत्वस्य च शुक्तिरजतादौ विवर्त्ते अदर्शनात् कार्य्यस्य तत्तुल्यत्वेन तदुभयं न स्यादिति शङ्कानिरासार्थं तन्निरासश्च मायाविनिर्म्मिते विवर्त्ते तदुभयदर्शनादिति। निरुपादान इति स्वव्यतिरिक्तोपादानरहित इत्यर्थः॥ सर्वशक्तित्वे हेतुमाह। महामाय इति॥ आत्मान्तरत्वेनेत्यात्मभिन्नत्वेनेत्यर्थः। युक्ततरमिति इन्द्रो मायाभिः पुरुरूप ईयते मायया त्वन्यदिव भवति बहु स्यां प्रजायेय, वाचारम्भणं विकारः, यागादग्नेरग्नित्वमित्यादिबहुश्रुतिसम्मतत्वादित्यर्थः। एवञ्च सति सत एवात्मनः कारणकार्य्यरूपेणावस्थानाङ्गीकारान्निर्हेतुकमेव कार्य्यमुत्पद्यत इति यदृच्छावादिनाम्। असदेव कार्य्यमुत्पद्यत इति नैयायिकानाम्। उभयमप्यसदिति शून्यवादिनां पक्षः। आदिशब्देन सदेव कार्य्यमुत्पद्यत इति साङ्ख्यादीनां परिणामपक्ष उक्तः। असत्कार्य्यपक्षे त्वसतः सत्त्वापत्तिः शशविषाणादेरप्युत्पत्तिप्रसङ्गश्च दोषः। परिणामवादे च तस्य पूर्वमेव कारणे सत्त्वात्कुलालादिकारकव्यापारवैयर्थ्यं पूर्वमसत्त्वे कारणस्यैवावस्थान्तरापत्तिलक्षणपरिणामत्वानुपपत्तिः। उत्पत्त्यनन्तरमसत्त्वे ततो

**द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः। पृथिवी म-
रोया अधस्तात्ता आपः ॥ २ ॥**

---

अम्भो मरीचीर्मरमाप इति। आकाशादिक्रमेणाण्डमु-
त्पाद्याम्भः प्रभृतीन्लोकानसृजत। तानम्भः प्रभृतीन् स्वय-
मेव व्याचष्टे श्रुतिः। अदस्तदम्भः शब्दवाच्यो लोकः परेण
दिवं द्युलोकात्परेण परस्तात् सोऽम्भः शब्दवाच्यो लोकः।
अपाम्भरणात्। द्यौः प्रतिष्ठाऽऽश्रयस्तस्याम्भसो लोकस्य।
द्युलोकादधस्तादन्तरिक्षं यत्तन्मरीचयः। एकोऽप्यनेकस्था-

---

व्यवहाराभिज्ञैरपरीक्षकत्वादनुपपत्तिश्च दोषः। उभयारुचित्वे चोभयपक्षोक्त-
दोषः। ते विवर्तवादेन प्रसज्यन्त इत्यर्थः। यद्वाऽस्माभिर्विवर्तवादस्याङ्गी-
कारात् परिणामादिपक्षानङ्गीकारे परपक्षाङ्गीकारलक्षणो दोषो न
सम्भवतीत्याह। एवञ्च सतीति॥ अनिराकृताश्चेति विवर्तवादस्यैव
परिग्रहे पक्षान्तरेषु दोषसूचनादद्वितीयात्मनस्तद्विपरीतप्रपञ्चाकार-
ताभिधायिन्या वक्ष्यमाणमिति श्रुत्या विवर्तवादस्यैव परिगृहीतत्वेन
पक्षान्तराणां श्रुतिबाह्यत्वाच्च ते निराकृता भवन्तीत्यर्थः। लोकानां
भौतिकत्वादण्डान्तर्वर्तित्वाच्च भूतसृष्टितत्पञ्चीकरणाण्डसृष्ट्यनन्तरं तत्-
सृष्टिरिति गुणोपसंहारन्यायमाश्रित्याह। आकाशादीति॥ स्वयमेव
व्याचष्टे श्रुतिः। तेषां लोकेष्वप्रसिद्धत्वादित्यर्थः। द्युलोकात्परस्ताद्ये
महरादयो लोका यश्च तस्याम्भसो लोकस्याश्रयो द्युलोकस्ते सर्वे अम्भःशब्दे-
नोच्यन्ते। अम्भस्तत्र विद्यमानत्वादित्याह। अद इति॥ अन्त-
रिक्षं मरीचयः इत्यस्यार्थमाह। द्युलोकादिति॥ मरीचिशब्देन सूर्य-
किरणसम्बन्धादन्तरिक्षलोकं लक्षयित्वा तस्यैकत्वेऽपि प्रदेशभेदाद्बहुवचनं
युक्तं इदानीं बहूनां मरीचीनां लक्षकत्वात्तद्गतबाहुल्यं गङ्गायां घोष
इत्यत्र लाक्षणिकगतस्रोत इवेत्याह। मरीचिभिर्वेति॥ ननु मरीचि-
शब्देनान्तरिक्षलोकस्वीकारे मरीचिसम्बन्धो निमित्तान्तरमुच्यत इति

स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति । सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत् ॥३॥

---

सर्वप्राणिकर्मफलोपादानाधिष्ठानभूतान् चतुरो लोकान् सृष्ट्वा स ईश्वरः पुनरेवेक्षत । इमे नु अम्भः प्रभृतयो मया सृष्टा लोकाः परिपालयितृवर्जिता विनश्येयुः । तस्मादेषां रक्षणार्थं लोकपालान् लोकानां पालयितॄन् सृजेऽहमिति । एवमीक्षित्वा सोऽद्भ्य एवाप्प्रधानेभ्यः पञ्चभूतेभ्यो येभ्योऽम्भः प्रभृतीन् सृष्टवान् तेभ्य एवेत्यर्थः । पुरुषं पुरुषाकारं शिरःपाण्यादिमन्तं समुद्धृत्याद्भ्यः समुपादाय मृत्पि-

---

चेतनात्मा वा इत्यत्रात्मशब्देन संसारी जीवयितृत्वेन विवक्षितः । असंसारिणो मोक्षानुपपत्तेः । संसारश्च संसरणाधिकरणलोकान् तदुपाधिभूतं लिङ्गशरीरं तदभिमानिनो देवान् तदधिष्ठानं स्थूलशरीरं संसारसाधनप्राणादीन् तदभिमानिनं तद्भोक्तारमन्तरेण नोपपद्यत इति तस्य सृष्टिमथमात्मवत् इत्यनेन ग्रन्थेन क्रमेण वक्तुं संसरणाधिष्ठानलोकसृष्टिमुक्त्वा तत्पालयितृदेवतासृष्टिकथनद्वारा समष्टिस्थूलशरीरस्य समष्टिलिङ्गशरीरस्य तदभिमानिनां देवानाञ्च सृष्टिं वक्तुमारभते ॥ स ईक्षतेति ॥ तद्व्याचष्टे । सर्वप्राणीति ॥ फलस्य तदुपादानस्य तत्साधनस्य चाधिष्ठानभूतानीत्यर्थः । अव्ययानामनेकार्थत्वान्नुशब्दस्तु शब्दार्थः । वैलक्षण्यं लोकानामाह । इमे न्विति ॥ अहमितीत्यस्य ईक्षतेति पूर्वेणान्वयः ॥ समष्टिलिङ्गशरीरतदभिमानिनां विराडवयवजन्यत्वात्तदर्थं विराट्सृष्टिमाह । एवमीक्षित्वेति ॥ यद्यपि लोकोत्पत्तेः पूर्वमेवाण्डोत्पत्तिरुक्ता अण्डस्थत्वादाम्भः प्रभृतीन् लोकानसृजतेति भाष्यकारेण तथापि तस्यैवोत्पत्तिरिहानूद्यते लोकपालसृष्ट्यर्थमिति न विरोध इति भावः । अद्भ्य एवेत्येवकारार्थमाह । येभ्य इति ॥ कुलालः पृथिव्याः

तमभ्यतपत्तस्याऽभितप्तस्य मुखं निरभिद्यत यथाण्डम्। मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्येतां अक्षिभ्याञ्चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत

---

मिव कुलालः पृथिव्या समूर्च्छयत् संमूर्च्छितवान् सम्पिण्डितवान् स्वावयवसंयोजनेनेत्यर्थः ॥ ३ ॥

तं पिण्डं पुरुषविधमुद्दिश्याभ्यतपत् तदभिध्यानं सङ्कल्पं कृतवानित्यर्थः। यस्य ज्ञानमयं तप इति श्रुतेः। तस्याभितप्तस्येश्वरसङ्कल्पेन तपसाभितप्तस्य पिण्डस्य मुखं निरभिद्यत मुखाकारं सुषिरमजायत। यथा पक्षिणोऽण्डं निरभिद्यत। एवं तस्मान्निर्भिन्नान्मुखाद्वाक्करणमिन्द्रियं निरवर्त्तत तदधिष्ठानाग्निस्ततो वाचो लोकपालः। तथा

---

सकाशान्मूर्त्तिपिण्डमेवेत्यन्वयः। स्वावयवेति॥ भूतानां परस्परावयवसंयोजनेनेति श्लिष्टिः संयोगस्तेनेत्यर्थः ॥३॥

विराडुत्पत्तिमुक्त्वा तदवयवेभ्यो लोकपालोत्पत्तिमाह। तं पिण्डमित्यादिना॥ तपःशब्देनाभिध्यानशब्दितं ज्ञानमुच्यते न कृच्छ्रादी त्यत्र श्रुतिमाह। यस्येति॥ यस्य तपो ज्ञानमेव न कृच्छ्रादीत्यर्थः। ततो वाचो लोकपालोऽग्निर्वागधिष्ठाता निरवर्त्ततेत्यन्वयः। यद्यपि वागादिकारणजातं अपञ्चीकृतभूतकार्य्यं न मुखादिगोलककार्य्यं तथापि मुखाद्याश्रये तदभिव्यक्तेर्मुखाद्वागित्युक्तम्। नासिकाभ्यां प्राण इत्यत्र प्राणशब्देन प्राणवृत्तिसहितं घ्राणेन्द्रियमुच्यते। अधिष्ठानमिति गोलकमित्यर्थः। त्वग्गोलकं लोमेति। लोमशब्दचरितं स्पर्शनेन्द्रियमुच्यते। ओषधिवनस्पतय इति ओषध्याद्यधिष्ठातृदे-

त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः ॥४॥ इति प्रथमः खण्डः ॥ १ ॥

---

नासिके निरभिद्येताम्। नासिकाभ्यां प्राणः प्राणाद्वायुरिति सर्व्वत्राधिष्ठानं करणं देवता च त्रयं क्रमेण निरभिन्नमिति। अक्षिणी कर्णौ त्वक् हृदयमन्तःकरणाधिष्ठानम्। मनोऽन्तःकरणम्। नाभिः सर्वप्राणनिबन्धनस्थानं। तस्मादपानसंयुक्तत्वादपान इति पाय्विन्द्रियमुच्यते। तस्याधिष्ठात्री देवता मृत्युर्यथान्यत्र तथा शिश्नं निरभिद्यत

---

वता वायुरुच्यते। चित्तन्तु चेतो हृदयम्। हृदयशब्दा हृदयशब्देन्त्वादौ हृदयशब्दस्यान्तःकरणार्थत्वदर्शनान्मनःशब्देनापि तस्यैवाभिधाने पौनरुक्त्यमित्यत आह। हृदयमिति॥ अन्तःकरणाधिष्ठानं हृदयकमलमुच्यत इत्यर्थः। सर्वप्राणनिबन्धनस्थानमिति गुदामूलमित्यर्थः॥ अपानशब्देन पाय्विन्द्रियलक्षणायां सम्बन्धमाह। अपानेति॥ ननु शिश्नं निरभिद्यतेति पर्य्याये शिश्नरेतसोरुत्पत्त्यभिधाने स्त्रीयोन्यादेरुत्पत्तिरनुक्ता स्यादित्याशङ्क्य शिश्नशब्देनोपस्थेन्द्रियस्थानं लक्ष्यते। रेत इति तद्विसर्गार्थत्वेन तत्सहितमुपस्थेन्द्रियम्। अप्शब्देन तद्वाचितपञ्चभूतोपाधिकः प्रजापतिश्चोच्यत इत्याह। यथेति॥ यथाऽन्यत्र पर्य्यायान्तरे स्थानं करणं देवता चेति त्रयमुक्तं एवमिहापि शिश्नादिशब्दैस्त्रयमभ्युपगन्तव्य इत्यर्थः। रेत इति॥ इन्द्रियमुच्यत इत्यन्वयः तल्लक्षणायां सम्बन्धमाह।

# ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे

प्रजननेन्द्रियस्थानमिन्द्रियं रेतोविसर्गार्थत्वात्सह रेतसो-च्यते रेतस आप इति ॥ ४ ॥ प्रथमखण्डभाष्यम् ॥ १ ॥

ता एता अग्न्यादयो देवता लोकपालत्वेन सङ्कल्प्य सृष्टा ईश्वरेणास्मिन् संसारार्णवे संसारसमुद्रे महत्यवि-द्याकामकर्मप्रभवदुःखोदके तीव्ररोगजरामृत्युमहाग्राहे अनादावनन्ते अपारे निरालम्बे। विषयेन्द्रियजनितसु-खलवलक्षणविश्रामे पञ्चेन्द्रियार्थतृष्णामारुतविक्षोभोत्थिता-नर्थशतमहोर्म्मौ महारौरवाद्यनेकनिरयगतहाहेत्यादिकू-जिताक्रोशनोद्भूतमहारवे सत्यार्जवदानदयाहिंसादमश-

---

सह रेतसेति रेतसा सहितं तत् सम्बद्धमित्यर्थः। सम्बन्धमुपपादयति। रेतो विसर्गार्थत्वादिति ॥ ४ ॥ प्रथमखण्डभाष्यटीका ॥ १ ॥

एवं समष्टीनामिन्द्रियाणां तदभिमानिदेवतानाञ्चोत्पत्तिमुक्त्वा अथ तासां देवतानां भोगयोग्यास्वव्यष्टिदेहसृष्टिं तेषु देवतानां भोगार्थं व्यष्टिरूपेण प्रवेशञ्च विवक्षुस्तदुपोद्घातत्वेन क्षुत्पिपासयोः सृष्टिं दर्शयति। ता एता इति॥ तच्छब्दार्थमाह। अग्न्यादय इति॥ एतच्छ-ब्दार्थमाह। लोकपालत्वेनेति॥ अशनायादिसृष्टेरुपयोगित्वेनैतासां सङ्कल्पज्ञानपूर्वकं संसारे अर्णावरूपे पतितत्वमासक्तत्वं तन्मात्रत्वा-भिमानेन बद्धत्वं तदाह। अस्मिन्निति॥ अर्णवसादृश्यमाह। अवि-द्येत्यादिना॥ अविद्यादिप्रभवं दुःखमेव। दुःप्रवेशनगुणेनोदकमि-वोदकं यस्मिन् तीव्ररोगादय एव भयङ्करत्वेन ग्राहा नक्रादयस्तस्मिन्स-म्यग्ज्ञानमन्तरेण विनाशाभावादनन्ते अज्ञानासक्तस्वभावेनापारे विश्रामस्थानाभावेन निरालम्बे समीचीनविश्रामस्थानाभावेऽपि तदाभासोऽस्तीत्याह। विषयेन्द्रियेति॥ विषयेन्द्रियसम्बन्धज-

महत्त्वाद्यात्मगुणपाथेयपूर्णज्ञानोडुपे सत्सङ्गसर्वत्याग-मार्गे मोक्षतीरे एतस्मिन्महत्यर्णवे प्रापतन् पतितवन्तः। तस्मादग्न्यादिदेवताप्यत्रत्यापि या गतिर्व्याख्याता ज्ञान-कर्मसमुच्चयानुष्ठानफलभूता सापि नालं संसारदुःखोप-शमायेत्ययमत्र विवक्षितार्थः।

---

नितान्तखेदरूपो विश्रामो यस्मिन् पञ्चेन्द्रियाणामर्थेषु विषयेषु शब्दा-दिषु या तृष्णा सा एव मारुतस्तत्कृतो यो विक्षोभस्तेनोत्थिता अनर्थश-तानि विषयसम्पादिता क्लेशास्त एवोर्म्मयो यस्मिन् महारौरवादय एवानेके निरया नरकविशेषास्तद्गतानां गर्भवासतन्निष्क्रमणबाल्यादयो मरणान्ता ये ऽनेके निरया दुःखजनकत्वात्तद्गतानाञ्च यानि हा हेत्या-दीनि कूजितानि स्वल्पध्वनय आक्रोशनानि महाध्वनयः तदुद्भूतो महारवो यस्मिन्। महापातकाद्यनेकनिरयेति पाठे महापातकजन्या निरया इति द्रष्टव्यम्। संसारार्णवस्यैवम्भूतत्वे तस्य तरणासम्भवाक्षे-पणाख्यानर्थक्याविवेकिनां तथात्वेऽपि विवेकिनां तत्तरणोपायोऽस्ती-त्याह। सत्त्वेति॥ सत्त्वादयो ये आत्मगुणास्त एव पाथेयं पथ्यशनं तेन पूर्णं ज्ञानमेवोडुपः प्लवो यस्मिन्। सत्सङ्गः सन्न्यासः तावेव मार्गौ ज्ञानोडुपप्रवृत्तिहेतुर्यस्मिन् मोक्षे सति पुनः संसारार्णवस्पर्शा-भावात् स एव तीर्त्वा तीरं यस्मिन्नेतस्मिन् प्रत्यक्षसिद्धेऽर्णवे इत्यर्थः। अत्र पतनं नाम स्वरूपाज्ञानेन संसारे अहमभिमानेन सक्तत्वम्। ननु संसारार्णवपतितत्वं वक्ष्यमाणाशनायादियोग इत्यादि सर्व्वोऽपि बन्ध-स्तदभिमानिनो जीवस्य वक्तव्यो न देवतानाम्। न च तासामपि तत्राभि-मानोऽस्तीति तदुक्तमिति शङ्कनीयम्। तथापि प्राधान्यतोऽभिमानिनं जीवं विहायाप्राधान्यतोऽभिमानिनीषु तदुक्तेरभिप्रायो वक्तव्य इत्यत आह। तस्मादिति॥ यस्मात् संसारार्णवपतितत्वं तासां तस्मादित्यर्थः॥

प्रापतंस्तमशनायापिपासाभ्यामन्ववार्जत्। ता एन-

---

यत एवं तस्मादेवं विदित्वा परं ब्रह्मात्मात्मनः सर्वभूतानाञ्च यो वक्ष्यमाणविशेषणः प्रकृतश्च जगदुत्पत्तिस्थिति संहारहेतुत्वेन सर्वसंसारदुःखोपशमनाय वेदितव्यस्तस्मादेष पन्थाः। एतत् कर्मैतद्ब्रह्मैतत् सत्यं यदेतत् परब्रह्मात्मज्ञानम्। नान्यः पन्था विद्यतेऽयनायेति मन्त्रवर्णात्। तं स्थानकरणदेवतोत्पत्तिबीजभूतं पुरुषं प्रथमो-

---

महारौरवाद्यनेकनिरयविगर्हणेति पाठे उक्तनिरयो गतिर्यथा दुःखोपशमनाय नालं तथा सापि नालमिति पूर्वेणान्वयः॥ तद्विवक्षाया अपि प्रयोजनमाह। यत एवमिति॥ एवं विदित्वेति नालमिति विदित्वेत्यर्थः॥ आत्मनः सर्वभूतानाञ्चात्मा स आत्मा वा इदमित्यादिना जगदुत्पत्त्यादिहेतुत्वेन च यः प्रकृतः स परंब्रह्म वेदितव्य इत्यन्वयः। नन्वेष पन्थाः एतत्कर्मैतद्ब्रह्मैतत्सत्यमित्युपक्रम्योक्तमिति चा इत्यादिना कर्मसम्बन्धिसमुच्चयब्रह्मात्मज्ञानस्यैवोक्तत्वात् तस्यैव मोक्षसाधनत्वं मोक्षकेवलात्मज्ञानमात्रस्येत्याशङ्क्यैष पन्था इत्यादि ब्रह्मात्मज्ञानमेवोक्तं न कर्मसमुच्चितं ज्ञानम्॥ तस्योक्तवाक्येन संसारहेतुत्वावगमेन सत्यत्वायोगादित्याह। तस्मादेष पन्था इति॥ यस्मात् कर्मसहितस्य प्राणविज्ञानस्य संसारफलत्वं तस्मादेष इत्यनेन पदेन यद्ब्रह्मात्मविज्ञानं तदेवोक्तमित्यन्वयः। तमेव विदित्वातिमृत्युमेति। नान्यः पन्था विद्यतेऽयनायेत्यनेनापि केवलात्मज्ञानव्यतिरिक्तपथनिषेधादप्युक्तमेव ज्ञानं पन्था इत्याह। नान्य इति॥ एष पन्था इति ब्रह्मात्मज्ञानमुपक्रम्य मध्ये प्राणविज्ञानोक्तिस्तु प्राणोपासनया चित्तैकाग्र्ये सति तत्फलाच्च वैराग्ये सति एष पन्था इत्युपक्रान्तं मुख्यं ज्ञानं वक्तुं शक्यमित्यभिप्रायेणेति भावः॥ यद्यप्येतद्वाक्यव्याख्यानावसरे कर्ममार्गोऽपि पथिशब्दार्थत्वेनोक्तस्तथापि ज्ञानमार्गोपायत्वेन स उक्तो न प्राधान्येनेति भावः। ननु पिण्डस्था-

मब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति ॥ १ ॥

ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति।

---

त्यादितं पिण्डमात्मानमशनायापिपासाभ्यामन्ववार्जदनुगमितवान् संयोजितवानित्यर्थः। तस्य कारणभूतस्याशनायादिदोषवत्त्वात् तत्कार्यभूतानामपि देवतानामशनायादिमत्त्वम्। तास्ततोऽशनायापिपासाभ्यां पीड्यमाना एनं पितामहं स्रष्टारमब्रुवन्नुक्तवत्यः। आयतनमधिष्ठानं नोऽस्मभ्यं प्रजानीहि विधत्स्व। यस्मिन्नायतने प्रतिष्ठिताः समर्थाः सत्योऽन्नमदाम भक्षयाम इति ॥ १ ॥

एवमुक्त ईश्वरस्ताभ्यो देवताभ्यो गाङ्गवाकृतिविशिष्टं पिण्डं ताभ्य एवाद्भ्यः पूर्ववत् पिण्डं समुद्धृत्य मूर्च्छयित्वा आनयत् दर्शितवान्। ताः पुनर्गवाकृतिं दृष्ट्वाऽब्रुवन्। न वै

---

अशनायादियोगे देवतानां कथं तद्वत्त्वं येन तासामन्नादनार्थमायतनप्रश्नः स्यात् यस्मिन् प्रतिष्ठिता इत्यनेनेत्यत आह। तस्येति ॥ पितामहमिति स्वजनकपिण्डजनकमित्यर्थः। अधिष्ठानमिति शरीरमित्यर्थः ॥ ननु विराड्देह एवायतनं वर्त्तते इत्याशङ्क्य तस्यातिप्रौढत्वात्तमापूर्य तत्र स्थातुं वयमसमर्थाः। अन्नञ्च तद्देहपर्य्याप्तं सम्पादयितुमसमर्थाः। अतोऽस्मद्योग्यं व्यष्टिदेहं सृजस्वेत्युक्तवत्य इत्याह। यस्मिन्निति ॥ यद्यप्यस्मदादिव्यष्टिदेहं विनापि चरुपुरोडाशादिहविरदनमस्ति तथापि तदपि हविरदनं व्यष्टिदेवतादेहमन्तरा नास्तीति भावः ॥ १ ॥

व्यष्टिदेहसृष्टिमाह। ताभ्य इति ॥ मूर्च्छयित्वेति निविडतया परस्परावयवसंयोजनेन सृष्ट्वेत्यर्थः। न योग्य इति ॥ शरीरस्योपरिदन्ता-

ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति ॥ २ ॥

ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतम्। ता अब्रवीद्यथायतनं प्रविशतेति ॥ ३ ॥

---

नोऽस्मदर्थमधिष्ठायान्नमत्तुमयम् पिण्डोऽलम्। न वै अलं पर्य्याप्तम्। नयोग्य इत्यर्थः। गवि प्रत्याख्याने तथैवाश्वमानयत्। ता अब्रुवन्न वै नोऽयमलमिति पूर्व्ववत् सर्व्वप्रत्याख्याने ॥ २ ॥

ताभ्यः पुरुषमानयत् स्वयोनिभूतम्। ताः स्वयोनिं पुरुषं दृष्ट्वाऽखिन्ना सत्यः सुकृतं शोभनमिदमधिष्ठानं बतेत्यब्रुवन्। तस्मात् पुरुषो वाव पुरुष एव सुकृतं सर्व्वपुण्यकर्महेतुत्वात्। स्वयं वा स्वेनैवात्मना स्वमायाभिः कृतत्वात्तत्सुकृतमुच्यते। ता देवता ईश्वरोऽब्रवीत्। इष्टमासामिदमधिष्ठानमिति मत्वा सर्व्वे हि स्वयोनिषु रमन्ते। अतो

---

भावेन दूर्व्वादिमूलस्योत्खातुमशक्यत्वादित्यर्थः। अश्वमिति ॥ तस्योभयतोदन्तत्वेनोक्तदोषाभावादित्यर्थः। न वै नोऽयमलमित्यश्वस्यापि विवेकज्ञानाभावादयोग्यत्वादित्यर्थः ॥ गवाश्वग्रहणस्य सर्वतिर्य्यग्देहोपलक्षकत्वादित्यभिप्रेत्योक्तम्। सर्वेति ॥ २ ॥

स्वयोनिभूतमिति ॥ स्वयोनिभूतं विराट्पुरुषदेहसजातीयमित्यर्थः ॥ यस्मात् स्वकीयपरितोषद्योतकेन सुकृतं बतेत्यनेन शब्देन पुरुषदेहसुकृतत्वमुक्तमस्मात्तस्येदानीमपि सुकृतत्वमित्याह। तस्मादिति ॥ स्वयं वेति ईश्वरेण स्वेनैव कृतं भृत्यादिकृतापेक्षया सुकृतं सुष्ठु कृतमित्यर्थः। पृषोदरादित्वात् स्वयमिति स्थाने सुशब्द इत्यर्थः ॥ एवं व्यष्टिदेहसृष्टिमुक्त्वा

**अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशत् ॥ ४ ॥**

---

यथाऽऽयतनं यस्य यद्वदनादिक्रियायोग्यमायतनं तत्प्रविशतेति ॥ ३ ॥

तथास्त्वित्यनुज्ञां प्रतिलभ्य ईश्वरस्य नगर्य्यामिव बलाधिकृताः । अग्निर्वागभिमानी वागेव भूत्वा स्वां योनिं मुखं प्राविशत्तथोक्तार्थमन्यत् । वायुर्नासिके । आदित्योऽक्षिणी । दिशः कर्णौ । ओषधिवनस्पतयस्त्वचम् । चन्द्रमा हृदयम् । मृत्युर्नाभिम् । आपः शिश्नं प्राविशन् ॥ ४ ॥

---

तत्र करणानां देवतानाञ्च व्यष्टिरूपेण प्रवेशमाह । ता देवता इति ॥ इष्टत्वे हेतुमाह । सर्वं हीति ॥ आयतनमिति गोलकरूपस्थानमित्यर्थः ॥ ३ ॥

राज्ञोऽनुज्ञां प्रतिलभ्य बलाधिकृतादयः सेनापत्यादयो नगर्य्यां यथा प्रविशन्ति तद्वदीश्वरस्यानुज्ञां प्रतिलभ्याग्निः प्राविशदित्यन्वयः । यद्यपि वागभिमान्यग्निर्न तु वागेव तथापि तस्य वाचं विना प्रत्यक्षमनुपलब्धेः । तस्या अपि देवतां विना स्वविषयप्रकाशसामर्थ्याभावात् तयोरेकलोलीभावेनाभेदोक्तिरित्याह ॥ वागेवेति ॥ यद्यपि देवतानामीश्वरेण प्रवेशश्चोदितस्तथापि करणैर्विना तासां साक्षाद्वदनादिभोगासम्भवात् तेषामपि प्रवेशोऽर्थाच्चोदित एवेति तेषामपि स उक्तः ॥ ४ ॥

तमशनायापिपासे अब्रूतामावाभ्यामभिप्र-

एवं लब्धाधिष्ठानासु देवतासु निरधिष्ठाने सत्याव-शनायापिपासे तमीश्वरमब्रूवतामुक्तवत्यौ आवाभ्यामधिष्ठा-नमभिप्रजानीहि चिन्तय विधत्स्वेत्यर्थः। स ईश्वर एवमुक्तस्तेऽशनायापिपासेऽब्रवीत्। न हि युवयोर्भावरूप-त्वाच्चेतनावद्वस्त्वनधिकृत्यान्नात्तृत्वं सम्भवति तस्माद्देता-स्वेवाग्न्यादिषु देवतास्वध्यात्माधिदेवतासु वां युवां आभ-

अशनायापिपासयोरपि व्यष्टिदेहेऽपि करणाधिष्ठातृदेवतासम्बन्धं वक्तुं तयोः प्रश्नमवतारयति। एवमिति॥ निरधिष्ठाने सत्याविति कारणी-भूते विराड्देहेऽधिष्ठानविशेषो यदि स्यादशनायापिपासयोरग्न्यादीनां चक्षुरादय इव तदा व्यष्टिदेहेऽपि तदेव स्यात् तयोरधिष्ठानं तेषामिव न त्वेतदस्ति अतो निरधिष्ठाने ते इत्यर्थः। विधत्स्वेत्यनन्तरं यस्मिन् प्रति-ष्ठिता अन्नमदामेति शेषः। तत्राधिष्ठानविशेषस्तावत् युवयोः कारणे समष्टिदेहेऽभावादिहापि नास्त्येव। कारणपूर्वकत्वात् कार्य्येष्वधिष्ठानं स्यात्। अदनन्तु युवयोर्धर्म्मरूपत्वाद्धर्मिणमनाश्रित्य धर्म्मस्य स्वातन्त्र्या-योगाच्चेतनावद्धर्म्मिभूतदेवतागतमेवाऽन्नादनं युवयोरित्याह। स ईश्वर इति॥ भावरूपत्वादिति धर्मरूपत्वादित्यर्थः। धर्म्मिणोऽप्यचेतनस्य भोक्तृत्वादशनाच्चेतनावद्वस्त्वित्युक्तम्। अध्यात्मेति॥ अध्यात्मदेवता व्यष्टि-देहगतदेवताः। अधिदैवतदेवताः समष्टिविराड्देहगता हविर्भुजोऽग्न्या-दयः प्रसिद्धास्तास्वित्यर्थः। इत्तोति भागैकदेशदानेनेत्यर्थः॥ एतदेव स्पष्टीकरोति। एतासु भागिन्याविति॥ साक्षाद्देवतासु भागवत्तायोगा-द्देवताभागेन भागवत्त्वमंशवत्त्वमुक्तमिति व्याचष्टे। यदिति॥ यद्दैवत्यो यद्देवतासम्बन्धीयो भागः स्यात् तस्या देवतायाः सम्बन्धिना तेनैव भागे-नेत्यर्थः। हविरादीत्यादिशब्देन तत्तदिन्द्रियविषयोऽपि गृह्यते। करोमीत्यनन्तरमुक्तेति शेषः॥ उक्तमर्थमिदानीन्तनव्यवहारेण दृढीकर्तुं

आनीहीति। स ते अब्रवीदेतास्वेव वां देवता-
स्वाभजाम्येतासु भागिन्यौ करोमीति। तस्मा-

---

जामि वृत्तिसंविभागेनानुग्रह्णामि। एतासु भागिन्यौ यद्देवत्यो यो भागो हविरादिलक्षणः स्यात् तस्यास्तेनैवभा-गेन भागिन्यौ भागवत्यौ वां करोमीति सृष्ट्यादावीश्वर एवं व्यदधात् यस्मात्तस्मादिदानीमपि यस्यै कस्यै च देवतायै

---

तस्मादित्यादिवाक्यं तद्व्याचष्टे। यस्मादिति॥ यस्मात् सृष्ट्यादावेवं व्यद-धात् तस्मादित्यर्थः। हविर्ग्रहणमुपलक्षणं अधिदैवतं हविर्गृह्यते। अध्यात्मं देवतायै शब्दादिविषयो गृह्यत इति योज्यम्। भागिन्यावेवेति यद्यपि शब्दादिविषयेण हविषा चाग्न्यादिदेवतातृप्तौ तयोर्नाश एव दृश्यते न तु तद्भागेन भागित्वं तथापि तयोः सर्वात्मना नाशे पुनः कालान्तरे ते न स्याताम्। अतः स्वरूपेण स्थितयोरेव तयोः कदाचि-दिन्द्रियदेवतानां विषयोन्मुखतया प्रेरकत्वरूपं कार्य्योन्मुखत्वं कदाचित्तद-भावरूपोपशान्तिरित्यभ्युपगन्तव्यम्। तथा च हविषा देवतातृप्ताव-शनायापिपासयोरपि तृप्तिरूपशान्तिर्दृश्यत इति तद्भागेन भागवत्त्व-मुक्तमित्यर्थः। न च चक्षुरादिना रूपादिग्रहणदशायामशनायापिपा-सयोर्न शान्तिर्दृश्यते इति न सर्वत्र भागवत्त्वं तयोरिति वाच्यम्। क्षुत्-पिपासार्त्तस्यान्नपानदर्शनश्रवणादिनाऽन्नपानप्राप्त्याशक्तिपरितोषेण म-नसि तृष्णा शान्तेव भाति। न तु यथा पूर्वं बाधत इति चक्षुरादिष्वपि तयोर्भागवत्त्वमित्युक्तम्। शाङ्करीयदीपिकायां वस्तुतस्त्वशनायापिपासा-शब्देनेन्द्रियाणां स्वस्वविषयगोचरौ तृष्णाकामावुच्येते। अन्नप्रदानेना-प्राप्यत्वादन्नं स्वस्वविषयग्रहणमेव चक्षुरादीन्द्रियदेवतानां सुखास्वा-दनासम्भवात्। तथा च रूपादिविषयग्रहणे तत्तदिन्द्रियगोचरयोस्तयोः पृथक् तृप्तिर्दृश्यत इति वाच्यम्। इन्द्रियदेवतानां स्वस्वविषयोन्मुख-तया प्रेरकत्वरूपकार्य्योन्मुखत्वनिवृत्तिरूपोपशान्तिरेव पृथक् तयोस्तृप्ति-

द्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवा-
स्यामशनायापिपासे भवतः ॥ ५ ॥ इति द्वितीयः
खण्डः ॥ २ ॥

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः
सृजा इति ॥ १ ॥

---

यस्यै हविर्गृह्यते चरुपुरोडाशादिलक्षणं भागिन्यौ एव
भागवत्यावेवास्यां देवतायामशनायापिपासे भवतः ॥ ५ ॥
इति द्वितीयखण्डभाष्यम् ॥ २ ॥

स एवमीश्वर ईक्षत ऐक्षत । कथमिमे नु लोका लोक-
पालाश्च मया सृष्टा अशनायापिपासाभ्याञ्च संयोजिताः ।
अतो नैषां स्थितिरन्नमन्तरेण तस्मादन्नमेभ्यो लोकपा-
लेभ्यः सृजै सृजे इत्येवं हि लोके ईश्वराणामनुग्रहे
निग्रहे च स्वातन्त्र्यं दृष्टं स्वेषु तद्वन्महेश्वरस्यापि सर्वे-
श्वरत्वात् सर्वान् प्रति निग्रहानुग्रहे स्वातन्त्र्यमेव ॥ १ ॥

---

रस्तीत्युक्तत्वात् । यद्यप्येवमप्येवमशनायापिपासादिमत्त्वं तन्निमित्त-
मन्नादनमित्यादि सर्वं कार्य्यकरणसङ्घातपञ्जराध्यक्षस्य जीवस्य भोक्तु-
रेव नेन्द्रियदेवताशनायापिपासादीनाम् । तथापि तस्य वस्तुतोऽभोक्तृ-
ब्रह्मभूतस्य स्वतो भोक्तृत्वाद्योगादिन्द्रियदेवताद्युपाधिकृतमेव तस्य भोक्तृ-
त्वादिसर्वसंसार इति वक्तुं तेष्वेव तमारोप्य श्रुत्योच्यत इति न दोषः ॥ ५ ॥
इति द्वितीय खण्ड भाष्यटीका ॥ २ ॥

एवं भोगसाधनसृष्टिमुक्त्वा भोग्यसृष्टिं वक्तुमारभते । स एवमिति ॥
तुपब्दोक्तं विवर्त्तकं स्पष्टीकरोति । लोका इत्यादिना ॥ पूर्ववल्लोक-
पालप्रार्थनां विना स्वयमेवान्नं स्रष्टुं वितर्कितवानित्युक्तेः प्रयोजन-
मीश्वरत्वमापनमित्याह । एवं हीति ॥ १ ॥

सोऽपोऽभ्यतपत् ताभ्योऽभितप्ताभ्यो मूर्त्तिर-जायत । या वै सा मूर्त्तिरजायतान्नं वै तत् ॥२॥ तदेतदभिसृष्टं नदत् पराङ्त्यजिघांसत् त-

---

स ईश्वरोऽन्नं सिसृक्षुस्ता एव पूर्व्वोक्ता अप उद्दि-श्याभ्यतपत् ताभ्योऽभितप्ताभ्य उपादानभूताभ्यो मूर्त्तिर्घन-रूपं धारणसमर्थं चराचरलक्षणमजायतोत्पन्नं यन्नं वै तन्मूर्त्तिरूपं या वै सा मूर्त्तिरजायत तदेतदन्नम् ॥ २ ॥ लोकपालानामभिमुखोत्सृष्टं सत् यथा मूषकादिर्मार्जा-रादिगोचरे सन् मम मृत्युरयमिति मत्वा परागञ्चु-

---

अप इति पञ्च भूतानीत्यर्थः । सोऽभ्यतपदिति एतेभ्यो भूतेभ्यो मनुष्यादीनामन्नभूता ब्रीह्यादयो जायन्तां मार्जारादीनामन्नभूतानि मूषकादीनि जायन्तामिति पर्य्यालोचनं सङ्कल्पं कृतवानित्यर्थः । मूर्त्ति-शब्देन करचरणादिमतो विधाने ब्रीह्यादेरग्रहणं स्यादत आह ॥ घन-रूपमिति । कठिनमित्यर्थः । नन्वमूर्त्तानामपि वायुचन्द्रकिरणादीना-मपि सर्पादीन् प्रत्यन्नमस्तीति तद्व्युदस्यर्थमाह । धारणसमर्थञ्चेति ॥ शरीरधारणसमर्थमित्यर्थः । चरेति चरं मूषकादि अचरं ब्रीह्यादी-त्यर्थः ॥ या वै सा मूर्त्तिरजायतान्नं वै तदिति पूर्वेणान्वयः ॥ तच्छब्दार्थ-माह । मूर्त्तिरूपमिति ॥ शब्दादिभोक्तृत्वमिन्द्रियदेवतोपाधिकं न स्वत आत्मन इत्यभिप्रायेण तेषां शब्दादिभोगसहका इदानीमन्नपानभोक्तृत्व-मप्यपानवृत्तिमत्प्राणोपाधिकं न स्वत आत्मन इत्यभिप्रायेण तस्य भो-क्तृत्वं परिशेषान्निर्धारयितुमाह । तदेतदिति ॥ २ ॥

सृष्टं सत्पराङ् सत् अजिघांसदित्यन्वयः ॥ पराङ्पदं व्युत्पादयति । पराग्गच्छतीति ॥ उक्तार्थे दृष्टान्तमाह । यथेति ॥ यथेत्यनन्तरं पराङ-ञ्चति तद्वदिति शेषः । अतिगन्तुमैच्छदिति ॥ यद्यपि ब्रीह्याद्यचेतना-नस्य नैवमिच्छा सम्भवति तथापि भोक्तृशरीरान्तर्न प्रविष्टं किन्तु वहि-

द्वाचा जिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुम्। स यद्धै-
नद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् ॥३॥
तत्प्राणेनाजिघृक्षत् तन्नाशक्नोत् प्राणेन ग्रहीतुम्।
स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत्
॥४॥ तच्चक्षुषाऽजिघृक्षत् तन्नाशक्नोच्चक्षुषा ग्रहीतुम्
स यद्धैनच्चक्षुषाऽग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत्॥५॥
तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम्।स
यद्धैतच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ॥६॥

---

तीति पराङ् सदत्तृनतीत्याजिघांसदतिगन्तुमैच्छत्
पालयितुं प्रारभत इत्यर्थः। तदन्नाभिप्रायं मत्वा स लोक-
लोकपालसंघातैः कार्य्यकारणलक्षणः पिण्डः प्रथमज-
त्वाद्व्याचान्नादवद्वाचा वदनक्रियया ग्रहीतुमुपादातुं स
प्रथमजः शरीरी यद्यदि हैतद्वाचाऽग्रहीष्यद्गृहीतवान् स्या-

---

रेव स्थितमित्यत्र तात्पर्य्यम्। कार्य्यकारणलक्षणः पिण्डस्तदन्नं वाचा
जिघृक्षदित्यन्वयः। नन्विदानीमिव प्रथममेवापानेनैवान्नजिघृक्षा तस्य
किमिति नासीदित्याशङ्क्य तस्येदानीन्तनशरीरापेक्षया प्रथमजत्वादिति
अस्मदाद्यपेक्षयेत्यर्थः। यस्मिन् प्रतिष्ठिता अन्नमदामेत्युपक्रान्तस्य व्यष्टि-
शरीरस्य समष्टिपिण्डापेक्षया प्रथमजत्वाभावादपश्यन् जानन्नित्यर्थः॥
वदनक्रियया प्रथमजस्य पिण्डस्य कारणस्यान्नग्रहणासामर्थ्यं कार्य्य-
गतासामर्थ्येन तद् द्रढयति। स प्रथमज इति॥ अत्र प्रथममन्नमदं
ग्रहीतवान् स्यादित्यत्र कर्मत्वेन सम्बध्यते। तत्कार्य्यभूतत्वादिति तदन-
न्तरभूतत्वादित्यर्थः। इदानीन्तनशरीरस्य पूर्व्वकालीनव्यष्टिशरीरका-

तत्त्वचाजिघृक्षत् तन्नाशक्नोत् त्वचा ग्रहीतुम्। स यद्धैनत् त्वचाऽग्रहैष्यत् स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥ ७॥ तन्मनसाऽजिघृक्षत् तन्नाशक्नोन्मनसा ग्रहीतुम्। स यद्धैनन्मनसाग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत् ॥ ८॥ तच्छिश्नेनाजिघृक्षत् तन्नाशक्नोच्छिश्नेन ग्रहीतुम्। स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् ॥ ९॥ तदपानेनाजिघृक्षत् तदावयत्। स एषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः ॥ १० ॥

---

त्सर्व्वोऽपि लोकस्तत्कार्य्यभूतत्वादन्नमभिव्याहृत्यैवात्रप्स्यत् तृप्तोऽभविष्यत् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

न चैतदस्त्यतो नाशक्नोत् पूर्वजोऽपि वाचा ग्रहीतुमित्यवगच्छामः पूर्वेण समानमुत्तरं तत्प्राणेन तच्चक्षुषा तच्छ्रोत्रेण तत्त्वचा तन्मनसा तच्छिश्नेन तेन करणव्यापारेणान्नं ग्रहीतुमशक्नुवन् पश्चादपानेन वायुना मुखच्छिद्रेण तदन्नमजिघृक्षत् तदा वयत्तदन्नमेवं जग्राहाशितवान्। तेन स एषो न वायुरन्नस्य ग्रहोऽन्नग्राहक इत्येतत्। यद्वायुर्यो

---

र्यत्वाभावादिति अभिव्याहृत्येति वाचकशब्देनाभिधायेत्यर्थः। पूर्वजोऽपीत्यस्य नाशक्नोदिति पूर्वेणान्वयः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

प्राणेन घ्राणेनाभिप्राणनव्यापारेणेत्यर्थः। अपानेनेति मुखच्छिद्रेण निर्गच्छता वायुनेत्यर्थः। अन्नात्तृत्वमपि श्वसनवृत्तिमतः प्राणस्य धर्म्मो नात्मनः स्वत इत्येतत्। तदेतत् स्पष्टं पराक्लृप्त्यादिनोक्तम्॥ अस्य सन्दर्भस्य प्रयोजनमुपसंहरति। तेन स एष इति॥ येन कारणेनापानेनान्नमशितवान् तेनेत्यर्थः। अपानवृत्तिमतः प्राणस्यान्नग्राहकत्व-

स ईक्षत कथं न्विदं मदृते स्यादिति स

वायुः अन्नायुरन्नवन्धनोऽन्नजीवनो वै प्रसिद्धं स एष यो वायुः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

स एवं लोकलोकपालसङ्घातस्थितिमन्ननिमित्तां कृत्वा पुरपौरतत्पालयितृस्थितिसमां स्वामीव ईक्षत। कथं नु केन प्रकारेणेति वितर्कयन्निदं मदृते मामन्तरेण पुरस्वामिनम्। यदिदं कार्य्यकारणसङ्घातं कार्य्यं वक्ष्यमानं कथं नु खलु मामन्तरेण स्यात् परार्थं सत् यदि वाचाऽभिव्याहृतमित्यादि केवलमेव वाग्व्यवहरणादि

अन्नसिद्धा दृढीकर्त्तुमन्नायुरिति वाक्यं व्याचष्टे। अन्नायुरिति॥ अन्नमद्धीत्यादिश्रुत्यन्तरे प्राणस्यान्नायुष्ट्वं प्रसिद्धमित्यर्थः॥ ७॥ ८॥ ९॥ १०॥

एवं भोगाधिकरणभूतानां लोकानां भोगायतनस्य समष्टिव्यष्टिशरीरस्य भोगोपकरणानां वागादीनां समष्टिशरीरे लोकपालत्वेन व्यष्टिशरीरे करणाधिष्ठातृत्वेन च स्थितानां देवतानां भोगे प्रेरकयोरशनायापिपासयोस्तत्प्रयुक्तस्य करणनिविष्टस्य शब्दादिविषयप्रकृपलक्षणस्य भोगस्याप्यन्नरूपिमत् प्राणनिष्ठस्यान्नपानप्रकृपलक्षणस्य च भोगस्यात्मनः संसारित्वसिद्ध्यर्थं सृष्टिमभिधायेदानीं संसारिणां भोक्तारं दर्शयितुं स्रष्टुरीश्वरस्य विचारांशं दर्शयितुं स ईक्षतेति वाक्यं व्याचष्टे। स एवमिति॥ परस्य पौराणां पुरवासिनां तत्पालयितॄणां राजनियुक्ताधिकारिणां स्थितिसमां तत्तुल्यामन्ननिमित्तां अन्नाधीनां सङ्घातस्थितिं कृत्वेत्यन्वयः॥ कृत्वेत्युपलक्षणं लोकादीन् सृष्ट्वेत्यपि द्रष्टव्यम्॥ पदार्थानुक्त्वा वाक्यार्थमाह। यदिदमिति॥ वक्ष्यमाणमिति वाचाभिव्याहृतमित्यादिना॥ वक्ष्यमाणमभिव्याहरणादिकमित्यर्थः। हेतुगर्भितमिदं शब्दार्थस्य विशेषणं परार्थं सदिति परार्थत्वात् परार्थिनां मामृते कथं स्यादित्यस्यैवार्थस्य कथं शब्दसूचितं व्यतिरेकमाह। यदीति॥

ईक्षत कतरेण प्रपद्या इति। स ईक्षत यदि

---

तन्निरर्थकं न कथञ्चन भवेत्। बलिस्तुत्यादिवत् पौर-वन्द्यादिभिः प्रयुज्यमानं स्वाम्यर्थं सत्तत्स्वामिनमन्तरेणास-त्येव स्वामिनि तद्वत्। तस्मान्मया परेण स्वामिनाधि-ष्ठात्रा कृताकृतफलसाक्षिभूतेन भोक्त्रा भवितव्यं पुरस्येव राज्ञा। यदि नामैतत्संहतकार्य्यस्य परार्थत्वं परार्थिनश्चे-तनमन्तरेण भवेत् पुरपौरकार्य्यमिव तत्स्वामिनमन्तरे

---

णेवकं भोक्तृरहितव्याहरणादि यत्तत्र कथञ्चन भवेत् कथञ्चिदपि न भवे-दित्यन्वयः। तत्र हेतुर्निरर्थकमिति अर्थयत इत्यर्थः। पचाद्यच्। अर्थ-यिता पुरुषस्तद्रहितमित्यर्थः। अर्थयिता हि पुरुषः स्वस्य प्रयोजन-सिध्यर्थं वागादिकं प्रेरयति। तदभावप्रेरकाभावाद्वाग्व्यवहारादिकं न भवेदित्यर्थः। यद्वा अर्थः प्रयोजनमर्थिनोऽभावे तस्यार्थत्वाभावान्निष्प्र-योजनं सत् तत्र भवेत्। प्रयोजनप्रयुक्तत्वात् सर्वप्रवृत्तेरिति। तत्र दृष्टान्तो बलिस्तुत्यादिवदिति॥ एतदेव विवृणोति। पौरेति॥ अत्र यथाशब्दो द्रष्टव्यः। यथा पौरादिभिः प्रयुज्यमानं बलिस्तुत्यादिकं स्वामिनमन्तरेण न भवेत् तद्वदित्यन्वयः। स्वामिनमन्तरेणेत्यस्य व्याख्या-नमसत्येवेति॥ विचारस्य फलमाह। तस्मादिति॥ परेणार्थादन्येन स्वा-मिना अर्थिना वागादिव्यवहारकृतोपकारभाजा अधिष्ठात्रा वागादि-प्रेरकं अधिष्ठातृत्वञ्चायस्कान्तवच्चेतनस्य सन्निधानमात्रमेव साक्षितया न व्यापार इत्याह। कृतेति॥ कृताकृतयोस्तत्फलस्य चेत्यर्थः। फल-साक्षित्वमेव भोक्तृत्वमपीत्याह। भोक्त्रेति। राज्ञेत्यस्येति पदाध्याहारे-णेति ईक्षतेति पूर्वेणान्वयः। एवं वाग्व्यवहरणादिकार्य्यसिध्यर्थं मया प्रवेष्टव्यमित्युक्त्वाऽऽत्मस्वरूपबोधार्थञ्च मया प्रवेष्टव्यमिति वक्तुं स ईक्षत यदि वाचाभिव्याहृतमित्याद्यथ कोऽहमित्यन्तं वाक्यं तत्प्रवेशप्रयोजन-कथनार्थत्वेन कथं न्विदमिति वाक्यतुल्यत्वात् स ईक्षत कतरेणेति वाक्येन व्यवहितमपीहैवालक्ष्य व्याचष्टे। यदि नामेति॥ संहतस्य वागादि-

**वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं**

याथ कोऽहं किंस्वरूपः कस्य वा स्वामी यद्यहं कार्य्यकारणसङ्घातमनुप्रविश्य वागाद्यभिव्याहृतादिफलं नोपलभेयम्। राजेव पुरमाविश्याधिकृतपुरुषकृताकृतावेक्षणम्। न कश्चिन्मामयं सन्नेवंरूपश्चेत्यधिगच्छेद्विचारयेत्। विपर्य्यये तु योऽयं वागाद्यभिव्याहृतादीदमिति वेद स सन्निति ससंवेदनरूपश्चेत्यधिगन्तव्योऽहं स्यां यदर्थमिदं संहतानां वागादीनामभिव्याहृतादि। यथा स्तम्भकुड्यादीनां प्रासादसंहतानां स्वावयवैरसंहतपरार्थत्वं तद्वदित्येवमीक्षि-

---

तव्यस्य कार्य्यस्य परार्थत्वं परोपकाररूपाभिव्याहरणादिकारित्वं परार्थिनमुपकारभाजमन्तरेण भवेदित्यर्थः। अनेन यदि वाचैव केवलयाभिव्याहृतं भवेदित्येवकाराध्याहारेण वाक्यं योजितम्। एवमुत्तरत्रापि यदि प्राणेनैवाभिप्राणितं भवेदित्यादि द्रष्टव्यम्। अभिप्राणितमाघ्रातं अभ्यपानितं अन्तर्गतं भक्षितमित्यर्थः॥ उक्तमेव वाक्यार्थं स्पष्टीकरोति। यद्यहमित्यादिना॥ अयं सन्निति अयमात्माऽस्ति स एवं रूपश्चेति नाधिगच्छेदित्यर्थः। अप्रवेशे स्वस्याधिगमो न स्यादित्युक्ता प्रवेशे तु सोऽस्तीति प्रवेशफलमाह। विपर्य्यये त्विति॥ प्रविश्य अभिव्याहृताद्युपलम्भे त्वित्यर्थः। वेदनरूपः संश्चेत्यधिगन्तव्योऽहं स्वामित्यन्वयः॥ वेदनरूपत्वमुपपादयति। योऽयमिति॥ योऽयं वागाद्यभिव्याहृतादि वेद स वेदनरूप इत्यधिगन्तव्यः स्वामित्यन्वयः। न च वेदितुः कथं वेदनरूपत्वमिति वाच्यम्। वेदितुरवेदनरूपत्वे तस्य वेदनान्तरकर्मत्वं वाच्यम्। तस्मिन् वेदने वेदितैव कर्त्ता चेदेकस्मिन् वेदितरि कर्तृत्वं कर्मत्वञ्च विरुद्धं प्रसज्येत। अन्यो वेदिता कर्त्ता चेत् तस्याप्यन्यो वेदितेत्यनवस्था स्यादिति वेदितुर्वेदनरूपत्वं सिध्यति अत एव श्रुत्यन्तरे यो वेदेदं जिघ्राणीति। स आत्मेति घ्राणमेयघ्राणवेदनस्यात्मत्व-

यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति ॥ ११ ॥

---

त्वाऽतः कतरेण प्रपद्या इति। प्रपदश्च मूर्धा चास्य सङ्घातस्य प्रवेशमार्गावनयोः कतरेण मार्गेणेदं स्वामिकार्यसङ्घातलक्षणं पुरं प्रपद्ये प्रपद्येयमित्येवमीक्षित्वा न तावद्भृत्यप्राणस्य मम सर्वार्थाधिकृतस्य प्रवेशमार्गप्रपदाभ्यामधःप्रपद्ये किन्तर्हि पारिशेष्यादस्य मूर्धानं विदार्य प्रपद्येयमिति ॥ ११ ॥

---

सुखमिति भावः ॥ तस्य चेतनरूपत्वे प्रमाणसत्त्वाऽसिद्धत्वे प्रमाणमाह। यदर्थमिति ॥ संहतानां वागादीनामभिव्याहृतादि यदर्थं सोऽन्यो वागादिभिरसंहतः संवेदितव्य इति पूर्वेणान्वयः ॥ संहतानामसंहतपरार्थत्वे दृष्टान्तमाह। यथेति एतदुक्तं भवति। वागाद्यभिव्याहृतादि स्वासंहतपरार्थं भवितुमर्हति संहतत्वात् कुड्यादिवत्प्रासादादिवच्चेति तद्यदित्यनन्तरं स्वामिवत्स ईक्षतेति पदं द्रष्टव्यम्। भाष्ये तु चट-वचा व्यक्तं प्रयोजनद्वयवशात् प्रवेशस्य कर्तव्यत्वे सिद्धे प्रवेशद्वारस्य विचारस्यावसर इति ॥ इदानीं स ईक्षत कतरेणेति वाक्यं व्याचष्टे एवमीक्षित्वेति ॥ अत इति अतः प्रवेशस्य वागादिव्यवहारसिद्धिर्मतृस्वरूपबोधश्चेति प्रयोजनद्वयसिद्ध्यर्थं कर्तव्यत्वमत इत्यर्थः। अन्तरिति पाठे शरीरस्यान्तः प्रपद्ये इत्यन्वयः ॥ कतरेणेति पदं गृहीत्वा तद्व्याख्यातुं मार्गद्वयं दर्शयति। प्रपदश्चेति ॥ इदानीं गृहीतं पदं व्याख्याति ॥ अनयोः कतरेणेति। प्रपद्य इत्यनन्तरं श्रौतं स ईक्षतेति पदं द्रष्टव्यम्। अनन्तरं स ईक्षत यदि वाचेत्यादिवाक्यं पूर्वमेव व्याख्यातमिति तदुत्तरं स एतमेव सीमानमिति वाक्यं व्याख्यातुं तदपेक्षितमाह। एवमीक्षित्वेति ॥ पर्यालोच्येत्यर्थः। भृत्यस्य प्रवेशमार्गेण स्वामिनः प्रवेशोऽनुचित इत्यनेनैव मार्गेण प्रवेशं निश्चितवानित्याह। न तावदिति ॥ भृत्येति पिण्डस्येत्यर्थः। प्रपद्येयमित्यनन्तरं निश्चित्येति शेषः ॥ ११ ॥

स एतमेव सीमानं विदार्य्यैतया द्वारा प्रा-

---

लोक इवेक्षितकारी य ईश्वरः स्रष्टा एतमेव मूर्द्ध-सीमानं केशविभागावसानं विदार्य्य छिद्रं कृत्वा एतया द्वारा मार्गेणेमं लोकं कार्य्यकारणसङ्घातं प्रापद्यत प्रविवेश। सेयं हि प्रसिद्धा द्वाः। मूर्द्धनि तैलादिधारणकाले तद्रसादिसंवेदनात् सैषा विदृतिर्विदारितत्वाद्विदृतिर्नाम प्रसिद्धा द्वाः। इतराणि तु श्रोत्रादिद्वाराणि भृत्यादिस्थानीयसाधारणमार्गत्वान्न समृद्धीनि नानन्दहेतूनि इदन्तु द्वारं परमेश्वरस्यैव केवलस्येति। तदेतन्नान्दनं नन्दनमेव नान्दनमिति दैर्घ्यं छान्दसं। नन्दत्यनेन द्वारेण गत्वा परस्मिन् ब्रह्मणीति तस्यैव स्रष्टुः प्रविष्टस्य जीवेना-

---

एवमपेक्षितसङ्क्षा स एतमिति वाक्यं व्याचष्टे। लोक इवेति॥ एवमीक्षित्वा मूर्द्धानं विदार्य्य प्रपद्येयमिति निश्चित्येमं सङ्घातं प्रापद्यत इत्यन्वयः। ननु नव वै पुरुषे प्राणाः। सप्त वै शीर्षण्याः प्राणाः। द्वाववाञ्चौ नवद्वारे पुरे देहीत्यादिषु द्वारनवकं प्रसिद्धं न तु मूर्द्धनि द्वारान्तरमित्याशङ्क्य प्रत्यक्षतश्चयोर्भायत्नाच्चतत्वमेतीति श्रुतितश्च तस्य प्रसिद्धेर्नैवमिति वक्तुं सेयेति वाक्यम्। तद्व्याचष्टे। सेयमिति॥ प्रत्यक्षतः प्रसिद्धिं सैषेति पदाभ्यां दर्शयति। मूर्द्धनीति॥ मूर्द्धनि शिरं विषवृक्षतैलादिधारणकाले तिक्तादितद्रसंवेदनं दृश्यत इति सा द्वाः प्रत्यक्षतः प्रसिद्धेत्यर्थः। न केवलं द्वारः प्रत्यक्षत एव प्रसिद्धिः किन्तु तस्या विदृतिरिति नाम्नापि सिद्धिरित्याह। विदृतिरिति॥ अनेनेश्वरेण स्वप्रवेशार्थमसाधारणतया विदारितत्वान्न भृत्यस्थानीयचक्षुरादिप्रवेशद्वारैः सह नव वै पुरुषे प्राणा इत्यादि पूर्व्वोक्तश्रुतिषु परिगणितमित्युक्तम्। श्रौतप्रसिद्धिं वक्तुं तदेतन्नान्दनमिति वाक्यं तत्रैव देवनान्दनं नाम्नामीत्युक्तमिति कृत्वा व्याचष्टे। इतराणि त्विति॥ भृत्य-

-पद्यत । सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनं

---

त्मना राज्ञ इव स्वं पुरम् । त्रय आवसथा जागरितकाले । इन्द्रियस्थानं दक्षिणं चक्षुः । स्वप्नकालेऽन्तर्मनः सुषुप्तकाले इदं हृदयाकाशमित्येतद्वक्ष्यमाणा वा त्रय आवसथाः । पितृशरीरं मातृगर्भाशयः स्वञ्च शरीरमिति । त्रयः स्वप्नाः जाग्रत्स्वप्नसुषुप्ताख्याः । ननु जागरितं प्रबो-

---

धोनीति । सम्यगृद्धिरानन्दो येषु तानीति विग्रहः । हेतुशब्दं भावप्रधानं स्वोक्तस्यानन्दम् प्रति हेतुत्वे येषामिति बहुव्रीहिणा हेतुनेति नपुंसकत्वं द्रष्टव्यम् । नन्दयनेन द्वारेण गत्वेत्यनेन तयोर्द्वयोरमृतत्वमेतीति श्रुतौ प्रसिद्धिर्दर्शिता ॥ ईश्वरस्यैवं प्रवेशमुक्त्वा तस्यैव पूर्वोक्तकार्यकारणसङ्घातोपाधिकसंसारमाह । तस्येति एवं पुरं सृष्ट्वा जीवेनात्मना प्रविष्टस्य तस्य राज्ञ इव त्रय आवसथाः क्रीडास्थानानीत्यन्वयः । तान्येवाह । जागरितेति ॥ चक्षुरिति चक्षुर्गोलकमित्यर्थः । मन इति मनसोऽधिकरणं कण्ठस्थानमित्यर्थः । कण्ठे स्वप्नं समादिशेदिति श्रुतेः । हृदयाकाश इति हृदयावच्छिन्नभूताकाश इत्यर्थः । यद्यपि ब्रह्मण्येव सुषुप्तौ जीवो वर्त्तते सता सौम्य तदा सम्पन्न इति श्रुतेस्तथापि ब्रह्मणोऽपि हृदयाकाशेऽवस्थानात्तत्सम्पन्नोऽपि तत्रैव वर्त्तत इति तथोक्तम् । अन्यथा हृदयाकाशशब्देनैव दहराधिकरणन्यायेन ब्रह्माभिधानेन तस्य त्रयः स्वप्ना इति वक्ष्यमाणस्वप्नतुल्यत्वानुपपत्तिरित्यत एव पक्षान्तरमाह । वक्ष्यमाणा वेति ॥ तानेवाह । पितृशरीरमिति ॥ नन्वात्मा वा इदमेक एवेत्यद्वितीयत्वेनोक्तस्य कथमावसथानां योग इत्याशङ्क्यावसथानां स्वप्नत्वान्न पारमार्थिकाद्वितीयत्वायोग इति वक्तुं त्रयः स्वप्ना इत्युक्तं तद्व्याचष्टे ॥ त्रयः स्वप्ना इति ॥ स्वप्नतुल्या इत्यर्थः । जाग्रदित्युपलक्षणं पित्रादिशरीरत्रयञ्चेत्यपि द्रष्टव्यम् । तेषां स्वप्नतुल्यत्वं नास्तीति शङ्कते । नन्विति ॥ अत्रापि शरीरत्रयमुपलक्षितं तत्प्रतिबोधस्य स्वप्नप्रबोधतुल्यत्वात् स्वप्नत्वमेवेत्याह । नैवमिति ॥

दिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्य-
दिदमदर्शमिति ॥ १३ ॥

---

भवैरपि स कदाचित् परमकारुणिकेनाचार्य्येणात्मज्ञा-
नप्रबोधकृन्महाशब्दकर्य्यां वेदान्तमहाभेर्य्यां तत्कर्णमूले ताड्यमा-
नायाम् स एतमेव सृष्ट्यादिकर्तृत्वेन प्रकृतं पुरुषं पुरि श-
यानमात्मानं ब्रह्म बृहत्ततमं अन्त्यतकारेणैकेन लुप्तेन तत-
तमं व्याप्ततमं परिपूर्णमाकाशवत् प्रबुध्यत अपश्यत् । कथ-

---

व.भिमुख्येन तादात्म्येन व्याकरोत् व्यक्तं ज्ञातवानुक्तवांश्च । मनुष्योऽहं
काणोऽहं सुख्यहमित्यादिप्रकारेणेत्यर्थः । तथा च श्रुत्यन्तरम् । अनेन जीवे-
नात्मनानुप्रविश्य नामरूपे व्याकरवाणीति । ननु व्यतिरिक्तात्मज्ञाने सति
कथमुक्ततादात्म्यभ्रम इत्याशङ्क्याह श्रुतिः । किमिहान्यमिति ॥ इहा-
स्मिन् शरीरेऽन्यं व्यतिरिक्तमात्मानं वावदिषत् किमिति काका नोक्तवा-
नित्यर्थः । न ज्ञातवानित्यपि द्रष्टव्यम् । इति शब्दो यस्मादित्यर्थे ।
यस्मादेवं तस्मादभिव्यैख्यदित्यध्यारोपः प्रकरणसमाप्त्यर्थो वा । इदं वाक्यं
भाष्यकारैः स्पष्टत्वादुपेक्षितं लेखकदोषात् पतितं वा । एवमध्यारोपं प्रदर्श्य
तस्यापवादार्थं स एतमित्यादि वाक्यं व्याचष्टे । स कदाचिदित्यादिना ॥ यद्वा
स जात इत्यादिरपवादः । तस्मिन् पक्षे एवं योजना । भूतानि व्याकरोत्
विविच्याकरोत् । किमेषां स्वतः सत्तास्ति न वेति विचारितवानि-
त्यर्थः । विचार्य्य च किमन्यमात्मव्यतिरिक्तं स्वतः सत्ताकं वावदिषद्वदि-
ष्यामि न किञ्चिदप्यात्मव्यतिरिक्तं वस्तु शक्नोमीति निश्चितवानित्यर्थः ॥
एवं पदार्थशोधनवतो वाक्यार्थज्ञानमाह । स एतमिति ॥ आचार्य्यवान्
पुरुषो वेदेति श्रुतेः ॥ तेन विना स्वतो वाक्यार्थज्ञानं न सम्भवतीत्य-
भिप्रेत्याह । परमिति ॥ वेदान्तेति ॥ उपनिषत्काण्डस्य समुदायस्य
भेरीस्थानत्वं तद्गतानां तत्त्वमसीत्यादिवाक्यानां प्रबोधजनकशब्दत्वमिति
ज्ञेयम् । पुरि शयनमिति मूर्द्धन्यया द्वारा प्रविश्येति शेषः । लुप्तेनेति

तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्रमित्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः। परोक्षप्रिया इव हि देवाः ॥१४॥ इति तृतीयः खण्डः ॥ ३ ॥ इत्यैतरेये द्वितीये आरण्यके चतुर्थोऽध्यायः ॥ उपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥ ॐ तत् सत् ॥

---

निदं ब्रह्म ममात्मनः स्वरूपमदर्शं दृष्टवानस्मि। अहो इति विचारणार्था प्लुतिः यस्मादिदमित्येव। यस्मात्साक्षाद्-परोक्षाद्ब्रह्म सर्व्वान्तरमपश्यदपरोक्षेण ॥ १३ ॥

तस्मादिदं पश्यतीति इदन्द्रो नाम परमात्मा। इद-न्द्रो ह वै नाम प्रसिद्धो लोके ईश्वरः। तमेवं इदन्द्रम्। इमि परोक्षाभिधानेनाचक्षते ब्रह्मविदः संव्यवहारार्थं पूज्यतमत्वात् प्रत्यक्षनामग्रहणभयात्। तथा हि परोक्ष-

---

तेन वदेत्यर्थः॥ किं परोक्षतया ज्ञातमिति पृच्छति। कथमिति॥ तस्य ज्ञातप्रख्यापकेन वाक्येन ब्रह्मापरोक्षत्वमाह। इदमिति॥ इतीति श्रुते-रर्थमाह। अहो इति। विचारणापूर्व्वमिति विचारणार्थश्रुतेर्विवक्षि-तत्वात्। श्रुत्वा सम्यग्ब्रह्म ज्ञातं न वेति विचार्य सम्यग्ज्ञातमिति निश्चि-त्य अहो इति स्वस्य कृतार्थत्वं प्रख्यापितवानित्यर्थः॥ १३ ॥

तस्येदन्द्रनामप्रसिद्धावपि तस्य ज्ञानस्याऽपरोक्षत्वमिति वक्तुं तस्मादि-दन्द्र इति वाक्यम्। तद्व्याचष्टे। यस्मादिति॥ यस्मात् सर्व्वान्तरं ब्रह्म इदमित्यपरोक्षं प्रत्यगात्मत्वेनाऽपश्यदित्यन्वयः॥ कथमिन्द्रनामत्वमत आह। इदन्द्रो ह वा इति॥ नन्विन्द्रो मायाभिरित्यादाविन्द्रप्रसिद्धे-रिदन्द्र इत्यत आह। तमेवमिति॥ इदन्द्रस्यैव सतः परोक्षत्वार्थं प्रचरणेनेन्द्र इत्याहुरित्यर्थः॥ परोक्षोक्तेः प्रयोजनमाह। पूज्येति॥

प्रियाः परोक्षनामग्रहणप्रिया इव ह्येव हि यस्माद्देवाः। किमु सर्व्वदेवानामपि देवो महेश्वरः। द्विर्व्वचनं प्रकृताध्यायपरिसमाप्त्यर्थम्॥ इत्यैतरेयोपनिषद्भाष्ये प्रथमोऽध्यायः ॥ १ ॥ ॐ तत्सत् ॥

अस्मिन्नध्याये एष वाक्यार्थः। जगदुत्पत्तिस्थितिलयकृदसंसारी सर्वज्ञः सर्वशक्तिः सर्ववित्सर्वमिदं जगत् स्वतोऽन्यद्वस्त्वन्तरमनुपादायैवाकाशादिक्रमेण सृष्ट्वा स्वात्मप्रबोधनार्थं सर्व्वाणि च प्राणादिमच्छरीराणि स्वयं प्रविवेश। प्रविश्य च स्वमात्मानं यथाभूतमिदं ब्रह्मास्मीति साक्षात् प्रत्यबुध्यत। तस्मात् स एव सर्व्वशरीरेष्वेक

---

पूज्यानां परोक्षतयैव नाम वक्तव्यमित्यत्र प्रमाणमाह। तथा हीति॥ देवा इति पूज्या इत्यर्थः॥ अत एवाचार्या उपाध्याया इत्युक्तावेव प्रीतिं कुर्व्वन्ति लोके न तु विष्णुमित्रादिनामग्रहणे इति भावः॥ नाम्नः परोक्षत्वं नाम यथार्थनाम्नो रूपान्तरकरणेन स्वरूपाच्छादनमिति ज्ञेयम्॥ इत्यैतरेयोपनिषद्भाष्यटीकायां प्रथमोऽध्यायः॥ १॥ ॐ तत् सत्॥

अस्मिन्नध्याये आत्मैकत्वलोकपालसृष्ट्यशनायापिपासासंयोजनादीनां बहूनामर्थानामुक्तत्वात् सर्वेषामपि विवक्षितत्वभ्रान्तिवारणाय विवक्षितमर्थमाह। अस्मिन्निति॥ सर्वेष्वपि शरीरेष्वेक एवात्मा स एव परमेश्वर इति वक्ष्यमाणोऽयं एतच्छब्दार्थः। वाक्यार्थ इति विवक्षित इति शेषः॥ कथमयमेवार्थो विवक्षित इत्याशङ्क्य पूर्वसन्दर्भपर्यालोचनयेत्याह। जगदित्यादिना॥ यद्यपि लोकादिसृष्ट्या अन्नसृष्ट्या चोत्पत्तिरेवोक्ता तथाप्युत्पत्तिस्थित्युपलक्षणार्थात् प्रलयोऽप्युक्तप्राय इति। अशनादित्युक्ते लोकपालादीनामेव भोक्तृत्वोक्त्या असंसारीत्युक्तमित्यर्थः॥ साकल्यतः सर्वं जानातीति सर्वज्ञः। विशेषतः सर्वप्रकारेणापि सर्व्वं जानातीति सर्व्ववित्। स्वत इत्यनेन जगतस्तत्कार्य्यत्वात्तद्व्यतिरेकेण नास्तीत्युक्त्वा प्रत्यगात्मनस्तदभेदमाह। स्वात्मेति॥ न केवलं प्रवेशोक्त्यैव तदभेदः किन्तु तदभेद-

एवात्मा नान्य इति। अन्योऽपि मम आत्मा ब्रह्मास्मी-
त्येवं विद्यादिता आत्मा वा इदमेक एवाग्र आसीद्ब्रह्म
ततममिति चोक्तः। अन्यत्र चासर्वगतस्य सर्व्वात्मनो वाला-
ग्रमात्रमप्यप्रविष्टं नास्तीति कथं सीमानं विदार्य्य प्रापद्यत
पिपीलिकेव सुषिरम्। नन्वत्यल्पमिदं चोद्यं बहु चात्र चो-
दितव्यम्। अकरणः सन्नीक्षत अनुपादाय किञ्चिल्लोकानसृ-
जत अद्भ्यः पुरुषं समुद्धृत्यामूर्च्छयत्। तस्याभिध्यानान्मुखा-
दि निर्भिन्नं मुखादिभ्यश्चाग्न्यादयो लोकपालास्तेषाञ्चाश-
नायादिसंयोजनं तदायतनप्रार्थनं तदर्थं गवादिप्रदर्शनं
तेषाञ्च यथायतनं प्रवेशनं सृष्टस्यान्नस्य पलायनं वागा-

---

शानोक्तेश्चेत्याह। प्रविश्य चेति॥ प्रत्यबुध्यतेति। यस्मात्सर्वशरीरेष्वेकस्यैव
प्रवेश उक्तः। यस्माच्च प्रविष्टस्य ब्रह्मतया ज्ञानमुक्तं तस्मात् सर्वशरी-
रेष्वेक एवात्मा स च सर्वज्ञ ईश्वर एव नान्य इत्येष वाक्यार्थो विवक्षित
इति पूर्वेणान्वयः॥ मम आत्मेति विद्यादिति संहितोपनिषद्गतवाक्य-
शेषोऽप्येतमेवार्थमाहेत्याह। अन्योऽपीति॥ मम इति सर्व्वभूतेष्वेक इ-
त्यर्थः॥ स ईक्षतेत्यादिसन्दर्भादयमर्थः प्रतीयत इत्युक्तं पूर्वं इदानीमुप-
क्रमोपसंहाराभ्यामप्येष एवार्थः प्रतीयत इत्याह। आत्मा वा इति॥
सदेव सोम्येदमग्र आसीत् तदेतद्ब्रह्मापूर्व्वमित्यादौ चाद्वितीयत्वमुक्तमि-
त्याह। अन्यत्र चेति॥ प्रवेशवाक्यादात्मन एकत्वमुक्तं तदयुक्तं तस्यैवा-
सङ्गतार्थत्वादिति शङ्कते सर्व्वगतस्येति॥ अशरीरत्वाद्विदारयितृत्वं
सर्वगतत्वात् प्रवेशश्च न सङ्गच्छत इत्यर्थः। किं प्रतीयमानार्थे सङ्गतत्वमुत
विवक्षितार्थे। आद्ये सर्वस्याप्यसङ्गतार्थत्वेन सर्वस्याप्यप्रामाण्यं स्यात्।
न च वेदस्य तद्युक्तमित्याह। नन्विति॥ चक्षुरादिकरणैरीक्षणं प्र-
सिद्धं मृदाद्युपादानवत एव स्रष्टृत्वं हस्ताभ्यामेव समुद्धरणसंमूर्च्छने
इत्यशरीरस्य तदसङ्गतं शास्त्रादिना मूर्त्तेन विदारणं न त्वमूर्त्तानां क्षुधा-

दिभिस्तज्जिघृक्षा एतत् सर्व्वं सीमाविदारणप्रवेशनम-
मेव। अस्तु तर्हि सर्व्वमेवेदमनुपपन्नम्। न। आत्माव-
बोधार्थमात्रस्य विवक्षितत्वात्। सर्व्वोऽयमर्थवाद इत्य-
दोषः। मायाविवद्वा महामायावी देवः सर्व्वज्ञः सर्व्व-
शक्तिः सर्वमेतच्चराचरसुखावबोधप्रतिपत्त्यर्थं लोकवदा-
ख्यायिकादिप्रपञ्च इति युक्ततरः पक्षः। न हि सृष्ट्याख्या-
यिकादिपरिज्ञानात् किञ्चित् फलमिष्यते। एकात्म्यस्वरूप-

---

दिभ्योऽग्न्याद्युत्पत्तौ तस्य दाहादिः स्यात् मूर्त्तस्यैवान्येन संयोजनं
कर्त्तुं शक्यं नाशनायादेरमूर्त्तस्य। अग्न्यादीनां शरीरसृष्टेः पूर्वं
प्राशनाया आयोगः। तदा गवादिशरीराभावात् स्वयं चाशरीर-
त्वादाशनायोगः। तेषामशरीरत्वादमूर्त्तत्वात् प्रवेशानुपपत्तिः।
अन्नस्याचेतनस्य पलायनानुपपत्तिः। वागादीनां हस्तादिवद्धस्ता-
दानासामर्थ्यात् तैर्जिघृक्षानुपपत्तिः सर्व्वमसङ्गतार्थमित्यर्थः।
तर्हि सर्व्वमप्रमाणमस्त्विति कश्चिच्छङ्कते। अस्त्विति॥ विवक्षितार्थं विषं
भुङ्क्ष्व। प्रजापतिरात्मनो वपामुदक्खिददित्यादीनामिव प्रामाण्यम-
स्त्वनेनाप्रामाण्यं न कस्यचिदपि युक्तम्॥ विवक्षितार्थे च नासङ्गतिरिति
द्वितीयं दूषयति। नेति॥ लोके स्वयमेव द्वारं कृत्वा ऽनेकेषु रूपेषु
प्रतिष्ठितस्य देवदत्तस्यैकत्वदर्शनात्तद्वदिहात्मन एकत्वमिति बोधयितुं
विदारणप्रवेशने उच्येते न तु सोऽर्थो विवक्षितः। विवक्षितात्मैकत्व-
बोधद्वारतयोक्तत्वात् प्राशस्त्यार्थद्वारतयोक्तवपोत्खननादिवदर्थवाद
इत्यर्थः। असत एव प्रवेशादेरिहोक्तिरित्यङ्गीकृत्य तस्य गुणार्थवादत्वं
वपोत्खननादिवाक्यवदुक्त्वा अग्निर्हिमस्य भेषजमिति वद्भूतार्थवाद-
त्वमङ्गीकृत्याह। मायावीति॥ मायया घटितमपि सर्व्वमुपपद्यते। अघ-
टितघटकत्वात्तस्या इत्यर्थः। अनेन सृष्ट्यादेरघटितार्थत्वाद्गन्धर्व्वनगरा-
दिवन्मृषात्वमेवेति स्पष्टीकर्त्तुमघटितमपि सृष्ट्यादि स्तुत्या दर्शि-
तमित्युक्तम्॥ नन्वात्मावबोधश्चेद्विवक्षितस्तर्हि साक्षादेव स उच्यतां किम-
नेन वृथा प्रपञ्चनेनेत्यत आह। तस्येति॥ अवबोधः अवबोधनं प्रतिपादनं

परिज्ञानादमृतत्वं फलं सर्व्वोपनिषत्प्रसिद्धम्। स्मृतिषु च गीताद्यासु। समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरमित्यादि। ननु त्रय आत्मानो भोक्ता कर्त्ता संसारी जीव एकः सर्वलोकशास्त्रप्रसिद्धः। अनेकप्राणिकर्म्मफलोपभोगयोग्यानेकाधिष्ठानवल्लोकदेहनिर्म्माणेन लिङ्गेन यथाशास्त्रप्रदर्शितेन पुरप्रासादादिनिर्म्माणलिङ्गेन तद्वि-

---

सुखेन वक्तुः प्रतिपादनार्थं सुखेन श्रोतुः प्रतिपत्त्यर्थं चेत्यर्थः॥ ननु लोकदृष्ट्यादेर्मानान्तरागोचरत्वेनापूर्व्वत्वात् तत्परत्वमेवाख्यायिकाया अस्ति-त्वाशङ्क्यापूर्व्वत्वेऽपि तत्प्रतिपत्त्या फलाभावात् फलवत्यज्ञाने श्रुतेस्तात्पर्य्य-नियमात्। अन्यथा रुद्ररोदनादेरप्यपूर्व्वत्वेन तत्रापि तात्पर्य्यापत्तेर्नोत्पत्त्या-दौ तात्पर्य्यमित्याह। न हीति॥ आत्मप्रतिपत्तौ तु फलदर्शनात् परत्वमेव युक्तमित्याह। ऐकात्म्येति॥ सर्व्वेति एतावदरे खल्वमृतत्वं तमेवं विद्वानमृत इह भवति विद्वानमृतः समभवदित्यादिषु ज्ञानादमृतत्वं सिद्धमित्यर्थः। समं सर्व्वेषु भूतेष्वित्यनेनैकात्म्यमुक्त्वा समं पश्यन् हि सर्वत्र न हिनस्त्या-त्मनाऽऽत्मानमिति ज्ञानादमृतत्वमुक्तमित्याह। स्मृतिषु चेति॥ यज्ज्ञात्वा-ऽमृतमश्नुत इत्यादिरादिशब्दार्थः। सोऽहं स च त्वं स च सर्व्वमेतदात्म-स्वरूपं त्यज भेदमोहम्। इतीरितस्तेन स राजवर्य्यस्तत्याज भेदं परमार्थ-दृष्टिरित्यैकात्म्यमुक्त्वा स चापि जातिस्मरणात् प्रबोधस्तत्रैव जन्मन्यप-वर्गमापेत्यादिविष्णुपुराणमाद्यशब्दार्थः॥ आत्मैक्यमेवास्याध्यायस्यार्थ इत्युक्त्वा एतदेव स्थिरीकर्त्तुमाशङ्कते। नन्विति॥ जीव ईश्वरो निर्व्वि-शेषं ब्रह्म चेति त्रय आत्मान इत्यर्थः। तत्र जीवोऽहं कर्त्तेति। लोके एष हि द्रष्टा स्रष्टा यजेत स्वर्गकाम इत्यादिशास्त्रे च प्रसिद्ध इत्याह। भोक्तेति॥ एक इति त्रयाणां मध्ये एक इत्यर्थः॥ यो लोकदेहनिर्म्मा-णेन लिङ्गेनावगम्यते सर्व्वज्ञ ईश्वरः स द्वितीय इत्याह। अनेकेति॥ अनेकेषां विचित्राणां प्राणिनां यान्यनेकानि विचित्राणि कर्म्मफलानि

षयकौशलज्ञानवान् तत्कर्त्ता तक्षादिरिव। ईश्वरः सर्वज्ञो जगतः कर्त्ताऽद्वितीयश्चेतन आत्माऽवगम्यते। यतो वाचो निवर्त्तन्ते। नेति नेतीत्यादिशास्त्रप्रसिद्ध औपनिषदः पुरुषस्तृतीयः। एवमेते त्रय आत्मानोऽन्योन्यविलक्षणाः। तत्र कथमेक एवात्मा ऽद्वितीयो ऽसंसारीति ज्ञातुं शक्यते। तत्र जीव एव तावत् कथं ज्ञायेत। नन्वेवं ज्ञायते श्रोता मन्ता द्रष्टाऽऽदेष्टाऽऽघोष्टा विज्ञाता प्रज्ञातेति। ननु विप्रतिषिद्धं विज्ञायते यः श्रवणादिकर्त्तृत्वेनाऽमतो मन्ताऽविज्ञातो विज्ञातेति च। तथा न मतेर्मन्तारं मन्वीथा न विज्ञाते-

---

तदुपभोगयोग्यानि यान्यनेकानि विचित्राण्यधिष्ठानानि स्थानविशेषास्तदन्तो लोका देहाश्च तेषां निर्म्माणे लिङ्गेनेत्यर्थः। इदं विशेषणं कर्त्तुः सर्वज्ञतार्थम्। यथाशास्त्रप्रदर्शनेनेति स इमाँल्लोकानसृजतेत्यादिशास्त्रप्रदर्शितलिङ्गेनेत्यर्थः॥ अनुमाने दृष्टान्तमाह। पुरेति॥ अचेतनं प्रधानं स्वयमेव विचित्रजगदाकारेण परिणमते नतु सर्व्वज्ञोऽधिष्ठाता कश्चिदिति साङ्ख्याः। तन्निरासायाह। चेतन इति॥ चेतनानधिष्ठितस्याचेतनस्य स्वतः प्रवृत्त्यदर्शनादवश्यं सर्व्वज्ञश्चेतनोऽधिष्ठाताऽङ्गीकार्य्य इत्यर्थः॥ तृतीयमाह। यत इति॥ एकस्यैव रूपभेदेन भेद इत्याशङ्क्याह। एवमिति॥ अन्योन्येति॥ अन्योन्यविरुद्धधर्म्मवत्त्वाद्दहनतुहिनवद्भिन्ना इत्यर्थः॥ तत्र जीवस्य यत् कर्तृत्वभोक्तृत्वादिवैलक्षण्यमुक्तं तदसिद्धं तस्य मानान्तराविषयत्वेन तद्धर्म्मवत्तया प्रमातुमशक्यत्वात्॥ इतो न भेद इत्यभिप्रायेण परिहरति सिद्धान्ती। तत्र जीव एवेति॥ कथमिति तस्य ज्ञेयत्वाभावे कर्तृत्वादिधर्म्मविशिष्टतयापि स ज्ञातुं न शक्यत इत्यर्थः॥ अविज्ञाताभिप्रायप्रकारः प्रश्नं मत्वा शङ्कते। नन्विति॥ आदेष्टा वर्णात्मकशब्दवक्ता। आघोष्टा ध्वन्यात्मकशब्दवक्तेत्यर्थः॥ पूर्ववाक्ये स एषोऽश्रुतोऽमतोऽविज्ञात इति विज्ञेयत्वस्य प्रतिषेधात्तद्विरुद्धं ज्ञेयत्वमि-

षिज्ञातारं विजानीयात् इत्यादि च। सत्यं विप्रतिषिद्धं यदि प्रत्यक्षेण ज्ञायते सुखादिवत् प्रत्यक्षज्ञानस्य निवार्य्यते न मतेर्मन्तारमित्यादिना। ज्ञायते तु श्रवणादिलिङ्गेन तत्र कुतो विप्रतिषेधः। ननु श्रवणादिलिङ्गेनापि कथं ज्ञायते यावता यदा शृणोति आत्मा श्रोतव्यः शब्दस्तदा तस्य श्रवणादिक्रिययैव वर्त्तमानत्वान्मननविज्ञानक्रिये न सम्भवत आत्मनि परत्र वा। तथान्यत्रापि मनना-दिक्रियासु श्रवणादिक्रियाश्च स्वविषयेष्वेव। न हि मन्त-व्यादन्यत्र मन्तुर्मननक्रिया सम्भवति। ननु मनसः सर्व-मेव मन्तव्यम्। सत्यमेवं तथापि सर्वमपि मन्तव्यं मन्तार-

---

त्याह। ननु विप्रतिषिद्धमिति॥ यः श्रवणादिकर्त्तृत्वेन ज्ञायते स एवा-मतोऽविज्ञातश्चेत्येतद्विप्रतिषिद्धमित्यन्वयः॥ श्रुत्यन्तरे विप्रतिषिद्धस्चेत्याह। तथा न मतेरिति॥ मतेर्म्मनोवृत्तेर्म्मन्तारं साक्षिणमित्यर्थः। आदि-पदेनामतो मन्ताऽविज्ञातो विज्ञातेत्यादिसङ्ग्रहः॥ श्रुत्योः प्रमाणत्वाविशे-षाद्विप्रतिषेधानुपपत्तेः प्रत्यक्षेणाविज्ञेयत्वमनुमानेन विज्ञेयत्वञ्चोच्यते। ताभ्यामिति। शङ्कते पूर्व्ववादी। सत्यमिति॥ आत्मनि युगपज्ज्ञानद्व-यायोगात् श्रवणादिकाले मननविज्ञानयोरसम्भवात् श्रवणादिना मननविज्ञानरूपात्मविषयकमन्यविषयकं वानुमितिज्ञानं न सम्भवतीत्याह सिद्धान्ती। ननु श्रवणादीति॥ श्रवणक्रिययैव सह वर्त्तमानत्वात् श्रव-णक्रियाधारत्वादात्मनि विषये परविषये वा तस्य मननविज्ञानक्रिये न सम्भवत इत्यर्थः॥ अत्र प्रकरणे मननविज्ञानशब्दाभ्यामनुमितिरुच्यते आत्मनस्तद्विषयत्वस्यैवेह शङ्कावादिनोक्तत्वादिति तर्हि श्रवणयोर्युगपद-सम्भवे अन्यविषयकमननक्रियया आत्मा मन्तव्य इत्याशङ्क्य विजातीय-क्रियाद्वयवत् सजातीयक्रियाद्वयमपि युगपन्न सम्भवतीत्याह। तथेति॥ मननादिक्रियास्विति मननादिक्रियान्तरमपि न सम्भवतीति शेषः॥ ननु

मन्त्रन्तरेण न मन्तुं शक्यम्। यद्येवं किं स्यादिदमत्र स्यात् सर्वस्य योऽयं मन्ता स मन्तैवेति न मन्तव्यः स्यात्। न च द्वितीयो मन्तुर्मन्ताऽस्ति। यदा स आत्मनैव मन्तव्यस्तदा-त्मना मन्तव्यो यश्च मन्तव्य आत्मानौ द्वौ प्रस-

मननक्रिया हि लिङ्गम्। न च लिङ्गं करणमतीतलिङ्गेनाप्यनुमितिद-र्शनात्। किन्तु लिङ्गज्ञानं करणम्। न च तस्याप्यनुमितिकाले सत्वनि-यमः। पूर्व्वक्षणवृत्त्वमात्रेण करणत्वोपपत्तेरिति तयोर्यौगपद्याभावेऽपि न दोष इति चेत्। न। श्रवणमननादिलिङ्गविज्ञानस्य साक्षिरूपस्य स्वतो विशेषाभावेन श्रवणादिनिरूपितत्वमेषणैव। तस्यानुमापकस्य वक्तव्यत्वेन तत्सत्ताया अपि तत्काले वक्तव्यत्वादिति भावः॥ ननु तर्हि वाह्यगोचर-श्रवणादिक्रियया मन्तुरनुमानं माभूत् किन्तु वाह्यगोचरश्रवणादि-क्रियैवात्मानमपि विषयीकरिष्यतीत्यत आह। श्रवणादिक्रियाश्चेति॥ स्वविषयगोचरा एव न तु स्वाश्रयगोचरा इत्यर्थः॥ किञ्च न मतेर्मन्तार मन्वीथा इत्यात्मनो मन्तव्यत्वनिषेधात् मन्तर्यात्मनि मननक्रिया न सम्भवतीत्याह। न हीति। अन्यत्रेति आत्मनीत्यर्थः। कुठारादि-क्रियाया दारुणो ऽन्यत्र व्यापारादर्शनादित्यर्थः। ननु मनसो वशे सर्व्वमिदं बभूवेति श्रुतेः सर्व्वस्य मनोविषयत्वादात्मन्यपि मन्तव्यत्वमेवेति शङ्कते। ननु मनस इति॥ एवमपि मनसः करणत्वात् क्रियायाश्च कर्त्ता-रमन्तरानुपपत्तेर्मन्ताऽवश्यमङ्गीकर्त्तव्य इति सिद्धान्तो तावदाह। सत्य मेवमिति॥ तथापीति न मन्वीथा इति विशेषः। श्रुत्या मन्तव्यत्वनिषेधाद-भ्युपगम्योच्यते इति सूचयत्यपिशब्दः॥ अस्तु मन्तुरावश्यकत्वं तावता किं स्यादिति शङ्कते। यद्येवमिति॥ एवं सत्यात्मनो मन्तव्यत्वाभावः सिध्य-तीत्याह। इदमिति॥ कुत एतदिति चेत्तत्र वक्तव्यं किमात्मनो मनने स्वयमेव मन्ता उतान्यो वेति विकल्पमाद्यं दूषयति। सर्व्वस्येति॥ एकत्र कर्तृकर्म्मभावस्य विरोधान्मन्तुर्मन्तव्यत्वं न सम्भवतीत्यर्थः। द्वितीये सं मन्ता अनात्माऽऽत्मा वेति विकल्पं आद्ये आह न चेति॥ द्वितीय इत्यमन्तरमनात्मेति शेषः। अनात्मनोऽचेतनस्य मन्तृत्वानुपपत्तिरि-

ज्येयाताम्। एक एवात्मा द्विधा मन्तृमन्तव्यत्वेन द्विप्रकलीभवेद्दंशादिवदुभयथाप्यनुपपत्तिरेव। यथा प्रदीपयोः प्रकाश्यप्रकाशकत्वानुपपत्तिः समत्वात् तद्वत्। न च मन्तुर्मन्तव्ये मननव्यापारशून्यः कालोऽस्त्यात्ममननाय। यदापि लिङ्गेनात्मानं मनुते मन्ता तदापि पूर्ववदेव लिङ्गेन मन्तव्य आत्मा। यश्च तस्य मन्ता तौ द्वौ प्रसज्येयातां एक एव वा द्विधेति पूर्व्वोक्तो दोषो न प्रत्य-

---

र्थः॥ द्वितीयमनुवदति। यदेति अस्मिन् पक्षे एकस्मिन् शरीरे आत्मद्वयं स्यादित्याह। तदेति॥ चशब्दौ परस्परसमुच्चयार्थौ। येन चात्मनात्मा मन्तव्यो यश्चात्मा मन्ता इत्यन्वयः। तृतीयान्तप्रथमान्तयच्छब्दाभ्यामुक्तौ द्वावात्मानौ स्यातामित्यर्थः॥ एतद्दोषपरिहारायैकस्यैवात्मन एकांशेन मन्तृत्वमंशान्तरेण मन्तव्यत्वमित्युक्तौ सावयवत्वं स्यादित्याह। एक एवेति॥ अस्तु को दोष इत्याशङ्क्यात्मभेदे तयोरैकमत्याद्योगाद्विरुद्धदिक्क्रियतया शरीरमुन्मथ्येत सावयवत्वे नित्यत्वेन कृतहानादिकं स्यादिति दोषमाह। उभयथेति॥ भिन्नयोरपि समानस्वभावयोर्द्वौ पयोः कर्तृकर्म्मभावादर्शनादात्मभेदपक्षे आत्मैकत्वभेदपक्षे वा तयोः समानस्वभावत्वादभिन्नपक्ष इव कर्त्तृकर्म्मभावो न सम्भवतीत्यनुपपत्त्यन्तरमाह। यथेति॥ पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति नान्तरात्मन्निति श्रुत्या करणानां वहिर्व्विषयत्वनियमस्यात्मविषयत्वाभावस्य चोक्तत्वात्। यन्मनसा न मनुते इति श्रुतेश्च॥ मनसो वहिर्व्विषये मन्तव्य एव व्यापारो नात्मनीत्याह। न च मन्तुरिति॥ न चैवं सति कश्चिद्धीरः प्रत्यगात्मानमैक्षन्मनसैवानुद्रष्टव्यमित्यादीनां का गतिरिति वाच्यम्। मनसो वहिर्विक्षेपाभावेनैकाग्र्ये सत्यात्मा स्वयमेव प्रकाशत इति तदर्थत्वात्। अन्यथा पूर्व्वोक्तन्यायोपष्टंभितानामतो विज्ञात इत्यादिबहुश्रुतिव्याकोपः स्यादिति भावः। एवमात्मनः साक्षान्मनसा मन्तव्यत्वपक्षे एकस्मिन् शरीरे आत्मभेदस्तस्य शक-

ज्ञेया नाप्यनुमानेन ज्ञायते चेत् कथमुच्यते सम आ-
प्नोति विद्यादिति । कथं वा श्रोता मन्तेत्यादि । ननु श्रोतृ-
त्वादिधर्म्मवानात्मा अश्रोतृत्वादिप्रसिद्धमात्मन किमत्र
विषमं पश्यसि । यद्यपि तव न विषमं मम तु विषमं प्रति-

---

स्तोभावो वा स्यादित्युक्तदोषमनुमितिविषयपक्षेऽप्याह । यदापीति ॥ एव-
ममतो विज्ञात इति श्रुत्या न्यायोपबृंहितया सर्व्वात्मना ज्ञेयत्वाभावा-
दिति स्थितम् । तत्र पूर्व्ववादी शङ्कते । न प्रत्यक्षेणेति ॥ कथमिति
ज्ञेयत्वप्रतिपादकश्रुतेः श्रोतृत्वादिधर्म्मवत्त्वप्रतिपादकश्रुतेश्चानुपपत्तिरि-
त्यर्थः । तत्र विद्यादिति श्रुतौ इतरनिषेधे सति स्वप्रकाशत्वेन स्वतः
स्फुरणमेवोच्यते न तु कर्म्मतया वेद्यत्वमिति परिहारं वक्ष्याम इत्यभिप्रेत्य
श्रोतृत्वादिश्रुतौ परिहारमाह । नन्विति ॥ तत्र किं धर्म्मवत्त्वप्रतिपाद-
नस्य कार्मतिरिति पृच्छ्यते किं वा श्रोतृत्वादिप्रतिपादनेनाश्रोतृत्वादि-
कमप्रसिद्धमित्युच्यते वेति विकल्प्य नाद्यः । नित्यमेव श्रोतृत्वादिधर्म्मा-
ङ्गीकारादित्याह । श्रोतृत्वादिति ॥ न श्रोता न मन्तेत्यादिश्रुतेर्नित्य-
मेवाश्रोतृत्वादेरपि प्रामाणिकत्वात् । न द्वितीयोऽपीत्याह । अश्रोतृ-
त्वादीति ॥ उभयोरविरोधश्चोत्तरत्र वक्ष्याम इति भावः ॥ एवञ्च श्रोता
मन्ता न श्रोता न मन्तेति चोभयश्रवणे सति श्रोतृत्वादिधर्म्मवानेवेत्यनन्त-
रपरिग्रहवैषम्यं तव न युक्तमित्याह । किमत्रेति ॥ न च श्रोतृत्वश्रुतेर-
न्यपरत्वोपपत्तेर्न वैषम्यमित्याशङ्क्य कालभेदेनोभयोरपि दर्शनादन्यतरस्या-
न्यपरत्वे हेत्वभावात् श्रोतैवेत्यादिश्रुत्यङ्गीकारे वैषम्यं स्यादेवेत्याह । यद्य-
पीति ॥ अश्रोतृत्वादि प्रसिद्धं अनात्मन इति पाठे नन्विति वाक्यमपि
शङ्कान्तर्गतमेव । श्रोतेत्यादिश्रुत्या श्रोतृत्वादिधर्म्मवानात्मा । ननु तत्
कथं स्यादित्यन्वयः । ननु न श्रोतेत्यादिश्रुतेरश्रोतृत्वादिधर्म्मवत्त्वमा-
त्मन इत्याशङ्क्य लोकेऽप्रसिद्धेर्नैवमिति स एवाह । अश्रोतृत्वादीति ॥
उभयोरप्यात्मधर्म्मत्वश्रवणे समानेऽन्यतरस्य नात्मधर्म्मत्वाभिधानमयुक्त-
मिति सिद्धान्ती दूषयति । किमत्रेति ॥ ननु लोकप्रसिद्धिवशादनात्म-
धर्म्मत्वनिश्चयान्न वैषम्यमित्याशङ्क्य निराकरोति । यद्यपीति ॥ अश्रोतृ-

मति । कथम् । यदासौ श्रोता तदा न मन्ता यदा मन्ता तदा न श्रोता । तदैवं सति पक्षे श्रोता मन्ता पक्षे न श्रोता नापि मन्ता । तथाऽप्यत्रापि च यदैवं तदा श्रोतृत्वादिधर्मवानात्मा ऽश्रोतृत्वादिधर्मवांश्चेति संशय-स्थाने कथं तव न वैषम्यम् । यदा देवदत्तो गच्छति तदा न स्थाता गन्तैव । यदोत्तिष्ठति न गन्ता स्थाता एव तदास्य पक्ष एव गन्तृत्वं स्थातृत्वञ्च न नित्यं गन्तृत्वं स्थातृत्वं वा तद्वत् । तथैवात्र काणादादयः पश्यन्ति । पक्षे प्राप्ते नैव

---

त्वादेरात्मधर्मत्वेऽपि प्रसिद्धेरविशेषात् श्रुत्यनुरोधेनोभयोरप्यात्मधर्मत्व-मिति प्रश्नपूर्व्वकमाह । कथमिति ॥ इतरत् सर्व्वं समानम् ॥ त्वया हि कादाचित्कज्ञानेन नित्यमेव श्रोतृत्वादिकमङ्गीक्रियते तदयुक्तमित्याह । यदाऽसाविति ॥ मननानन्तरं न तु नित्यमेव श्रोता मन्ता वेति शेषः । तथाप्यत्रापीति । दृष्टत्वाविज्ञातृत्वादावप्येवमेव कादाचित्कत्वमित्यर्थः ॥ श्रोतृत्वादेः पाक्षिकत्वं दृष्टान्तेन स्पष्टीकरोति । यदेति ॥ तदास्येत्यत्र यदेवमिति पदमध्याहृत्य यदैवं व्यवस्था तदास्य पक्ष एव गन्तृत्वमिति वाक्यं योज्यम् । तद्वदिति श्रोतृत्वादिकमपि न नित्यमित्यर्थः ॥ मतान्तरेऽविदिताभिप्रायाः काणादादय उभयमपि कादाचित्कमेवाश्रित्येति चोदयन्तीत्याह । अत्रेति ॥ ननु सिद्धान्तिनापि श्रोतृत्वाद्यङ्गीकारस्य सिद्धान्तितत्वात् कथं भेद इत्याशङ्क्य तन्मते नित्यसाक्षिणो नित्यमेव श्रोतृत्वम् । कादाचित्कज्ञानस्य रूपात्वेन तदभावेन च नित्यमेवाश्रोतृ-त्वम् । अन्यमते तु कादाचित्कज्ञानेनैव श्रोतृत्वादिकमिति विशेषमाह । संयोगजत्वमिति ॥ ज्ञानस्य कादाचित्कत्वे यौगपद्ये च यथाक्रमं प्रमाण-माह । दर्शयन्ति चेति ॥ युगपदिति यदि मनो न स्यात् तर्हि चक्षु-रादीन्द्रियाणां युगपदेव रूपादिभिः सम्बन्धे युगपदेव सर्व्वेन्द्रियैः सर्व-विषयज्ञानानि स्युः । सामग्र्याः सत्त्वात् । न च तथाऽस्त्यतः क्रमेण तत्त-

श्रोतृत्वादिनात्मोच्यते श्रोता मन्तेत्यादिसंयोगजत्व-
मयौगपद्यञ्च ज्ञानस्य ख्याप्यते। दर्शयन्ति चान्यत्रमना
ऽभवं नादर्शमित्यादि युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्ग-
मिति च न्याय्यम्। भवत्वेवं किं तव नेष्टम्। यद्येवं स्याद-
स्त्वेवं तवेष्टं चेत् श्रुत्यर्थस्तु न सम्भवति किं न श्रोता मन्ते-
त्यादिश्रुत्यर्थः। न श्रोता मन्तेत्यादिवचनात्। ननु पाक्षि-
कत्वेन प्रत्युक्तं त्वया न नित्यमेव श्रोतृत्वादि अभ्युपगमात्।
न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यत इत्यादिश्रुतेः। एवं

---

दिन्द्रियसंयोगि अणुपरिमाणं मनोऽङ्गीकर्त्तव्यम्। तथा च युगपत्
सर्वैन्द्रियैर्मनःसंयोगाभावान्न युगपत् सर्वविषयकं ज्ञानम्। अतो युगप-
द्रूपादिसर्वविषयकज्ञानानुत्पत्तिलिङ्गेन मनोऽस्तीति वदन्तो युगपत् सर्व-
ज्ञानानुत्पत्तिरित्युक्तवन्त इत्यर्थः। इममर्थं न्याय्यं पश्यन्तीति पूर्वेणा-
न्वयः॥ काणादादिमते सिद्धान्तिना प्रदर्शिते सति तर्हि काणादादि-
रीत्या श्रुतिद्वयोपपत्तेरात्मनः श्रोतृत्वादिधर्मासिद्धेश्च न तथैवास्त्विति
पूर्वपक्षी तटस्थो वा सिद्धान्तिनं प्रति शङ्कते। भवत्विति॥ यद्येवं न्याय्यं
स्यादेवमेव भवतु किं तव नेष्टमित्यर्थः। आत्मनः कादाचित्कज्ञानेन श्रोतृ-
त्वादिधर्मवत्त्वस्य श्रुत्यनभिमतत्वान्न तन्न्याय्यमिति सिद्धान्ती तं पक्षं
दूषयति। अस्त्वेवमिति॥ ननु श्रोता मन्तेति श्रुत्या तद्धर्मवत्त्वप्रतिपाद-
नादनभिमतत्वमसिद्धमिति शङ्कते। किं नेति॥ न श्रोतेति श्रुत्या विशे-
षतः कालत्रयेऽपि श्रोतृत्वादिधर्मराहित्यप्रतिपादनात् तद्धर्मवत्त्वमनभि-
मतमेवेति सिद्धान्ती उत्तरमाह। न श्रोतेति॥ यदाऽसौ श्रोतेत्यादिना
श्रोतृत्वादेः पाक्षिकत्वस्य त्वयैवोक्तत्वात् काणादपक्षप्रदर्शनवेलायाञ्च
कादाचित्कज्ञानेन तदुपपादनात् पाक्षिकश्रोतृत्वादि तदभावविषयतया
श्रुतिद्वयस्योपपत्तिं शङ्कते। नन्विति॥ अपाक्षिकत्वेन श्रोतृत्वतदभावयोः
श्रुतिभ्यां स्वरसतः प्रतीतेः पाक्षिकत्वेन तत्सङ्कोचो न युक्त इति साभि-

तर्हि नित्यमेव श्रोतृत्वाद्यभ्युपगमे प्रत्यक्षविरुद्धा युगप-ज्ज्ञानोत्पत्तिरज्ञानाभावश्चात्मनः कल्पितः स्यात्। तच्चा-निष्टमिति नोभयदोषोपपत्तिः। आत्मनः श्रुत्यादिश्रोतृ-त्वादिधर्मवत्त्वश्रुतेः। अनित्यानां मूर्त्तानाञ्च चक्षुरादीनां दृष्ट्याद्यनित्यत्वमेव संयोगवियोगधर्मिणाम्। यथाऽग्नेर्ज्वलनं तृणादिसंयोगजत्वात्तद्वत्। न तु नित्यस्यामूर्त्तस्यासंयो-गविभागधर्मिणः संयोगजदृष्ट्याद्यनित्यधर्मत्वं सम्भवति। तथा च श्रुतिः। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत

---

प्रायं विहरन्नन् सिद्धान्त्याह। न नित्यमेवेति॥ ननु श्रुतेरनित्यत्वे सति तद्घटितं श्रोतृत्वमप्यनित्यमिति शङ्कोच आशयकोऽत आह। न हीति श्रुतेः श्रोतृत्वस्य चानित्यत्ववचनं श्रुतिविरुद्धमित्यर्थः॥ श्रुतिमित्यादीनां नित्यत्वे युगपत् सर्वज्ञानं स्यात् कदाचिदपि कस्यचिदपि ज्ञानस्याभावो न स्यात्। श्रुत्यादिशब्दितानां सर्वेषां ज्ञानानां नित्यत्वात्। न चेष्टा-पत्तिः। प्रत्यक्षविरोधात्॥ अतो न हि श्रोतुः श्रुतेरित्यादिश्रुतेरन्य-परत्वं वक्तव्यमिति शङ्कते। एवं तर्हीति। इति शब्दः शङ्कासमाप्त्यर्थः॥ परिहरति। नोभयेति॥ युगपज्ज्ञानोपपत्तिरज्ञानभावश्चेत्युभयदोष-स्योपपत्तिसम्भवो नास्तीत्यर्थः। श्रोतृत्वादेर्नित्यत्वे कथमुभयदोषाभाव इत्याशङ्क्यात्मस्वरूपभूतस्याचिद्रूपश्रुत्यादेर्नित्यत्वेऽपि वृत्तिरूपकादाचित्क-श्रुत्यादेरप्यभ्युपगमादुक्तदोषाभाव इति परिहरन् नित्यश्रोतृत्वादिकं दर्शयति। आत्मन इति॥ आत्मनः स्वरूपभूतं यत् श्रुत्यादि श्रोत्रजन्य-वृत्तिमत् साचिद्रूपं तद्द्वाराच्छ्रोतृत्वादि तद्धर्मवत्त्वस्य श्रोता मन्तेत्यादि-श्रुतेरित्यर्थः॥ अनित्यश्रुत्यादिकं तर्हि कथमित्याशङ्क्य तद्दर्शयति। अनित्यानामिति॥ तेषामनित्यत्वमाह। मूर्त्तानामिति॥ दृष्ट्यादेरनित्यत्वे हेतुमाह। संयोगेति॥ संयोगजन्यत्वाद्दृष्ट्यादेरनित्यत्वमित्यर्थः॥ ज्वलन-मित्यनन्तरमनित्यमित्यनुषङ्गः। ननु यद्यनित्यदृष्ट्याद्यभ्युपगम्येत तर्हि तद्देवात्मनोऽपि धर्मोऽस्तु किं नित्यदृष्ट्यादिनेत्यत आह। नन्विति॥ नित्यत्व-

इत्यादि। एवं तर्हि द्वे दृष्टी चक्षुषोऽनित्या दृष्टि-
र्नित्या चात्मनः। तथा च द्वे श्रुती श्रोत्रस्यानित्या आत्म-
स्वरूपस्य च नित्या। तथा मती विज्ञाती वाह्यावाह्ये।
एवं ह्येव चेयं श्रुतिरुपपन्ना भवति दृष्टेर्द्रष्टा श्रुतेः श्रोता
इत्याद्या। लोकेऽपि प्रसिद्धं चक्षुषस्तिमिरागमापाययोर्नष्टा
दृष्टिर्जाता दृष्टिरिति चक्षुर्दृष्टेरनित्यत्वम्। तथा श्रुति-

---

त्वादमूर्त्तत्वममूर्त्तत्वात् संयोगादिधर्मरहितत्वं ततः संयोगजेच्छाद्यसम्भव
इत्यत आत्मनो नित्येच्छाद्यभ्युपगन्तव्यमित्यर्थः। श्रुतितोऽपि नि-
त्येच्छादिसिद्धिरित्याह। तथा चेति॥ नित्यानित्यदृष्टिद्वयाङ्गीकारे
गौरवमिति शङ्कते। एवं तर्हीति॥ श्रुतिप्रामाण्याद्द्वैविध्याङ्गी-
कारे गौरवं प्रामाणिकमित्याह। एवं ह्येवेति॥ तथा चेति॥ चोऽवधारणे
तथैवेत्यर्थः दृष्टेर्द्रष्टेति। दृष्टिविषयकदृष्टिमानिति तदर्थः। तत्र विषयवि-
षयिभावस्यैकस्मिन्नसम्भवाद्दृष्टिद्वयं प्रतीयत इति दृष्टिद्वैविध्ये सत्येवेयं
श्रुतिरुपपद्यते नान्यथेत्यर्थः॥ तिमिररोगस्यागमे नष्टा दृष्टिः अपाये
च जाता दृष्टिरिति प्रतीतेर्जन्मनाशयोगिनी अनित्या दृष्टिरेका।
तदीयजन्मनाशसाक्षिभूता द्वितीया दृष्टिरस्तीति लोकेऽपि प्रतीयत
इत्याह। लोकेऽपीति॥ चक्षुर्दृष्टेरित्युपलक्षणमात्मदृष्टेर्नित्यत्वं प्रसि-
द्धमित्यपि द्रष्टव्यम्। तथा च श्रुतिमत्यादीनामपि नित्यत्वमनित्यत्वञ्च
प्रसिद्धमित्यनुषङ्गः। आत्मेच्छादीनां नित्यत्वे हेत्वन्तरमाह। आत्म-
इच्छादीनाञ्चेति॥ स्वप्ने चक्षुषोऽभावेऽपि दृष्टेः सत्त्वान्न सा चक्षुर्जन्येति
नित्यैवेत्यर्थः। चक्षुः स्वप्नेऽप्यनुपरतमिति यदि कश्चिद्ब्रूयात् तं प्रति
उक्तमुद्धृतचक्षुरिति तस्य चक्षुःसत्त्वे शङ्कैव नास्तीत्यर्थः। अवगमेति
अवगतं निश्चितं वाधिर्य्यं यस्येत्यर्थः। न च स्वप्ने इच्छादेश्चक्षुराद्यजन्य-
त्वात् कथं दृष्टिश्रुत्यादिशब्दवाच्यत्वमिति वाच्यम्। रूपादिविषयका-
परोक्षज्ञानस्यैव इच्छादिशब्दवाच्यत्वादिति भावः। उक्तमर्थं विपर्य्यये
वाधकोक्त्या द्रढयति। यदीति॥ न पश्येदिति दर्शनहेतोश्चक्षुषो ऽभावा-

मत्यादीनामात्मदृष्ट्यादीनाञ्च नित्यत्वं प्रसिद्धमेव। लोको वदति ह्युद्धृतचक्षुः स्वप्नेऽद्य मया भ्राता दृष्ट इति। तथावगतबाधिर्य्यः स्वप्ने श्रुतो मन्त्रोऽद्येत्यादि। यदि चक्षुःसंयोगजैवात्मनो नित्यदृष्टिस्तन्नाशे नश्येत तदोद्धृतचक्षुः स्वप्ने नीलपीतादीनि न पश्येत्। न हि द्रष्टुर्दृष्टेरित्याद्या च श्रुतिरनुपपन्ना स्यात्। तच्चक्षुः पुरुषे येन स्वप्नं पश्यतीत्याद्या च श्रुतिः। नित्यात्मदृष्टिर्बाह्यानित्यदृष्टेर्ग्राहिका। बाह्यदृष्टेश्चोपजनापायाद्यनित्यधर्मवत्त्वाद्ग्राहिकाया आत्मदृष्टेस्तद्वदवभासत्वम्। अनित्यत्वादि-

---

दित्यर्थः। न चेदं दर्शनं स्मृतिरिति वाच्यम्। तथा सति सन्निहितत्वेनापरोक्षाभासो न स्यात्। न च तदंशे भ्रम इति वाच्यम्। बाधकाभावात् पूर्वमननुभूतं भ्रात्रादिदर्शनञ्च न स्यादिति भावः। इदमुपलक्षणं सुषुप्तमस्वाप्समिति परामर्शहेतुभूतसुषुप्तिकालीनानुभवोऽपि नित्योऽभ्युपगन्तव्यः। तदानीं सर्वकरणानामभावेनानित्यानुभवादित्यपि द्रष्टव्यम्। न केवलं प्रत्यक्षस्यानुपपत्तिः श्रुतिरप्यनुपपन्ना स्यादित्याह। न हि द्रष्टुरिति॥ न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यत इत्याद्या चेत्यनेन सङ्गृह्यते। तच्चक्षुरिति। चष्ट इति चक्षुः। द्रष्टा साक्षी पुरुषे आत्मनि शरीरे वा। येन स्वप्नं पश्यति तच्चक्षुः साक्षीत्याद्या चानुपपन्ना स्यादित्यनुषङ्गः॥ स्वप्नान्तं जागरितान्तञ्चोभौ येनानुपश्यतीत्यादिरादिशब्दार्थः। नन्वात्मदृष्टेर्नित्यत्वे कथं तस्यानित्यत्वप्रतीतिः। कथं वा लोकस्यानित्यैव सर्व्वापि दृष्टिरिति निश्चयश्चेत्याशङ्क्य ग्राह्यानित्यदृष्टिगतमनित्यत्वादि सर्व्वं ग्राहिकायां नित्यदृष्टौ भासते। ग्राह्याऽयःपिण्डगतवर्त्तुलत्वादिधर्म्माणां ग्राहकाग्न्यादौ भानदर्शनादतो लोकस्य तथा प्रतीतिरुपपद्यत इत्याह। नित्येत्यादिना॥ तद्वदवभासत्वमिति ग्राह्यवदवभासमानत्वमित्यर्थः। ग्राह्यधर्म्मस्य

भ्रान्तिनिमित्तं लोकस्येति युक्तम्। यथा भ्रमणादिधर्म-
वदलातादिवस्तुविषयदृष्टेरपि भ्रमतीव तद्वत्। तथा च
श्रुतिः। ध्यायतीव लेलायतीवेति। तस्मादात्मदृष्टेर्नित्य-
त्वान्न यौगपद्यमयौगपद्यं वास्ति। बाह्यानित्यदृष्ट्युपाधिवशात्
लोकस्य। तार्किकाणान्त्वागमसम्प्रदायवर्ज्जितत्वादनित्या-
त्मनो दृष्टिरिति। भ्रान्तिरुपपन्नैव जीवेश्वरपरमात्मभेदक-

---

याज्ञके भानं दृष्टान्तेन स्पष्टयति। तथा भ्रमणादीति॥ आदिशब्देन
गमनादि गृह्यते। द्वितीयेन धावत् पश्चादि। ध्यायतीवेति याज्ञ-
बुद्धिगतं ध्यानादिकं याज्ञके साक्षिणि भासते इति श्रुत्यर्थः। एवञ्च
यत्पूर्ववादिना युगपदनेकज्ञानोत्पत्तिः प्रत्यक्षविरुद्धा स्यादित्युक्तं तत्
परिहृतमित्याह। तस्मादिति॥ तस्मादित्यस्यार्थमाह। आत्मदृष्टेरिति॥
अनेकनिरूपितत्वाद्यौगपद्यस्य तदभावरूपत्वाद्यौगपद्यस्यैकस्यां दृष्टौ
तदुभयमपि नास्तीत्यर्थः। नन्वात्मदृष्टेर्नित्यत्वे कथं परीक्षाकुशलानां
नैयायिकानां सर्व्वस्य च भ्रमः स्यादित्याशङ्क्य न नरेणावरेण प्रोक्त एष
सुविज्ञेयो बहुधा चिन्त्यमानः नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव
सुज्ञानाय प्रेष्ठेत्यादिश्रुतेः स्वबुद्ध्या ज्ञातुमशक्यत्वावगमात् सम्प्रदाय-
परम्परयैव ज्ञातव्यत्वावगमाच्च तेषां तद्रहितत्वाद्भ्रमो युक्त इत्याह।
बाह्यानित्येति॥ न केवलं ज्ञानभेदकल्पनैव तेषां भ्रमः किन्त्वात्मभेद-
कल्पनाप्येतन्मूलो भ्रम एवेत्याह। जीवेश्वरेति॥ एतन्निमित्तेति ज्ञाना-
नित्यत्वतद्भेदकल्पनानिमित्तैव नित्यानित्यज्ञानवतोर्जीवेश्वरयोर्व्विचित्र-
ज्ञानवताञ्च जीवानां परमात्मनश्चैकत्वं न सम्भवतीति युक्त्याभासेन
तैर्भेदकल्पनादित्यर्थः। किञ्चात्मनैवायं ज्योतिषाऽस्ते अयमात्मा ब्रह्म
सर्व्वानुभूः प्रज्ञानघन एवेत्यादिश्रुतिभ्य आत्मन एव नित्यदृष्टिरूपत्वा-
दात्मनश्च सर्व्वाः प्रजा यत्रैकं भवन्तीत्यादिना सर्व्वकल्पनां तन्मात्रत्वेन
तद्व्यतिरेकेणाभावोक्तेर्निर्व्विशेषत्वात्तद्रूपाया अपि दृष्टेर्निर्व्विशेषत्वात्तस्या-
मस्तीत्याद्याः सर्व्वाः कल्पना भ्रान्तिनिमित्ता एवेत्याह। तथाऽस्तीति॥

ल्पना चैतन्निमित्तैव। तथाऽस्ति नास्ति अस्ति नास्तीत्या-द्याश्च यावन्तो वाङ्मनसयोर्भेदा यत्रैकं भवति तद्विषयाया नित्याया दृष्टेर्निर्विशेषाया अस्ति नास्तीत्येकं नानागुण-

---

यावन्तो वाग्भेदानामविशेषा मनसो भेदा रूपविशेषा यत्रात्मन्येकं भवन्ति सर्वे वेदा यत्रैकं भवन्ति सर्व्वाः प्रजा यत्रैकं भवन्तीत्यादिश्रुते-स्तद्विषयायास्तत्स्वरूपायाः। अत एव नित्यायाः निर्विशेषाया दृष्टे-रस्तीत्यादिकल्पना आस्तिकानाम्। नास्तीति कल्पना शून्यवादिनाम्। अस्ति नास्तीति कल्पना दिगम्बराणाम्। अन्येषाञ्च यथायथं सावयव-त्वादिकल्पना सा सर्व्वापि तथा भ्रान्तिनिमित्तैवेति पूर्व्वेणान्वयः। ननु ते ते तार्किका. आत्मनोऽस्तित्वादीन् तर्केण साधयन्ति। अतो न तेषां भ्रान्तिनिमित्तत्वमित्याशङ्क्य श्रुतिविरुद्धत्वादसङ्गे आत्मन्यनुपपत्तेस्तेषां कल्पनानां सत्त्वे मोक्षानुपपत्तेश्च। तेषां तार्किकाणां कल्पना न प्रमाण-पथमारोहतीत्याह। अस्ति नास्तीति॥ सुषुप्तौ न जानात्यन्यत्र जाना-तीति कादाचित्कज्ञानवत्त्वकल्पना वैषयिकादीनामात्मा परलोकं प्रति-गच्छतीति केषाञ्चित् क्रियावत्त्वकल्पना इहैव स्थित्वा शरीरान्तरं गृह्णातीत्यन्येषां देहात्मवादे क्षणिकविज्ञानवादे वा फलं परलोकस्थायि-नोऽभावात्। अन्येषां फलवद्देहात्मक्षणिकवादिपक्षे एव कर्म तद्वासना-नामाश्रयाभावात् परलोके निर्व्बीजं नित्यात्मवादिनां सबीजं दुःखमसुख-रूपं वैशेषिकादिवादे। यद्वा विज्ञानवादे सोपप्लवचित्तसन्ततिरूपस्य संसारिणो हेयत्वाङ्गीकाराद् दुःखरूपत्वमात्मनः शरीरमध्य एव वर्त्तत इति दिगम्बराणां मते। अन्येषान्तु तद्बहिरप्यस्तीत्यमध्यमं परोऽहमिति मतः परोऽयमहं ततोऽन्य इति प्रत्यक् पराग्भेदादिकल्पना अस्तीत्याद्या-परोऽयमहमन्य इत्यन्ताः कल्पना वाक्प्रत्ययागोचरे वाङ्मनसोर्गोचरे यो विकल्पयितुमिच्छतीत्यन्वयः। आरोढुमित्यत्र खमित्यनुषङ्गतो जले जीनानां खे वयसामित्यन्वयः॥ वाङ्मनसभेदा आत्मनि पर्य्यन्ति। तद-गोचरत्वादित्यत्र क्रमेण श्रुतिद्वयमाह। नेति नेतीति॥ वाङ्मनस-

वदगुणम्। जानाति न जानाति क्रियावदक्रियम्। फल-
वदफलम्। सबीजं निर्बीजम्। सुखं दुःखम्। मध्यमम-
ध्यमम्। शून्यमशून्यम्। परोऽहमन्य इति वा सर्ववाक् प्रत्यया-
गोचरे परे यो विकल्पयितुमिच्छति स नूनं खमपि चर्म-
वद्वेष्टयितुमिच्छति। सोपानमिव च खं पद्भ्यामारोढुमि-
च्छति। जले खे च मीनानां वयसाञ्च पदं दिदृक्षते। नेति
नेति यतो वाचो निवर्त्तन्त इत्यादि श्रुतिभ्यः। कोऽद्धा
वेदेत्यादि मन्त्रवर्णात्। कथं तर्हि तस्य मम आत्मेति वेदनं
ब्रूहि केन प्रकारेण तमहं मम आत्मेति विद्याम्। अत्रा-
ख्यायिकामाचक्षते। कश्चित् किल मनुष्यो मुग्धः कैश्चिदुक्तः
कस्मिंश्चिदपराधे सति धिक् त्वां नासि मनुष्य इति। स
मुग्धतयाऽऽत्मनो मनुष्यत्वं प्रत्यययितुं कञ्चिदुपेत्याह। ब्रवीतु
भवान् कोऽहमस्मीति। स तस्य मुग्धतां ज्ञात्वाऽऽह। क्रमेण

---

गोचरे श्रुत्यन्तरमाह। कोऽद्धेति॥ अद्धा साक्षाद्वेदेति मनो गोचरत्वं क
इह प्रावोचदिति वाग्गोचरत्वञ्च निषेधतीत्यर्थः॥ वाङ्मनसागोच-
रत्वे श्रवणमननयोरसम्भवादात्मनो वेदनं न सम्भवतीति शङ्कते। कथ-
मिति॥ तर्हि शास्त्रात्मवेदनमित्याशङ्क्य श्रुतेरनतिशङ्क्यत्वादात्मवेदन-
निषेधायोगात्तत्त्वोपायं पृच्छामीत्याह। ब्रूहीति॥ केन प्रकारेण मम
आत्मेति विद्यात् तं प्रकारं ब्रूहीत्यन्वयः। नेति नेतीत्यादिश्रुत्युदा-
हरणेनैवेतरनिषेधेनैव तस्य स्वप्रकाशस्य बोध इति वेदनप्रकारस्योक्तत्वात्
प्रकारान्तरस्याभावादनेनैव प्रकारेणाविषयतया वेदितव्य इति मत्वा
सापहासमुत्तरमाह। अत्राख्यायिकामिति॥ मुग्ध इति मूढ इत्यर्थः।
स्थावरादीति॥ न त्वं स्थावरादिरूप इत्युक्तोऽर्थः। नन्वितरनिषेधेन
तद्वेदजातेऽपि त्वमेवम्भूत इत्यनभिधानेऽहमेवम्भूत इति ज्ञानाभावात्-

बोधयिष्यामीति स्थावराद्यात्मभावमपोह्य न त्वममनुष्य इति उक्त्वा उपरराम। मुग्धः स तं प्रत्याह। भवान् मां बोधयितुं प्रवृत्तस्तूष्णीं बभूव किं न बोधयतीति। तादृगेव तद्भावतो वचनं नास्यमनुष्य इति उक्ते मनुष्यत्वमात्मनो न प्रतिपद्यते यः स कथं मनुष्योऽसीत्युक्तेऽपि मनुष्यत्वमात्मनः प्रतिपद्येत। तस्माद्यथाशास्त्रोपदेश एवात्मावबोधविधिर्नान्यः। न ह्यग्नेर्दाह्यं तृणाद्यन्येन केन चिद्दग्धुं शक्यम्। अत एव शास्त्रं आत्मस्वरूपं बोधयितुं प्रवृत्तं सदमनुष्यत्वप्रतिषेधनेनैव नेति नेतीत्युक्त्वोपरराम। तथा

---

तदर्थं विधिमुखेन बोधनं कार्य्यमत आह। नासीति॥ अपरोक्षतया प्रतीयमानवस्तुनि विपर्य्ययेण गृहीते विपर्य्यये निरासमात्रे यत्नः कार्य्यो न तु स्वरूपबोधे तस्य स्वयमेव प्रतीतेः। तथापि चेन्न बोद्धुं न शक्नोति तर्हि मूढत्वादुपदेशानर्ह एव स इत्यर्थः। अतः प्रकृते आत्मनो नित्यापरोक्षस्याहं मनुष्य इत्यादिनारोपात्तद्रूपेण प्रतीतेस्तस्य नेति नेति। यतो वाचो निवर्त्तन्त इतीतरनिषेधे कृते स्वप्रकाशस्य नियमेन प्रतीतिसम्भावादयमेवोपदेशप्रकारो नान्य इत्युपसंहरति। तस्मादिति॥ ननु शास्त्रं विनाप्यन्यतो विधिमुखेनात्मावबोधोऽस्त्वीत्यत आह॥ न ह्यग्नेरिति॥ शास्त्रैकसमधिगम्यत्वादात्मनो न हेत्वन्तरेण बोधः सम्भवतीत्यर्थः। शास्त्रीयोऽप्यवबोधप्रकारोऽयमेव नान्य इतीतरनिषेधमात्रेणोपरमात्सिध्यति इत्याह। अत एवेति॥ इत्यनुशासनमिति पदेनार्थादनुशासनान्तरनिषेधादयमेवमेवेत्याह॥ तथानन्तरमिति॥ तत्त्वमसीत्यत्रापि तत्पदार्थसामानाधिकरण्येन त्वं पदार्थे कर्तृत्वादिनिषेधेनैव तस्य ब्रह्मत्वबोध इत्याह। तत्त्वमसीति॥ तत् केन कं पश्येदिति दर्शनक्रियाकर्मत्वनिषेधादप्यवेद्यतयैवात्मनो ज्ञानमित्याह। यत्र त्वस्येति॥ एवमाद्यपीति वेद्यत्वं निषेधतीति शेषः। तस्मादात्मनः कर्तृत्वादिधर्मवत्तया

पुरुषे ह वा अयमादितो गर्भो भवति।

ऽनन्तरमबाह्यमयमात्मा ब्रह्म सर्व्वानुभूरित्यनुशासनं तत्त्व-
मसि। यत्र त्वस्य सर्व्वमात्मैवाभूत्तत् केन कं पश्येदित्येव-
माद्यपि यावदयमेवं यथोक्तमिममात्मानं न वेत्ति तावदयं
बाह्यानित्यदृष्टिलक्षणमुपाधिमात्मत्वेनोपेत्याविद्ययोपाधि-
धर्म्मानात्मनो मन्यमानो ब्रह्मादिस्तम्बपर्य्यन्तेषु देवतिर्य्यङ्-
निरयस्थानेषु पुनः पुनरावर्त्तमानोऽविद्याकामकर्मवशात्
संसरति। स एवं संसरन्नुपात्तदेहेन्द्रियसङ्घातं त्यजति।
त्यक्त्वाऽन्यमुपादत्ते। पुनः पुनरेवमेव नदीस्रोतोवज्जन्म-
मरणप्रबन्धाविच्छेदेन वर्त्तमानः काभिरवस्थाभिर्व्वर्त्तेत
इत्येतमर्थं दर्शयन्त्याह श्रुतिः। वैराग्यहेतोरयमेवाविद्या-

---

प्रमाणेन मानत्वकल्पनायां तत्कर्म्मवत्त्वप्रतीतेरज्ञानमूलत्वेन भ्रमत्वात् संसा-
रित्वेन प्रतीतस्य वस्तुतो ब्रह्ममात्रत्वादनेनैव न्यायेनेश्वरस्यापि सर्वज्ञत्वा-
देरौपाधिकत्वेन भ्रमत्वाद्भेदे मानाभावात्तस्यापि वस्तुतो ब्रह्ममात्रत्वात्त
त्रय आत्मानः किन्त्वात्मैक एवाखण्डैकरस इत्यभिप्रेत्यैवम्भूतस्य कथं
संसारप्रतीतिरित्याशङ्क्यात्मनः संसारस्याज्ञानत औपाधिकत्वमुत्तरा-
ध्यायस्याप्युपयोगितयाह। यावदयमिति॥ बाह्यानित्यदृष्टिलक्षणमिति
प्रत्यगात्मनो बाह्यामन्तःकरणवृत्तिं वृत्तिमतोरभेदादन्तःकरणमित्यर्थः॥
एवमध्यारोपापवादाभ्यामात्मतत्त्वं निरूप्योक्तात्मतत्त्वज्ञाने वैराग्यं हेतु-
रिति तदर्थं जीवावस्थाः प्रपञ्चयन्नर्थात्तस्य त्रय आवसथा इत्युप-
क्षिप्तं शरीरत्रयञ्च प्रपञ्चयितुं पञ्चमाध्यायमवतारयन् भूमिकां
करोति। स एवमिति॥ यावदयमित्यारभ्य वा उत्तराध्यायस्य भूमिका॥
इदानीमध्यायमवतारयति। स एवमिति॥ इत्येतमर्थमिति जिज्ञा-
सायामवस्थारूपमित्यर्थः। वैराग्यहेतोरिति॥ वैराग्यार्थमित्यर्थः। जीवा-

यदेतद्रेतस्तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भृत-

---

कामकर्म्मवान् यज्ञादिकर्म्म कृत्वा अस्माल्लोकाद्धूमादि-
क्रमेण चन्द्रमसम्प्राप्य क्षीणकर्म्मा वृष्ट्यादिक्रमेणेमं लोकं
प्राप्यान्नभूतः पुरुषाऽग्नौ हुतः। तस्मिन् पुरुषे ह वै अयं
संसारी रसादिक्रमेणादितः प्रथमं रेतोरूपेण गर्भो भव-
तीति तदाह। यदेतत् पुरुषे रेतस्तेन रूपेणेति। तच्चैत-
द्रेतोऽन्नमयस्य पिण्डस्य सर्व्वेभ्य अङ्गेभ्यो रसादिलक्षणेभ्य-
स्तेजः साररूपं शरीरस्य सम्भृतं परिनिष्पन्नं तत् पुरुषस्या-

---

वस्थारूपस्य जन्मत्रयस्यात्यन्त बीभत्सरूपत्वात् तद्विचारे वैराग्यं भवतीति
भावः। पुरुषे ह वा अयमित्यत्रेदं शब्दार्थमाह। अयमित्यादिना॥ यो
मूर्द्धानं विदार्य्य प्रविश्य स्थितः सोऽयमित्युच्यत इत्यर्थः। यज्ञादीति॥
अथ य इमे ग्रामे इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्तीत्यादिना
पञ्चाग्निविद्यायामयमर्थः प्रसिद्ध इत्यर्थः। अन्नभूत इति व्रीह्याद्यन्नसंश्लिष्टः
पुरुषाग्नौ हुतः पुरुषेण भक्षित इत्यर्थः॥ तस्मिन्निति येन पुरुषेण भक्षित-
स्तस्मिन्नित्यर्थः॥ पुरुषे ह वाऽयं संसारी आदितः प्रथमतः स्त्रीगर्भप्रवेशात्
पूर्व्वं गर्भो भवतीति प्रथममन्वयः। पुरुषे स्त्रियामिव गर्भो न दृश्यते इत्या-
शङ्क्य भक्षितस्यान्नस्य रसादिक्रमेण रेतोरूपेण परिणामे सति तत्संश्लिष्टस्यापि
तथैव रेतःसंश्लेषेण रेतोऽभावे सति तेन रूपेण पुरुषस्य शरीरे विद्यमान-
त्वात्स गर्भ इत्याह। रसादीति॥ रसादीत्यादिशब्देन शोणितमां-
सादि गृह्यते। रसादिक्रमेण यदेतत् पुरुषे रेतस्तेन रेतोरूपेण गर्भो
भवति। तदाहेति पश्चादन्वयः कार्य्यः॥ ननु तस्य गर्भत्वप्रसिद्धमित्या-
शङ्क्य स्त्रियैव तस्य पुरुषेण भृतत्वाद्गौण्या वृत्त्या गर्भत्वमिति वक्तुं तदेत-
दित्यादि विभक्तीत्यन्तं वाक्यम्। तद्व्याचष्टे। तच्चैतदिति॥ रसादि-
लक्षणेभ्य इति रसादिधातुसमुदायरूपत्वाच्छरीरस्य तेषां तदवयवत्वं
चरमधातुत्वाच्च शरीरस्य साररूपत्वञ्चेत्यर्थः। आत्मभूतत्वादिति॥

त्मन्येवात्मानं बिभर्त्ति तद्यथा स्त्रियां सिञ्चत्यथै-
तज्जनयति तदस्य प्रथमं जन्म ॥ १ ॥

तत् स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं

---

ऽऽत्मभूतत्वादात्मा । तमात्मानं रेतोरूपेण गर्भीभूत-
मात्मानमात्मन्येव स्वशरीरे एव बिभर्त्ति धारयति । तद्रेतो
यदा यस्मिन् काले भार्य्या ऋतुमती तस्यां योषाऽग्नौ स्त्रियां
सिञ्चति । उपगच्छन्नथ तदेतद्रेत आत्मनो गर्भभूतं जनयति
पिता । तस्य पुरुषस्य स्थानान्निर्गमनं रेतःसेककाले रेतोरू-
पेणास्य संसारिणः प्रथमं जन्म प्रथमावस्थाभिव्यक्तिः ॥ १ ॥

तदेतदुक्तं पुरस्तादसावात्माऽमुमात्मानमित्यादिना ।
तद्रेतो यस्यां स्त्रियां सिक्तं सत् तस्या आत्मभूयमात्माव्यति-

---

आत्माभिमानविषयशरीरभूतत्वादात्मानं गर्भीभूतं बिभर्त्तीति वक्ष्य-
माणानुषङ्गेण वाक्यं पूरणीयम् ॥ उक्तमर्थं श्रुत्यक्षरारूढं करोति ।
आत्मनीति ॥ अत आत्मानमित्यस्य न पुनरुक्तिदोषः । एवं पितृशरीर-
रूपमावसथम् । तत्र रेतोरूपेणावस्थानं योक्ता मातृदेहरूपावसथं तत्र
गर्भरूपेणावस्थानं च दर्शयितुं पितृशरीरान्निर्गमनरूपं जन्म दर्शयति ।
तद्रेत इति ॥ यदेत्युक्तं कालं विशदयति । भार्य्येति ॥ पञ्चाग्निविद्यायां
योषा वाव गौतमाग्निरित्यादिनाऽयमर्थो दर्शित इति वक्तुं योषाग्ना-
वित्युक्तम् । उपगच्छन्निति भार्यां सङ्गच्छन्नित्यर्थः । अस्य रेतोरूपेण
स्थानान्निर्गमनमित्यन्वयः ॥ १ ॥

रेतो भार्य्यायां सिञ्चतीत्यत्र वाक्यान्तरं संवादयति । तदेतदिति ॥
असावात्मा पुरुषोऽमुमात्मानं स्वीयं रेतोरूपमात्मानमस्मै आत्मने
भार्य्यारूपाय सङ्गच्छतीत्यर्थः । ननु स्त्रीशरीरे प्रविष्टं पुरुषस्य रेतः स्त्रिया
उपद्रवकारि स्यात् शरीरस्यान्यथाभावदित्याशङ्क्योक्तं तत् स्त्रिया इत्यादि॥
तदेतद्व्याचष्टे । तद्रेतो यस्यामिति ॥ पिटकाः अवयवरूपपरिणामविशेषाः ।

तथा। तस्मादेनां न हिनस्ति सास्यैतमात्मान-
मत्र गतं भावयति ॥ २ ॥

सा भावयित्री भावयितव्या भवति तं स्त्रीगर्भं

---

रेकतां यथा पितुरेवं गच्छति प्राप्नोति यथा स्वमङ्गं
स्तनादि तथा तद्वदेव। तस्माद्धेतोरेनां मातरं स गर्भो न
हिनस्ति पिटकादिवत्। यस्मात् स्तनादि स्वाङ्गवदात्मभूयं
गतं तस्मान्न हिनस्ति न बाधते इत्यर्थः। सा ऽन्तर्वत्नी एव-
मस्य भर्त्तुरात्मानमन्नात्मन उदरे प्रविष्टं गतं बुध्वा भाव-
यति वर्द्धयति परिपालयति गर्भविरुद्धाशनादिपरिहार-
मनुकूलाशनाद्युपयोगञ्च कुर्वन्ती ॥ २ ॥

सा भावयित्री वर्द्धयित्री भर्त्तुरात्मनो गर्भभूतस्य भाव-
यितव्या रक्षयितव्या च भर्त्रा भवति। न ह्युपकारप्रत्युप-
कारमन्तरेण लोके कस्यचित् केनचित् सम्बन्ध उपपद्यते।

---

तद्वन्न हिनस्तीति व्यतिरेकेण दृष्टान्तः॥ अक्षरार्थमुक्त्वा पिण्डितार्थ
माह। यस्मादिति अत्र प्रसङ्गात् स्त्रियाः सावधानेन गर्भरक्षणं कर्त्तव्य-
मिति विधत्ते। सेति॥ भावयति भावयेदित्यर्थः॥ पालनोपायमाह।
गर्भविरुद्धेति॥ २ ॥

तस्याप्यन्तर्वत्नी रक्षणं विधत्ते। सा भावयित्रीति॥ चशब्दस्य सेत्यत्र
सम्बन्धः। सापीत्यर्थः॥ तस्या भावयितव्यत्वे हेतुमाह। न हीति॥
स्त्रीपुरुषयोः परस्परोपकारकत्वमुक्त्वा तयोः पुत्रसाध्यवक्ष्यमाणपुण्य-
कर्म्मप्रतिनिधिरूपप्रत्युपकारसिद्ध्यर्थं पुत्रं प्रत्युपकारकत्वमाह। तमिति॥
अथ इत्यत्रैवशब्दो जन्मनः पूर्वकालं वदति। द्वितीयो जननकालमधि
शब्दोऽनन्तरकालं वदतीति व्याचष्टे। प्रागुजन्मन इत्यादिना॥ पर्वमेवे-

**बिभर्त्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति। स यत् कुमारं जन्मनोऽग्रेऽधिभावयति**

---

तं गर्भं स्त्री यथोक्तेन गर्भधारणविधानेन बिभर्त्ति धारयति प्राग्जन्मनः। स पिता अग्र एव पूर्वमेव कुमारं जातमात्रं जन्मनोऽध्यूर्द्ध्वं जन्मनो जातं कुमारं जातकर्म्मादिना यद्भावयति तदात्मानमेव भावयति पितुरात्मैव पुत्ररूपेण जायते। तथा ह्युक्तं पतिर्जायां प्रविशतीत्यादि। तत् किमर्थमात्मानं पुत्ररूपेण जनयित्वा भावयति। उच्यते। एषां लोकानां सन्तत्यै अविच्छेदायेत्यर्थः। विच्छिद्येरन् हीमे लोकाः पुत्रोत्पादनादि यदि न कुर्य्युः। ते च पुत्रोत्पादनादिकर्म्माऽविच्छेदेनैव सन्तता हि प्रबन्धरूपेण वर्त्तन्ते यस्मादिमे लोकास्तस्मात्तदविच्छेदाय तत्कर्त्तव्यं न मोक्षायेत्यर्थः। तदस्य संसारिणः पुंसः

---

त्यस्य विवरणमाह। जातमात्रमिति॥ जायमानमित्यर्थः। जातकर्म्मादिनेति॥ जन्मनः प्राक् सीमन्तादिना जननकाले सुखनिष्क्रमणार्थं मन्त्रजलप्रोक्षणादिना ऽनन्तरं जातकर्म्मादिनेत्यर्थः। पित्रा जातकर्म्मादिकं कर्त्तव्यमित्यभिधाय तत् स्तौति। स पितेति॥ प्रविशतीत्यादीति॥ गर्भो भूत्वा स मातरं तस्यां पुनर्नवो भूत्वा दशमे मासि जायत इति मन्त्रशेषः मोक्षप्रकरणे पुत्रोत्पादनस्य विधानात् पुत्रोत्पादनं मोक्षसाधनमित्यभिप्रायेण पृच्छति तत् किमर्थमिति॥ न कर्म्मणा न प्रजयेत्यादिश्रुतेर्म्मोक्षप्रकरणे पुत्रोत्पादनोक्तिर्वैराग्यार्थेत्यभिप्रेत्य प्रकृतश्रुत्योत्तरमाह। उच्यत इति॥ अत्र लोकशब्देन लोक साधनीभूताः पुत्रपौत्रादयो गृह्यन्ते। तेषां सन्तत्या इत्यर्थः। पुत्रोत्पादनेनैवोक्तानां लोकानां सन्ततत्वं प्रसिद्धमिति वक्तुमेवं सन्तता हीति वाक्यं व्याचष्टे। ते चेति॥ स्वेन पुत्रोत्पादने विधितः कृते सति स्वपुत्रोऽपि तथा तत्पुत्रोऽपि तथे-

आत्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म ॥ ३ ॥

सोऽस्यायमात्मा पुण्येभ्यः कर्म्मभ्यः प्रति-

---

कुमाररूपेण मातुरुदराद्यन्निर्गमनं तद्रेतोरूपापेक्षया द्वितीयं जन्म द्वितीयावस्थाभिव्यक्तिः अस्य पितुः ॥ ३ ॥

सोऽयं पुत्रात्मा पुण्येभ्यः शास्त्रोक्तेभ्यः कर्मभ्यः कर्म-निष्पादनार्थं प्रतिधीयते पितुः स्थाने पिता यत् कर्त्तव्यं तत्करणाय प्रतिनिधीयत इत्यर्थः। तथाच सम्प्रति-विद्यायां वाजसनेयके। पित्रानुशिष्टोऽहं ब्रह्माऽहं यज्ञ इत्यादि प्रतिपद्यत इति। अथानन्तरं पुत्रे निवेश्यात्मनो

---

स्यैवं लोकसन्ततिर्भवतीत्यर्थः। पुत्रोत्पादनस्य लोकसन्ततिरेव प्रयोजन-मिति वदन्त्या श्रुत्या तस्य मोक्षसाधनत्वं निरस्तमित्याह। न मोक्षायेत्यर्थ इति॥ एवं प्रसङ्गाद्गर्भधारणादिविधिमुक्त्वा प्रकृतं वैराग्यार्थं द्वितीयं जन्म दर्शयति। तदस्येति॥ एवं पितृशरीरेऽत्यन्ताशुचौ अत्यन्ताशुचि-रेतोरूपेणावस्थानं ततोऽपि निर्गमनं ततो मातुरुदरे मलमूत्राक्रान्ते विष्ठा-क्रमिवदवस्थानं ततो योनिद्वारा निर्गमनश्चेत्याद्यत्यन्तं कष्टमित्युक्त्वा जन्मानन्तरमपि न स्वातन्त्र्यम् किन्तु पितृनियोगात्तत्पारतन्त्र्ये सर्वदा कर्मानुष्ठातव्यमिति वदन् पुत्रेण कर्त्तव्यं पितुरुपकारान्तरं दर्शयति। सोऽस्येति वाक्यं व्याचष्टे। अस्येति॥ पितुर्द्वावात्मानौ देहौ। स्वदेहः पुत्रदेहश्चेति॥ ३ ॥

तत्र पुत्रस्योपयोगमाह। सोऽयमिति॥ पुत्रस्य प्रतिनिधित्वमन्यत्रा-प्युक्तमित्याह। तथेति॥ सम्प्रति. सम्प्रदानं स्वकर्त्तव्यस्य पुत्रस्यार्पणं यत्रोच्यते सा सम्प्रतिविद्येत्यर्थः। यदा तु प्रैष्यन्मन्यतते स्वस्य परलोकगमनं निश्चिनोत्यथ पुत्रमाह। त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति॥ मया ध्येतव्यं

धीयते । अथास्याऽयमितर आत्मा कृतकृत्यो

---

भारमस्य पुत्रस्येतरो यः पित्रात्मा कृतकृत्यः कर्त्तव्या-
हृणत्रयाद्विमुक्तः कृतकर्त्तव्य इत्यर्थः। वयोगतो गतवया
जीर्णः सन् प्रैति म्रियते। स इतोऽस्मात् प्रयन्नेव शरीरं परि-
त्यजन्नेव तृणजलूकावद्देहान्तरमुपाददानः कर्मचितं पुन-
र्जायते। तदस्य मृत्वा प्रतिपत्तव्यं यत्तत्तृतीयं जन्म॥ ननु
संसरतः पितुः सकाशाद्रेतोरूपेण प्रथमं जन्म। तस्यैव कुमा-
ररूपेण मातुर्द्वितीयं जन्मोक्तम्। तस्यैव तृतीये जन्मनि

---

ब्रह्म वेदस्त्वं त्वया ऽध्येतव्यम्। मया कर्त्तव्योऽयं यज्ञस्त्वं त्वया कर्त्तव्यः।
मया सम्पाद्यो लोकस्त्वं त्वया सम्पाद्य इत्येवं पित्रानुशिष्टः सन् पुत्रोऽहं
ब्रह्मोऽहं यज्ञोऽहं लोक इति प्रतिपद्यते। अहं ब्रह्माध्येष्ये यज्ञान्
करिष्ये लोकं सम्पादयिष्यामीति स्वीकरोतीत्युक्तमित्यर्थः। अनेन स्वश-
रीरस्य तृतीयावस्थोक्ता॥ ननु किमर्थं पुत्रं प्रतिनिदधाति स्वयमेव
करोत्वित्याशङ्क्य स्वस्य मरणात् कर्त्तुमशक्तेरित्यभिप्रायेणोक्तं अथास्याऽय-
मिति। तद्याचष्टे। अथेति॥ एवकारार्थं मध्ये विलम्बाभावं दर्शयति।
तृणजलूकेति॥ तृणजलूका तृणस्यान्तं गत्वा तृणान्तरमाक्रम्यात्मानं
देहं पूर्वस्मात् तृणादुपसंहरति पूर्वतृणं मुञ्चति एवमेवायमात्मा देहान्तरं
परिगृह्य पूर्वदेहं मुञ्चतीति मध्ये विलम्बाभावः श्रुत्यन्तरे उक्त इत्यर्थः।
कर्मचितं देहान्तरमुपाददानः पुनर्जायत इत्यन्वयः। यद्यपि देवयान-
पितृयाणमार्गाभ्यां गच्छतां लोकान्तर एव शरीरग्रहणमुक्तं उभ-
यव्यामोहात् तत् सिद्धेरिति सूत्रे। आकाशाच्चन्द्रमसमेष सोमो राजेति
श्रुतेः। ननु पूर्वदेहत्यागकाल एव तथापि स विज्ञानो भवति स विज्ञा-
नमेवान्ववक्रामतीति श्रुतौ वासनामयं भावि शरीरमुत्क्रान्तिकाल एव
गृह्णातीत्युक्तत्वात् तदभिप्रायं तृणजलूकानिदर्शनमिदं द्रष्टव्यम्। तद-
स्येति यन्मृत्वा प्रतिपत्तव्यं तदस्य तृतीयं जन्मेत्यन्वयः। यस्य जन्मद्वय-
मुक्तं तस्यैव तृतीयं जन्म वक्तव्यम्। औचित्यात्: अन्यथाऽस्य पितुः पूर्व-

वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते

---

वक्तव्ये प्रेतस्य पितुर्यज्जन्म तत्तृतीयमिति कथमुच्यते। नैष दोषः। पितापुत्रयोरैकात्म्यस्य विवक्षितत्वात्। सोऽपि पुत्रः स्वपुत्रे भारं निधायेतः प्रयन्नेव पुनर्जायते यथा पिता। तदन्यत्रोक्तमितरत्राप्युक्तमेव भवतीति मन्यते श्रुतिः। पितापुत्रयोरैकात्म्यत्वात्। एवं संसरन्नवस्थात्रितयेण जन्ममरणप्रबन्धारूढः सर्व्वो लोकः संसारसमुद्रे निपतितः कथ-

---

जन्मद्वयस्यानुक्तत्वेनेदमस्य पितुस्तृतीयं जन्मेत्यन्वयापत्तेरिति शङ्कते। नन्विति॥ प्रेतस्येति म्रियमाणस्येत्यर्थः। यत् कुमारं भावयति आत्मानमेव तद्भावयति सोऽस्यायमात्मेति च पितापुत्रयोरभेदस्योक्तत्वात् पुत्रस्योक्तं जन्मद्वयं पितुरेव। तस्यैव च तृतीयत्वविरोध इत्याह। नैष दोष इति॥ यद्वा पितुर्म्मरणानन्तरं पुनर्जन्मन्युक्ते पुत्रस्याप्येवमेव जन्म ज्ञातुं शक्यत इत्यभिप्रायेण पितुरित्युक्तमित्याह। सोऽपि पुत्र इति॥ यथा पितेत्यनन्तरं ततश्च पुत्रस्यैव तृतीयं जन्मोक्तमिति शेषः। एवञ्च तदस्य तृतीयं जन्मेति वाक्ये तच्छब्देन तत्प्रकारकत्वमुच्यते। अस्येति पुत्र उच्यते। अस्य पुत्रस्य तत्प्रकारकं तृतीयं जन्मेति वाक्यार्थ इति भावः। ननु पर्य्यायद्वयोक्तं जन्म यथा पुत्रगतमेवं तृतीयपर्य्यायोक्तमपि साक्षात् पुत्रगतमेवोच्यते किं तयोरैकात्म्यविवक्षयेत्याद्यपरिहारे दोषमाशङ्क्याह। तदन्यत्रोक्तमिति॥ अयं भावः॥ पुत्रस्य पितरं प्रत्युपकारप्रदर्शनार्थं तत्प्रतिनिधित्वे उक्ते पिता स्वयमेव कर्म्म करोतु किं प्रतिनिधिनेत्याशङ्क्य तत्परिहारार्थं पितुर्म्मरणाभिधानं प्रसक्तमिति मरणान्तरं वक्तव्यमिति तृतीयं जन्म लाघवार्थं तस्मिन्नेवोक्तमिति॥ इदन्तु जन्मत्रयं सर्व्वेषां पूर्वेषामप्यस्तीति प्रदर्शयितुञ्च पुत्रे वक्तव्यमपि तृतीयं जन्म पितुर्युक्तमिति पञ्चाध्याये अध्यारोपप्रक-

तदस्य तृतीयं जन्म । तदुक्तमृषिणा ॥ ४ ॥

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वाः शतं मा पुर आयसीररक्षन्नधः

---

श्चिद्यया श्रुत्युक्तमात्मानं विजानाति यस्यां कस्याञ्चिदवस्थायां तदैवमुक्तसर्वसंसारबन्धनः कृतकृत्यो भवतीत्येतद्वस्तु तदृषिणा मन्त्रेणाप्युक्तमित्याह ॥ ४ ॥

गर्भे मातुर्गर्भाशये एव सन् । न्विति वितर्के । अनेकजन्मान्तरभावनापरिपाकवशादेषां देवानां वागग्न्यादीनां जनिमानि जन्मानि विश्वा विश्वानि सर्वाण्यन्ववेदमहमहोऽनुबुद्धवानस्मीत्यर्थः । शतमनेकं बह्व्यो मा मां पुर आयसीरायस्यः लोहमय्य इवाऽभेद्यानि शरीराणीत्यभिप्रायः । अरक्षन् रक्षितवत्यः । संसारपाशनिर्ग-

---

रणोक्तमावसथत्रयं वैराग्यार्थमिह प्रपञ्च्य तस्मिन्नेवाध्याये तस्य संसारस्य निवर्तकत्वेन तदपवादार्थं यत्तत्त्वज्ञानमुक्तं स एवमेवेत्यादिना तत्सफलं प्रपञ्चयितुं तदुक्तमृषिणेत्यादिग्रन्थः ॥ तत्र तच्छब्दार्थमाह । एवमित्यादिना ॥ एतद्वस्त्विति संसारसमुद्रे पतनं ततस्तत्त्वज्ञानाच्च तन्निवृत्तिरित्येतद्वस्त्वित्यर्थः । आहेति ब्राह्मणमिति शेषः ॥ ४ ॥

भावनेति ॥ आत्मानात्मविवेकभावनेत्यर्थः । वागग्न्यादीनामित्युक्तानि जन्मानि शरीरग्रहणरूपाणि तदुपलक्षितः सर्वोऽपि संसारो वागादिकरणतदधिष्ठातृदेवादिसङ्घातस्य लिङ्गशरीरस्यैव न त्वसङ्गस्य पापिनो ममेत्यर्थः । अनेन पदार्थविवेकपूर्वकमात्मज्ञानमुक्तम् । यद्वा सर्वस्मादात्मनः सकाशादेवैषां जन्मानीत्यन्ववेदम् । एतज्जन्महेतुभूतमूलकारणमात्मानं ज्ञातवानस्मीत्यर्थः । यद्यपि गर्भे श्रवणादिज्ञानसामग्री नास्ति तथापि पूर्वजन्मकृतश्रवणादिसामग्रीवशादेव प्रतिबन्धनिवृत्तौ सत्यामपि गर्भे ज्ञानोत्पत्तिः सम्भवतीति भावः ॥ इतः पूर्वका-

श्येनो जवसा निरदीयमिति गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥ ५ ॥

स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्या-

---

मनादधोऽधः पश्यन् श्येन इव जालं भित्त्वा जवसा आत्मज्ञानकृतसामर्थ्येन निरदीयं निर्गतोऽस्मि अहो गर्भ एव शयानो वामदेव ऋषिरेवमुवाचैवैतत् ॥ ५ ॥

स वामदेव ऋषिर्यथोक्तमात्मानमेवं विद्वानस्माच्छरीरभेदाच्छरीरस्याऽविद्यापरिकल्पितस्यायसवदनिर्भेद्यस्य जननमरणाद्यनेकानर्थशताविष्टशरीरप्रबन्धस्य परमात्मज्ञानामृतोपयोगजनितवीर्य्यकृतभेदाच्छरीरोत्पत्तिबीजाविद्यादिनिमित्तोपमर्दहेतोः शरीरविनाशादित्यर्थः । ऊर्ध्वः

---

लोनं बन्धं दर्शयति। शतमिति ॥ अभेद्यानीति ॥ तत्त्वज्ञानमन्तरा तत्प्रवाहाविच्छेदादित्यर्थः । अधोऽध इति अधोलोकेष्वेव निकृष्टलोकेष्वेवाचरन्नित्यर्थः । यद्वा अध इति श्रौतं पदं अथेत्यर्थे व्याचष्टे । अधोऽध इति ॥ अथानन्तरमिदानीमित्यर्थः ॥ मन्त्रद्रष्टुरभिप्रायमाह । अहो इति ॥ इदमाश्चर्य्यं मम संवृत्तमित्यभिप्रायेण मन्त्रद्रष्टृनामनिर्देशपूर्वकं तस्य तात्पर्य्यं वक्तुं गर्भे एवैतदित्यादि ब्राह्मणम् । तद्व्याचष्टे । गर्भ इत्यादिना ॥ एतत्पूर्वब्राह्मणोक्तमर्थजातमेवं मन्त्रोक्तप्रकारेणोवाचेत्यन्वयः ॥ ५ ॥

ज्ञानस्याव्यभिचारितया फलवत्त्वज्ञापनाय वामदेवेन फलं प्राप्तमिति वक्तुं स एवं विद्वानिति वाक्यं व्याचष्टे । स वामदेव इति ॥ शरीरस्य पुनरुत्पत्तिशङ्कां वारयति । शरीरोत्पत्तीति ॥ तत्त्वज्ञानेनाविद्यादिनाशादित्यर्थः । परमार्थभूतः सन्नित्यूर्ध्वशब्दस्योपरितनवाचित्वात् परमार्थवस्तुन एव कदाचिदप्यधोभावरूपनिकृष्टभावाभावेन निरङ्कुशोपरितनभावादूर्ध्वशब्दार्थत्वमित्यर्थः । प्रसिद्धं स्वर्गलोकं वारयति ॥ अमुष्मिन्

मुष्मिन् स्वर्गे लोके सर्व्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥ ६ ॥ इति चतुर्थः खण्डः ॥ इत्यैतरेयारण्यके पञ्चमोऽध्यायः ॥ उपनिषत्सु द्वितीयोऽध्यायः ॥ ॐ तत्सत् ॥

---

परमार्थभूतः सम्बन्धोभावात् संसारादुत्क्रम्य ज्ञानविद्योतिताऽमलसर्व्वात्मभावमापन्नः सन्नमुष्मिन् यथोक्तेऽजरेऽमरेऽमृतेऽभये सर्वज्ञेऽपूर्वेऽनपरेऽनन्तेऽबाह्ये प्रज्ञानामृतैकरसे प्रदीपवन्निर्व्वाणमत्यगमत् स्वर्गे लोके स्वस्मिन्नात्मनि स्वे स्वरूपेऽमृतः समभवदात्मज्ञानेन पूर्वं प्राप्तकामतया जीवन्नेव सर्व्वान् कामानाप्त्वा इत्यर्थः। द्विर्वचनं सफलस्य सोदाहरणस्यात्मज्ञानस्य परिसमाप्तिप्रदर्शनार्थम् ॥ ६ ॥

इति श्रीशङ्करभगवतः कृतौ ऐतरेयोपनिषद्भाष्ये द्वितीयोऽध्यायः ॥ ॐ तत्सत् ॥

---

यथोक्त इति ॥ इन्द्रियागोचरत्वेनामुष्मिन्निति निर्देशः। स्वर्गशब्दस्य निरतिशयसुखसामान्यवाचित्वाद्ब्रह्मानन्दस्यैव तथाविधत्वात्तस्यैव मुख्यस्वर्गत्वम्। वैशेषिकस्य तु स्वर्गत्वमापेक्षिकमित्यर्थः। उक्तस्य स्वर्गस्य ब्रह्मरूपस्य स्वरूपं दर्शयितुमाह। स्वस्मिन्निति ॥ आत्मशब्दस्यान्तःकरणाद्यर्थत्वं वारयति। स्वे स्वरूप इति ॥ अस्मिन् स्वर्गे मर्त्यदेहादिभावं विहाय स्वात्मभावेनैव स्थित इत्याह। अमृत इति ॥ उक्तस्वर्गलोके स्वर्गकामावाप्तिरिति भ्रमं वारयति। पूर्वमिति ॥ जीवन्मुक्तिदशायामाप्तकामतया सर्व्वात्मत्वेनेत्यर्थः। सोदाहरणस्येत्युदाहरणं वामदेव इत्यर्थः ॥ ६ ॥ इति श्रीमदानन्दज्ञानविरचितायामैतरेयोपनिषद्भाष्यटीकायां द्वितीयोऽध्यायः ॥ ॐ तत्सत् ॥

# हरिः ॐ ॥

# कोऽयमात्मेति वयमुपास्महे

ॐ ॥ ब्रह्मविद्यासाधनकृतसर्व्वात्मभावफलावाप्तिं वामदेवाद्याचार्य्यपरम्परया श्रुत्याऽवद्योत्यमानां ब्रह्मवित्परिषद्यत्यन्तप्रसिद्धामुपलभमाना मुमुक्षवो ब्राह्मणा अधुनातना ब्रह्म जिज्ञासवो नित्यात् साधनलक्षणात् संसारादाजीवभावाद्व्याविवृत्सवो विचारयन्तोऽन्योन्यं पृच्छन्ति कथं यं म्वात्मानमयमात्मेति साक्षाद्वयमुपास्महे कः स आत्मेति। यञ्चात्मानमयमात्मेति साक्षादुपासीनो वामदेवोऽमृतः

॥ ओं ॥ पूर्वस्मिन्नध्याये जन्मत्रयनिरूपणेन वैराग्यं निरूपितं ज्ञानोत्पत्त्यर्थम्। न च पदार्थशोधनं विना वैराग्यमात्रेण ज्ञानोत्पत्तिरिति पदार्थशोधनपूर्वकं वाक्यार्थं कथयितुं तृतीयोऽध्याय इत्यभिप्रेत्य पदार्थशोधनेऽधिकारित्वं दर्शयन् वाक्यमवतारयति। ब्रह्मविद्येति॥ वामदेवाद्याचा-र्येति आदिशब्देन तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवदित्यादिना उक्ता देवादयो गृह्यन्ते। अधुनातनेति पूर्वोक्तरीत्या वैराग्योत्पत्त्यर्थः। आजीवभावादिति संसारस्य हेतुभूतादविद्यातत्कार्य्यस्वात्मभावसहिताद्व्यावर्त्तयितुं संसारं परित्यक्तुमिच्छन्त इत्यर्थः॥ विचारप्रकारमेव वाक्यान्वयेन स्पष्टीकर्त्तुं पृच्छन्ति। कथमिति॥ नन्वयमात्मेति विशेषतो निश्चये स क इति प्रश्नानुपपत्तिः। तद्विचारेण वा न किञ्चित् प्रयोजनमित्याशङ्क्यात्मानं विशिनष्टि। यञ्चेति॥ उपास्महे उपासितुं प्रवृत्ता इत्यर्थः। वामदेवोऽयमात्मानमुपास्यामृतोऽभवद्वयमपि तमात्मानमुपासितुं प्रवृत्ताः॥ स क इति प्रश्नार्थ इत्यर्थः। उपासनं नामोपसामीप्यं नैक्यं तेनैव निरुपचरितसामीप्यत्वादैक्येनापरोक्षीकृत्यासनं तद्रूपेणावस्थानं यत्तदुच्यते। यद्वाऽहं सुखीत्यादिव्यवहारेषु तमेव वयमुपास्महे तमेवात्मत्वेन स्वीकृत्य स्थिताः। अनात्मनोऽहमिति

समभवत् तमेव वयमप्युपास्महे को नु खलु स आ-
त्मेति। एवं जिज्ञासापूर्वमन्योन्यं पृच्छतामतिक्रान्तविशेष-
विषयश्रुतिसंस्कारजनिता स्मृतिरजायत। तं प्रपदाभ्यां
प्रापद्यत ब्रह्मेमं पुरुषं स एतमेव सीमानं विदार्य्य तया
द्वारा प्रापद्यत एतमेव पुरुषम्। द्वे ब्रह्मणी इतरेतरप्राति-
कूल्येन प्रतिपन्ने इति। ते चाऽस्य पिण्डस्यात्मभूते। तयोर-

---

प्रतीत्यनुपपत्तेः। स आत्मा क इति विचारार्थः। न चायमात्मेति नि-
श्चये विचारायोगः। तस्यैव कार्य्यकरणसङ्कीर्णत्वेन विचारोपपत्तेरिति।
ननु भूतानां व्याकरणार्थं यः प्रविष्टः स एवात्मेति निर्धारणसम्भवाद्विचा-
रानुपपत्तिरित्याशङ्क्यैवमपि द्वयोः प्रविष्टत्वेन श्रूयमाणत्वान्न निर्धा-
रणमिति वक्तुं द्वयोः प्रविष्टत्वं स्मृतमित्याह। एवं जिज्ञासेति॥ अति-
क्रान्तेति अतिक्रान्तौ पूर्वमुक्तौ यौ विशेषौ देहे प्रविष्टौ प्राणात्मानौ
तद्विषया श्रुतिजन्याऽनुभवजन्यसंस्कारजनिता स्मृतिरित्यर्थः॥ तामेव
स्मृतिं स्वरूपतो दर्शयति। तं प्रपदाभ्यामिति॥ तमिमं पुरुषं पुरुषशरीरं
प्रपदाभ्यां पादाग्राभ्यां ब्रह्मा परब्रह्मरूपः प्राणः प्रविष्ट इत्यर्थः॥ अ-
न्यस्य प्रवेशे श्रुतिमाह। स एतमिति॥ श्रुतिभ्यां लब्धमर्थमाह। एत-
मेवेति॥ अत्रेति श्रुतिभ्यामित्यध्याहृत्य इति श्रुतिभ्यामितरेतरप्राति-
कूल्येनेतरेतराभिमुखतया एतमेव पुरुषशरीरं प्रतिपन्ने प्रविष्टे द्वे
ब्रह्मणी वेदितव्य इति वाक्यमिति स्मृतिरजायतेत्यन्वयः। न त्वेतमेव
पुरुषं ब्रह्म ततममपश्यदिति वाक्यम्। द्वे ब्रह्मणी इत्यनेन द्वे ब्रह्मणी
वेदितव्ये इति वाक्यस्य द्वयोः प्रवेशे मानतयोपन्यस्तमिति भ्रमितव्यम्।
आद्यवाक्ये द्वयोः प्रवेशाप्रतीतेः। द्वितीये च शब्दब्रह्म परब्रह्मणोरभि-
धानेन तयोर्द्वयोः प्रवेशे मानत्वायोगादिति। तथापि तयोर्द्वयोः कथ-
मात्मत्वमशङ्क्यत आह। इतीति॥ तयोरन्यतरेणापि विना शरीरस्थित्य-

येन वा रूपं पश्यति येन वा शब्दं शृणोति येन

---

न्यतर आत्मोपास्यो भवितुमर्हति । योऽत्रोपास्यः कतरो नु स आत्मेति विशेषनिर्धारणार्थं पुनरन्योन्यं पप्रच्छुर्विचारयन्तः । पुनस्तेषां विचारयतां विशेषविचारणास्पदविषया मतिरभूत् । कथं द्वे वस्तुन्यस्मिन् पिण्डे उपलभ्येते अनेकभेदभिन्नेन करणेन । येनोपलभ्यते यश्चैक उपलभ्यते करणान्तरोपलब्धविषयस्मृतिसन्धानात् । तत्र न तावद्येनोपलभ्यते स आत्मा भवितुमर्हति । केन पुनरुपलभ्यत इति । उच्यते । येन वा चक्षुषा रूपं पश्यति येन

---

भावात् तयोरात्मत्वशङ्केत्यर्थः ॥ एवं विचारापेक्षितामात्मद्वयस्फूर्तिमुक्त्वा विचारमाह । तयोरन्यतर इति ॥ आत्मा वा इदमेक एवेत्येकस्यैव ज्ञेयत्वोपक्रमाच्च द्वयोरुपास्यत्वमित्यर्थः ॥ कः स आत्मेति य उपास्य आत्मा स क इत्यन्वयः । प्रपच्छुरिति कतरः स आत्मेति वाक्येनेति शेषः । एवं विचारे क्रियमाणेऽतिपरिशुद्धान्तःकरणत्वात् तेषां प्रपदाभ्यां प्रपन्ने करणत्वेनानात्मत्वनिश्चयो मूर्ध्ना प्रविष्ट उपलब्धृत्वेनात्मत्वनिश्चयश्चाभूदित्याह । पुनरित्यादिना ॥ विशेषेति विचारणास्पदप्राणात्मद्वयविषया एकस्मिन् करणत्वेनापरस्मिन्नुपलब्धृत्वेन प्रकारेण विशेषरूपा मतिरजायतेत्यर्थः ॥ ननु द्वयोः सत्त्वे इयं विशेषमतिः स्यात् तदेव नास्तीति शङ्कते । कथमिति ॥ चक्षुषा पश्यामीत्यादिप्रकारेण द्वयोः प्रतीतेर्नैवमित्याह । द्वे इति ॥ येनोपलभ्यते यश्चोपलभते ते द्वे उपलब्धिकर्तृकरणे वस्तुन्युपलभ्येते इत्यन्वयः ॥ तत्र किं करणमित्यत आह । अनेकेति ॥ चक्षुःश्रोत्राद्यनेकभेदभिन्नेनेत्यर्थः । अनेन यदनेकात्मकचक्षुरादिकरणसङ्घातात्मकं प्राणस्वरूपं तत्संहतत्वात् परार्थमिति परशेषत्वेन करणमित्युक्तम् । उपलब्धुरित्यनेकात्मकत्वाभावाच्च परार्थत्वेन शेषत्वम् ।

वा गन्धानाजिघ्रति येन वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति ॥ १ ॥

वा शृणोति श्रोत्रेण शब्दं येन वा घ्राणभूतेन गन्धानाजिघ्रति येन वाक्करणभूतेन वाचं नामात्मिकां व्याकरोति गौरश्व इत्येवमाद्यां साध्वसाध्विति च। येन वा जिह्वाभूतेन स्वादु चास्वादु च विजानातीति। १ ॥

किन्तु येऽपित्वमेवेति वक्तुमेक इत्युक्तम्। अनेन करणस्य परार्थत्वं परं शेषि णमन्तरानुपपन्नं सत् परं व्यतिरिक्तमुपलब्धारं गमयतीति तस्मिन्नपि तत्प्रमाणमित्युक्तम्। इदानीं करणानामेवोपलब्धृत्वं तद्व्यतिरिक्त- उपलब्धा नास्तीति वदन्तं नास्तिकं प्रति प्रमाणान्तरमाह। करणान्तरेति॥ पूर्वं चक्षुषा रूपं दृष्ट्वा पश्चादुद्धृतचक्षुः स्मृतिरूपमद्राक्षमिति। तथा योऽहमद्राक्षं स एवेदानीं स्पृशामीति प्रतिसन्दधाति। तदुभयव्यतिरिक्तोपलब्धुरभावेन स्यात् अन्यानुभूतेऽन्यस्य स्मृतिसन्धानयोरदर्शनादित्यर्थः एवमनेकात्मकस्य करणत्वमुक्त्वा तत एव तस्यात्मत्वं नास्तीत्याह। तत्र न तावदिति। तयोर्मध्य इत्यर्थः। अर्हतीत्यनन्तरं किन्तु परिशेषादुपलब्धाऽऽत्मा भवितुमर्हतीति वक्ष्यमाणाध्याहारेण वाक्यं पूरणीयम्॥ एवमुपवर्ण्य तमर्थं श्रुत्यक्षराण्युद्दिश्य कर्त्तं पृच्छति। केन पुनरिति॥ अनुव्याहरणं करोति। उच्यत इति। येनेति तृतीयया करणत्वं चक्षुरादेरुक्तमित्यर्थः॥ वाक्करणेति वागुपकरणेत्यर्थः। वाचमिति करणं नोच्यते। तस्य येनेत्यनेनोक्तत्वात्। किन्तु वक्तव्यमुच्यत इत्याह। नामात्मिकामिति॥ साध्विति गौरितीदं नाम साधु गावीति नामासाध्विति व्याकरोति। व्याकरणेन व्यक्तीकरोतीत्यर्थः॥ ननु चक्षुरादीनां करणत्वेऽपि प्रपदाभ्यां प्रविष्टस्य प्राणस्य करणत्वे किमायातमित्याशङ्कते। किं पुनस्तदिति॥ तत्र प्राणस्यैव करणत्वं वक्तुं तावत् हृदयं मनःशब्दवाच्यस्य चक्षुरादिभेदभिन्नत्वमाह। उच्यत इति॥ यदेतद्धृदयमित्यत्र यच्छब्दार्थमाह। यदुक्तमिति॥ रेत इति सारभूतं कार्य्यमित्यर्थः। प्रजानां

## यदेतद्धृदयं मनश्चैतत्

किं पुनस्तदेकमनेकधा भिन्नं करणमित्युच्यते। यदुक्तं पुरस्तात् प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसा सृष्टा आपश्च वरुणश्च। हृदयान्मनो मनसश्चन्द्रमा तदेवैतद्धृदयं मनश्च एकमेतदनेकधा। एतेनान्तःकरणेनैकेन चक्षुर्भूतेन रूपं पश्यति श्रोत्रभूतेन शृणोति घ्राणभूतेन जिघ्रति वाग्भूतेन वदति जिह्वाभूतेन रसयति स्वेनैव विकल्पनारूपेण मनसा विकल्पयति हृदयरूपेणाध्यवस्यति। तस्मात् सर्वकरणविषयव्यापारकमेकमिदं करणं सर्व्वोपलब्ध्यर्थमुपलब्धुः। तथा च कौषीतकीनां प्रज्ञया वाचं समारुह्य वाचा सर्व्वाणि नामान्याप्नोति प्रज्ञया चक्षुः समा-

---

रेतो हृदयमित्यादिषु मनसश्चन्द्रमा इत्यन्तासु श्रुतिषु यदुक्तं हृदयं मनश्चेति तदेवैतत् त्वया पृष्टं करणमित्यर्थः। एतदेवैकमेव सच्चक्षुरादिभेदेनानेकधा भूतमिति आतपे न चक्षुरादिना दर्शनादिक्रियां करोति सङ्घातात्मकः पुरुषः। तच्चक्षुरादिकं प्रजानां रेतो हृदयमित्यादिषु मनसश्चन्द्रमा इत्यन्तासु श्रुतिषु यदुक्तं हृदयं मनश्चेति करणं तदेतदेवैकं सदनेकधा भिन्नश्चेति श्रुतिगतयेनेवेति तृतीयान्तं यदिति प्रथमान्तं यच्छब्दद्वयस्य चान्वयो दर्शितः॥ एकस्यैवानेकात्मत्वं विशदयति॥ एतेनेत्यादिना॥ सर्वकरणेति सर्व्वाणि करणानि विषयाश्च व्यापारो यस्येति विग्रहः॥ करणानां विषयाणाञ्च हृदयशब्दवाच्यबुद्धिव्यापारकत्वे श्रुतिमाह। तथा चेति॥ प्रज्ञया चिदात्मा संयुक्तया बुद्ध्या वाचं करणं समारुह्य बुद्धेर्वागात्मना परिणामे सति तद्बुद्धिद्वारा स्वयमप्यात्मा वागभिमानी भूत्वा अनन्तरं वाचोऽपि बुद्धिव्यापाररूपाया नामात्मना वक्तव्यं शब्दरूपेण परिणामे सति वाचा वाग्द्वारा

तस्य चक्षुषा सर्वाणि रूपाण्याप्नोतीत्यादि। वाजसने-
यके च। मनसा ह्येव पश्यति मनसा शृणोति हृदयेन हि
रूपाणि जानातीत्यादि। तस्माद्धृदयमनोवाच्यस्य सर्वोपल-
ब्धिकरणत्वं प्रसिद्धम्। तदात्मकश्च प्राणो यो वै प्राणः सा प्रज्ञा
या वै प्रज्ञा स प्राण इति ब्राह्मणम्। करणसंहतिरूपश्च प्राण
इत्यवोचाम प्राणसंवादादौ। तस्मात् यत्प्रज्ञां प्रापद्यत
ब्रह्मैतदुपलब्धिकरणत्वेन गुणभूतत्वान्नैतद्वस्तु ब्रह्मोपास्या-
त्मा भवितुमर्हति। परिशेषाद्यस्योपलब्धुरुपलब्ध्यर्थमेतस्य

---

सर्वाणि नामान्याप्नोति। तत् स्फुरणात्मना स्वयमपि वर्त्तत इति
च त्वर्थः। एवं प्रज्ञया चक्षुरित्यादिष्वप्यर्थो द्रष्टव्यः। अत बुद्धेर्वागाद्या-
त्मना परिणामो वागादेश्च नामाद्यात्मना परिणाम उक्त इत्यर्थः।
मनसा ह्येव पश्यतीत्यत्र मनसः साक्षाद्दर्शनादिकरणत्वायोगाच्चक्षुरादि-
भावमापन्नस्य दर्शनादिकरणमिति भावः। एवं हृदयेन हीत्यत्रापि
द्रष्टव्यम् आदिशब्देन हृदये ह्येव रूपाणि प्रथितानि भवन्तीति रूपाणां
हृदयशब्दितबुद्ध्यात्मकत्वमुक्तं सङ्गृह्यम्॥ एवं हृदयस्य सर्वकरणात्मत्व-
मुक्त्वा इदानीं तस्य प्राणात्मत्वमाह। तदात्मकश्चेति॥ एवं हृदयमनोद्वारा
प्राणस्य सर्वकरणात्मकत्वमुक्त्वा साक्षादेव प्राणस्य तदाह। करणसंह
तीति॥ तव वयं स्मः न शक्ष्यामस्त्वदृते जीवितुं इतरे चक्षुरादयः
प्राणा इत्येनमाश्रायन्त इत्यादि प्राणसंवादस्थवचनबलात् करण
संहतिरूपत्वं करणसमूहरूपत्वं प्राणस्यावगम्यत इत्यर्थः। आदि-
शब्देन संवर्गविद्यादिगतं प्राणमेव वागप्येति॥ प्राणं चक्षुरिति प्राणं
श्रोत्रं प्राणं मनः स यदा प्रतिबुध्यते प्राणादधि पुनर्जायत इत्याद्यु-
च्यते॥ करणस्यानात्मत्वमुक्तमुपसंहरति। तस्मादिति॥ ब्रह्मेति ब्रह्म-
त्वेनोपास्यो ज्ञातव्य आत्मेत्यर्थः। तर्हि कस्तथा ज्ञातव्य इत्यत आह।
परिशेषादिति॥ वक्ष्यमाणा इति सङ्ग्रामनित्यादिना वक्ष्यमाणा

# संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं

हृदयमनोरूपस्य करणस्य वृत्तयो वक्ष्यमाणाः स उप-लब्धोपास्य आत्मा नो भवितुमर्हतीति निश्चयं कृतवन्तः। तदन्तःकरणोपाधिस्थस्योपलब्धुः प्रज्ञानरूपस्य ब्रह्मण उपलब्ध्यर्था या अन्तःकरणवृत्तयो बाह्यान्तर्वर्त्तिविषय-विषयास्ता इमा उच्यन्ते। संज्ञानं संज्ञप्तिश्चेतनभावः। आज्ञानमाज्ञप्तिरीश्वरभावः। विज्ञानं कलादिपरिज्ञानम्।

---

इत्यर्थः॥ येन वा पश्यतीत्यादि मनश्चैतदित्यन्तं प्राणस्य करणत्वेनानात्मत्वा-र्थमित्युक्त्वा संज्ञानमित्यादि यश इत्यन्तमन्तःकरणवृत्तिद्वारा तद्व्यतिरिक्त-मुपलब्धारं दर्शयितुमित्याह। तदन्तःकरणेति॥ निर्विशेषस्य कथं वृत्ति-विषयत्वं अन्यथा कथं तदुपलब्ध्यर्थता तासां स्यादत आह। बाह्या-न्तर्वर्त्तिविषयेति॥ तर्हि तासामस्यविषयत्वे ततो बाह्यान्तर्विषयप्रतीतिरेव स्यान्नात्मन इत्यत आह। उपलब्धुरुपलब्ध्यर्था इति॥ निर्विशेषत्वेनावि-षयत्वेन चैतस्य साक्षादिन्द्रतया ज्ञानासम्भवेऽपि संज्ञानाद्यन्तःकरण-वृत्तिसाक्षितया विषयत्वेनैव तस्योपलब्धिः सम्भवतीत्यर्थः। अविषयत्वार्थं प्रज्ञानरूपस्येति विशेषणम्। प्रकृष्टा ज्ञप्तिः प्रज्ञप्तिः स्वप्रकाशचैतन्यं तस्य विषयत्वे स्वप्रकाशत्वव्याहतिरित्यर्थः। ब्रह्मण इति विशेषणं निर्वि-शेषत्वार्थं। सविशेषत्वे हि तस्य परिच्छेदेन ब्रह्मत्वं न स्यादित्यर्थः॥ नन्वसङ्गस्य कथमन्तःकरणवृत्तिसम्बन्धः स्यादत आह। अन्तःकरणोपाधि-स्थस्येति॥ असङ्गस्याप्यन्तःकरणप्रतिबिम्बद्वारा तद्वृत्तिसम्बन्ध इत्यर्थः। चेतनभाव इति यया वृत्त्याचेतन इत्युच्यते जन्तुः सा वृत्तिः सर्वदा सर्वशरीरव्यापिनी संज्ञानमित्यर्थः। कलादिपरिज्ञानं चतुःषष्टि-कलादिजन्यं लौकिकं ज्ञानमित्यर्थः॥ प्रज्ञतेति तात्कालिकप्रतिभेत्यर्थः॥ ययोत्तम्भनं भवति सा धृतिरित्यन्वयः॥ शरीराद्युत्तम्भकस्य वृत्ति-

मेधा दृष्टिर्धृतिर्म्मतिर्म्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति। सर्व्वाण्येवै

---

प्रज्ञानं प्रज्ञप्तिः प्रज्ञता। मेधा ग्रन्थधारणे सामर्थ्यम्। दृष्टिरिन्द्रियद्वारा सर्व्वविषयोपलब्धिः। धृतिर्धारणं अवसन्नानां शरीरेन्द्रियाणां ययोत्तम्भनं भवति। धृत्या शरीरमुद्वहन्तीति हि वदन्ति। मतिर्मननम्। मनीषा तत्र स्वातन्त्र्यम्। जूतिश्चेतसो रुजादिदुःखित्वभावः। स्मृतिः स्मरणम्। सङ्कल्पः शुक्लकृष्णादिभावेन सङ्कल्पनं रूपादीनाम्। क्रतुरध्यवसायः। असुः प्राणनादिजीवनक्रियानिमित्ता वृत्तिः। कामोऽसंनिहितविषयाकाङ्क्षा तृष्णा। वशः

---

विशेषस्य धृतित्वे लौकिकं व्यवहारं मानमाह। धृत्येति॥ तत्र स्वातन्त्र्यम्। मनस ईषा मनीषेति व्युत्पत्तेरित्यर्थः। रुजादिदुःखित्वभाव इति रोगादिजन्यदुःखित्वप्राप्तिरित्यर्थः। सङ्कल्पनमिति सामान्येन प्रतिपन्नानां रूपादीनां शुक्लादिरूपेण सम्यक् कल्पनमित्यर्थः। जीवनक्रियेति जीवनयोनिप्रयत्न इत्यर्थः। स्त्रीव्यतिकरेति स्त्रीसम्पर्केत्यर्थः॥ इतिशब्दस्य प्रदर्शनार्थत्वमाह। इत्येवमाद्या इति॥ एवमाद्या वृत्तयः प्रज्ञानस्य नामधेयानि भवन्तीत्युत्तरेणान्वयः। अत्र प्रज्ञानशब्देन पूर्व्ववत्प्रज्ञता वृत्तिरूपा नोच्यते तस्याः संज्ञानादिनामवत्त्वानुपपत्तेः किन्तु शुद्धचैतन्यमुच्यते इत्याह। प्रज्ञप्तिमात्रस्येति॥ नन्वन्तःकरणवृत्तीनां शब्दरूपत्वाभावात् कथं प्रज्ञाननामधेयत्वमित्याशङ्क्य नामधेयस्य नाम्नि अर्थोपलब्धिहेतुत्वात् संज्ञानादिवृत्तीनामपि प्रज्ञानोपलब्धिहेतुत्वात्तेन गुणेन तन्नामधेयत्वमुपचारादुच्यते न मुख्यवृत्त्येत्याह उपलब्धुरुपलब्ध्यर्थत्वादिति॥ उपलब्धुरुपलब्ध्यर्थत्वं वा कथमित्याशङ्क्य तदुपाधित्वादाह। शुद्धेति॥ यत उपाधिभूता अत उपलब्ध्यर्था। अतो गौण्या वृत्त्या नामधेयानि सम्भवन्तीत्यर्थः। यद्वा श्रुतौ संज्ञानादिशब्दैर्न वृत्तय उच्यन्ते किन्तु संज्-

तानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ २ ॥

स्त्रीव्यतिकराद्यभिलाष इत्येवमाद्या अन्तःकरणवृत्तयः। प्रज्ञप्तिमात्रस्योपलब्धुरुपलब्ध्यर्थत्वात् शुद्धप्रज्ञानरूपस्य ब्रह्मणो नापरूपस्य ब्रह्मण उपाधिभूताः। तदुपाधिजनितगुणनामधेयानि संज्ञानादीनि सर्व्वाण्येवैतानि प्रज्ञप्तिमात्रस्य प्रज्ञानस्य नामधेयानि भवन्ति न स्वतः

---

ज्ञानादिशब्दा एव सञ्ज्ञयाऽभिधीयन्ते गात्रञ्चारयतीत्यत्रैव। तथा च सञ्ज्ञानादिशब्दाः सञ्ज्ञानादिवृत्तिविशिष्टप्रज्ञानस्य नामधेयानि भवन्ति तद्द्वारा गुणस्यैव प्रज्ञानस्य सञ्ज्ञया नामधेयानीत्यर्थः। तदुपाधिजनितेति॥ वृत्त्युपाधिजनितो गुणः प्रवृत्त्युपहितरूपं तन्नामधेयानि सन्ति सर्व्वाण्येवैतानि सञ्ज्ञानादीनि सञ्ज्ञानादिशब्दाः प्रज्ञानस्यैव नामधेयानि भवन्तीत्यन्वयः। प्राणन्नेवेति प्राणनक्रियां कुर्वन् प्राणो नाम भवतीत्यनेन प्राणनवृत्त्युपाधिकमात्मनः प्राणनामवत्त्वमुक्तम्। यद्यपि सञ्ज्ञानादि नाम्नां तत्र नोपाधिकत्वमुक्तं तथापि तुल्यन्यायतया एतेषामप्यौपाधिकत्वमुक्तप्रायमिति भावः। एतदुक्तं भवति सञ्ज्ञानादिशब्दाः प्रकाशात्मकवस्तुवाचिनः। न च साक्षादन्तःकरणवृत्तीनां जडानां प्रकाशात्मकत्वं सम्भवतीति प्रकाशात्मकवस्तुन्यध्यासादेवतासां प्रकाशात्मकत्वमिति कल्पयन्तोऽधिष्ठानभूतमतिरिक्तं प्रकाशं गमयन्तः पर्य्यवसानगत्या प्रकाशात्मनः प्रज्ञानस्यैव नामधेयानीत्यर्थः सञ्ज्ञानादीनामनित्यत्वेन जडानां वृत्तीनां प्रकाशात्मकवस्तुवाचकसञ्ज्ञानादिनामकत्वानुपपत्तेः। तद्व्यतिरिक्तः कश्चित्प्रकाशरूपोऽस्तीत्युक्तम्। तथा सञ्ज्ञानादिशब्दवाच्यत्वोक्त्या। तत्प्रज्ञानं विज्ञानं प्रज्ञानमित्यत्रैव प्राज्ञतारूपवृत्तिर्न भवतीत्युक्तम्। तदनेकत्वेन तत्तद्वृत्तिगतानां तत्तत्तन्नामकत्वेन सर्वनामकत्वानुपपत्तेः। प्रज्ञानस्येत्येकवचनानुपपत्तेश्च। अतो येन वा पश्यतीत्यादिना

एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुरा-

---

साक्षात्। तथा चोक्तं प्राणन्नेव प्राणो नाम भवतीत्यादि ॥ २ ॥

स एष प्रज्ञानरूप आत्मा ब्रह्म। अपरं सर्वशरीरस्थप्राणप्रज्ञात्मान्तःकरणोपाधिष्वनुप्रविष्टो जलभेदगतसूर्यप्रतिबिम्बवद्धिरण्यगर्भः प्राणः प्रज्ञात्मा। एष एवेन्द्र इन्द्रगुणाद्देवराजो वा। एषः प्रजापतिर्यः प्रथमजः शरीरी। यतो मुखादिनिर्भेदद्वारेणाग्न्यादयो लोकपाला जाताः। सप्रजो वा एषः प्रजापतिरेष एव येऽप्येते अग्न्यादयः

---

नामधेयानि भवतीत्यन्तेन सर्वकरणतद्वृत्तिव्यतिरिक्तः स्वप्रकाशात्मकः सर्वसाक्षी सर्वदृश्यनुगत एक आत्मा शोधितः ॥ २ ॥

एवं शोधितस्यात्मनः प्रति शरीरं नानात्वं वारयितुं स एष ब्रह्मेत्यादिवाक्यं तद्व्याचष्टे। स एष इत्यादिना ॥ एष इत्यस्यार्थमाह। प्रज्ञानरूप आत्मेति ॥ प्रज्ञानं ब्रह्मेति मुख्यब्रह्मताया वक्ष्यमाणत्वादि। मूर्धद्वाराऽनुप्रविष्टः समष्टिलिङ्गशरीराभिमानी हिरण्यगर्भः प्राणः ॥ प्रज्ञानात्मादिशब्दैस्तत्र तत्रोक्तमपरं ब्रह्मोच्यत इत्याह। अपरमित्यादिना ॥ सर्वशरीरस्थमनेन समष्टिस्थूलशरीरमुच्यते अन्तःकरणोपाधिषु। अनेनापि समष्टिलिङ्गशरीरमुक्तम्। आद्याभ्यां प्राणप्रज्ञात्मशब्दाभ्यां क्रियाशक्तिज्ञानशक्तिमत्त्वमुक्तम्। द्वितीयाभ्यां तु तत्र तत्र तथा निर्दिष्टत्वमुच्यत इत्यपौनरुक्त्यम्। ननूक्तं प्रज्ञानात्मैवापरं ब्रह्मेत्यत्र किं प्रमाणमित्याशङ्क्य प्रवेशवाक्यं प्रमाणमिति वक्तुमेष इन्द्र इति वाक्यमिति व्याचष्टे। एष इति ॥ गुणादिति इदमदर्शमिति श्रुत्युक्तगुणयोगादित्यर्थः। प्रवेशवाक्ये प्रविष्टस्येन्द्रत्वाभिधानाद्धिरण्यगर्भस्यापीन्द्रत्वोक्तौ प्रविष्टत्वप्रत्यभिज्ञानात् प्रवेष्टुरेव प्रविष्टसर्वरूपत्वादभेदः सिद्ध्यतीति भावः। न तु परमैश्वर्यगुणयोगात् प्रज्ञानात्मा इन्द्रः परमेश्वर इत्यर्थो ग्राह्यः। प्रज्ञानात्मनः परमेश्वराभेदस्य प्रज्ञानं ब्रह्मेत्यनेन वक्ष्यमाणत्वात् परमेश्वरगुणवत्त्वप्रतिपादनस्य च प्रकरणविरोधात्। नच हिरण्यगर्भाद्यात्मत्ववन्मायाविशिष्टपरमेश्वरात्मत्वमनेनोच्यत इति वाच्यम्। तथा सति भाष्योक्तगुणादिति हेतुवचनानन्वयादेष ब्रह्मैष इन्द्र एष

काश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमि-
श्राणीव । बीजानीतराणि चेतराणि चाण्ड-

---

सर्वे देवा एष एव । इमानि च सर्वशरीरोपादान-
भूतानि पञ्च पृथिव्यादीनि महाभूतान्यन्नाद्यत्वलक्षणा-
न्येतानि । किञ्चेमानि च क्षुद्रैरल्पकैर्मिश्राणि सर्पादीनि ।
इवशब्दोऽनर्थकः । बीजानि कारणानि चेतराणि चेतराणि
च द्वैराश्यत्वेन निर्दिश्यमानानि । कानि तानीत्युच्यन्ते ।
अण्डजानि पक्ष्यादीनि । जारुजानि जरायुजानि मनुष्या-
दीनि । स्वेदजानि यूकादीनि । उद्भिज्जानि च वृक्षादीनि ।
अश्वाः गावः मनुष्याः हस्तिनः अन्यच्च यत्किञ्चिदं प्रा-

---

प्रजापतिरिति पूर्वोत्तरपर्य्यायेष्विव गुणयोगाभावेऽप्युपपत्तेरस्य
व्याख्यानस्य क्लिष्टत्वं मनसि निधायार्थान्तरमाह । देवराजो वेति ॥
प्रजापतेर्हिरण्यगर्भाद्भेदमाह । यः प्रथमज इति ॥ स लिङ्गशरीराभि-
मानी अयन्तु स्थूलशरीराभिमानीति भेद इत्यर्थः । तत्र अद्भ्य एव
पुरुषं समुद्धृत्यामूर्छयत् ॥ मुखं निरभिद्यतेत्यादि वाक्यं प्रमाणमाह ।
यत इति ॥ देवग्रहणं मनुष्यादीनामुपलक्षणम् । तथा च सर्वे जीवा-
त्मान एष एवेत्यर्थः ॥ एवमेष ब्रह्मेत्यादि वाक्ये सामानाधिकरण्यं स्व-
कृत्वा सर्वभूतस्यात्मन एकत्वमुक्त्वा सजातीयभेदं निराकृत्य तदुपा-
धीनां भूतभौतिकानामपि बाधायां सामानाधिकरण्यमाश्रित्यात्मव्यति-
रेकेणाभावं तस्य विजातीयभेदनिराकरणार्थमिमानि चेत्यादिवाक्यं
तद्व्याचष्टे । इमानि चेति ॥ एतान्यन्नाद्यत्वेन पूर्व्वमुक्तानीति वक्तुं
विशिनष्टि । अन्नेति ॥ सर्पादीनां न केवलं क्षुद्रमिश्रत्वं किन्तु सर्पा-
न्तरादीन् प्रति जीवत्वञ्चेत्याह । कारणानि चेति ॥ द्वैराश्यत्वेनेति
स्थावरजङ्गमभेदेन निर्द्दिश्यमानानीत्यर्थः । स्वेदजातानि जङ्गमान्यु-
द्भिज्जानि स्थावराणीत्याह । उच्यन्त इति ॥ जङ्गममित्यस्य व्याख्या
चलतीति । स्थावराणामपि वाय्वादिना चलनमस्तीत्याशङ्क्याह । पक्षिणा-
मिति ॥ स्थावरमचलमित्यनन्तरं सर्वन्तदेव एवेति शेषः ॥ तत् सर्वमेव
एवेत्यत्र हेतुं वक्तुं सर्वं तत् प्रज्ञानेत्रमित्यादि प्रतिष्ठेत्यन्तं वाक्यं तद्-
व्याचष्टे । सर्वमित्यादिना ॥ नीयतेऽनेनेत्यनेन प्रज्ञानेन सत्तां नीयते

जानि च जारुजानि च स्वेदजानि चोद्भिज्जानि
चाश्वा गावः पुरुषा हस्तिनो यत् किञ्चेदं प्राणि

---

णिजातम्। किं तत्। जङ्गमं यच्चलति पद्भ्यां गच्छति। यच्च
पतत्रि आकाशेन पतनशीलम्। यच्च स्थावरमचलं सर्वं तद-
शेषतः प्रज्ञानेत्रम्। प्रज्ञप्तिः प्रज्ञा तच्च ब्रह्मैव। नीयते सत्तां
प्राप्यते अनेनेति नेत्रं प्रज्ञा नेत्रं यस्य तदिदं प्रज्ञानेत्रम्।
प्रज्ञाने ब्रह्मण्युत्पत्तिस्थितिलयकालेषु प्रतिष्ठितं प्रज्ञाश्रय-
मित्यर्थः। प्रज्ञानेत्रो लोकः पूर्ववत्। प्रज्ञा चक्षुर्वा सर्वं
एव लोकः। प्रज्ञा प्रतिष्ठा सर्वस्य जगतः। तस्मात् प्रज्ञानं

---

सत्तां प्राप्यते सत्तावत् क्रियत इत्यर्थः। यद्वा स्वस्वव्यापारेषु प्रवर्त्त्यत
इति वा। नन्वेवम्भूतं ब्रह्मैवेत्युपनिषत्सु प्रसिद्धं न तु प्रज्ञानमित्याशङ्क्य
वस्तुतः प्रज्ञानस्यैव तत्त्व। तत्र ब्रह्मशब्देनाभिधानान्न दोष इत्युक्तं प्र-
ज्ञानं ब्रह्मेति। यद्वा कोऽयमात्मेत्यारभ्यैते सर्वे देवा इत्यन्तं त्वं पदार्थ-
बोधनार्थमिमानि चेत्यादि प्रतिष्ठेत्यन्तं तत्पदार्थबोधनार्थम्। तत्र पक्षे
प्रकृष्टं ज्ञानं प्रज्ञानमिति तत्पदार्थो ब्रह्मैवोच्यते। पञ्चभूतादिस्थाव-
रान्तं सर्वं तत् प्रज्ञानेत्रमित्यर्थः। प्रज्ञासत्तयैव सर्व्वस्यापि सत्तावत्त्वं
साधयितुं प्रज्ञाने प्रतिष्ठितमित्युक्तम्। तद्व्याचष्टे। प्रज्ञाने ब्रह्मणीति॥
न केवलं प्रज्ञासत्तयैव सत्त्वं सर्वस्य किन्तु प्रवृत्तिरपि तदधीनेत्याह।
प्रज्ञानेत्र इति॥ पूर्व्ववदिति॥ नीयते प्रवर्त्ततेऽनेनेति व्युत्पत्तेर्नेत्रं
प्रवर्त्तकमित्यर्थः। लोक इति सर्वं जगदित्यर्थः। यद्वा पूर्वं नेत्रशब्देन
सर्वस्य सत्ताव्यापारहेतुत्वमुक्तं इदानीं सर्वस्य स्फुरणहेतुरप्ययमेवोच्यत
इत्याह। प्रज्ञा चक्षुर्वेति॥ चक्षुरिति स्फुरणमित्यर्थः। जगत इव
प्रज्ञानस्यापि स्फुरणप्रतिष्ठयोरन्याधीनत्वमाशङ्क्य तस्य स्वप्रकाशत्वात्
स्वमहिमप्रतिष्ठत्वेनाश्रयान्तराभावाच्च नैवमित्याह। प्रज्ञा प्रतिष्ठेति॥
यद्वा सर्वस्य जगतः सत्तास्फूर्त्त्योः प्रज्ञानाधीनत्वादुत्पत्त्यादिष्वप्यवस्थासु प्रज्ञाने
प्रतिष्ठितत्वेन तदुपादानत्वाच्च वाचारम्भणन्यायेन प्रज्ञानव्यतिरेकेणाभावात्
प्रज्ञानमेव सर्पादेः रज्ज्वादिरिव पर्य्यवसानभूमिरित्याह। प्रज्ञा प्रतिष्ठेति॥
ध्रुवं पर्य्यवसानभूमिः परिशिष्टं वस्त्वित्यर्थः। एवञ्च प्रज्ञानस्य प्रत्यगात्मनो
निर्विशेषत्वादिकं प्रसिद्धमित्याह। तस्मादिति॥ प्रज्ञानस्यैव परिशिष्टत्वेन
परमार्थसत्त्वादित्यर्थः॥ ब्रह्मशब्दार्थमाह। प्रत्यस्तमितेति॥ अस्मिन् पक्षे

**जङ्गमं च पतत्रि च यच्च स्थावरम्। सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥ ३ ॥**

---

ब्रह्म। तदेतत् प्रत्यस्तमितसर्वोपाधिविशेषं सन्निरञ्जनं निर्मलं निष्क्रियं शान्तमेकमद्वयं नेति सर्वविशेषापोहसंवेद्यं सर्वशब्दप्रत्ययागोचरं तदत्यन्तविशुद्धप्रज्ञोपाधिसम्बन्धेन सर्वज्ञमीश्वरसंज्ञं भवति। सर्वसाधारणाव्याकृतजगद्बीजप्रवर्त्तकं नियन्तृत्वादन्तर्यामिसंज्ञं भवति। तदेव जगद्बीजभूतबुद्ध्यात्माभिमानलक्षणं हिरण्यगर्भसंज्ञं भवति। तदेवान्तरण्डोद्भूतप्रथमशरीरोपाधिमद्विराट् प्रजापतिसंज्ञं भवति। तदुद्भूताग्न्याद्युपाधिमद्देवतादिसंज्ञं भ-

---

ब्रह्मशब्देन प्रत्यगात्मनो निर्विशेषत्वादिकमेव सामानाधिकरण्येन समर्थ्यते। ब्रह्मशब्दस्यापि निर्विशेषत्वादिकमेवार्थः। ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते। बृंहतेर्धातोरर्थानुगमादिति शारीरकभाष्ये उक्तत्वात् प्रत्यग्ब्रह्मणोरैक्यमनेन वाक्येनोच्यते। आत्मा वा इदमेक एवाग्र आसीदित्यात्माऽद्वितीयत्वेनैवोपक्रमाद्ब्रह्मपदार्थानुपक्रमाच्च। एवञ्चात्मैव स्वाविद्यया मुच्यत इत्ययं पक्षोऽनेन स्फुटीकृत इति द्रष्टव्यम्। यदा त्विमानि च पञ्चमहाभूतानीत्यारभ्य तत्पदार्थशोधनार्थत्वेन व्याख्यायते तदा पदार्थशोधनान्तरं वाक्यार्थकथनार्थं प्रज्ञानं ब्रह्मेति वाक्यं व्याख्येयम्। अत्र च पक्षे अत्रत्यप्रज्ञानशब्देन प्रज्ञानस्य नामधेयानीत्यत्रत्येन च प्रत्यगात्मोच्यते। अत्र ब्रह्मशब्देन जगत्कारणत्वोपलक्षितचैतन्यमुक्तमिति द्रष्टव्यम्। तस्मादिति चोभयोर्निर्विशेषचिद्रूपत्वाविशेषादित्यर्थः। ननु प्रज्ञानस्य ब्रह्मत्वोपदेशे किं सिध्यतीत्याशङ्क्य तस्य निर्विशेषत्वादिकं सिध्यत इति फलितार्थकथनपरत्वेन व्याख्येयं प्रत्यस्तमितेति। अन्यत् समानम्। उपाधिविशेषमिति उपाधिकृतकर्तृत्वभोक्तृत्वदुःखित्वादिविशेषमित्यर्थः॥ तस्य पुरुषार्थत्वमाह। शान्तमिति॥ परिपूर्णं परमानन्दरूपमित्यर्थः। निर्विशेषत्वे मानमाह। नेति सर्वेति॥ यतो वाचो निवर्त्तन्ते आनन्दं ब्रह्मणो विद्वानिति श्रुतिर्निर्विशेषानन्दत्वे मानमित्यर्थः। नन्वेवम्भूतस्य प्रज्ञानं कथं सर्वज्ञादित्वान्नानाविधभेद इत्याशङ्क्य नानाविधोपाधिसम्बन्धादित्याह। तदत्यन्तेत्यादिना॥ विशुद्धोपाधिसम्बन्धावि-

**स एतेन प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्व्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् इत्योम् ॥ ४ ॥ इति ऐतरेयारण्यके**

---

वति । तथा विशेषशरीरोपाधिष्वपि ब्रह्मादिस्तम्बपर्य्यन्तेषु तत्तन्नामरूपलाभो ब्रह्मणस्तदेवैकं सर्व्वोपाधिभेदभिन्नं सर्वैः प्राणिभिस्तार्किकैश्च सर्वप्रकारेण ज्ञायते विकल्प्यते चानेकधा । एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् । इन्द्रमेकेऽपरे प्राणमपरे ब्रह्म शाश्वतमित्याद्या स्मृतिः ॥ ३ ॥

स वामदेवोऽन्यो वा एवं यथोक्तं ब्रह्म यो वेद प्रज्ञेनात्मना येनैव प्रज्ञेनात्मना पूर्वे विद्वांसोऽमृता अभूवन् तथाऽय-

---

शेषेऽप्यन्तर्यामिहिरण्यगर्भप्रजापतीनां सर्वशब्दमाह । सर्वसाधारणेति ॥ व्याकृतेति सर्वजगत्कारणे समष्टिबुद्धौ वात्मत्वाभिमान एव लक्षणमुपाधिर्यस्य तदित्यर्थः । अन्तरण्डेति अण्डोपाधिकं विराट् तदन्तरुद्भूतप्रथमशरीरोपाधिकं प्रजापतिरित्यर्थः । आदिशब्देन तदुद्भूतेऽपि तस्मादण्डादुद्भूता इमे ऽग्न्यादीनामुपाधयः समष्टिवागादयस्तदुपाधिमत्प्रज्ञानमग्न्यादिदेवतासञ्ज्ञम्भवतीत्यर्थः ॥ आदिशब्देन व्यष्टिवागाद्यभिमानिनो गृह्यन्ते । असुरादयश्च व्यष्टिमनुष्यादिशरीरोपाधिषु मनुष्यादिसञ्ज्ञम्भवतीत्याह । तथेति ॥ अथेत्यनन्तरं तत्सञ्ज्ञं भवतीति शेषः । उपसंहरति । ब्रह्मादीति ॥ सर्वैवमिति शेषः । एवं ब्रह्मादिस्तम्बेति योज्यम् । ननु शास्त्रादिभिर्जीवानामेव नानात्वमुच्यते । अन्यैश्च जीवेश्वरनानात्वं जगत्कारणं चान्यथाप्याहुस्तत्कथमेकस्यैव ब्रह्मणो नानारूपत्वमत आह । तदेव चैकमिति ॥ अस्मिन्नर्थे प्रमाणमाह । एतमेक इति । एवं तावत् कोऽयमात्मेत्यारभ्य प्रज्ञानं ब्रह्मेत्यन्तेन विचारपुरःसरमात्मतत्त्वं निर्धारितम् । आत्मा करणसङ्घातात्मकप्राणव्यतिरिक्तः सञ्ज्ञानादिसर्वान्तःकरणव्यतिरिक्तस्तदनुगतरूपप्रकाशः सर्वशरीरेष्वेकः सर्वप्रपञ्चाधिष्ठानभूतोऽद्वितीयः प्रज्ञानं ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभाव इति ॥ ३ ॥

इदानीमेवम्भूतब्रह्मात्मविदः फलं वक्तुं स एतेनेत्यादि श्रुतिवाक्यम् । तत्रैतच्छब्देनैकवचनान्तेन प्रकृतानामपि कोऽयमात्मेत्येवं विचारयतां बहूनां परामर्शायोग्यत्वादिदानीन्तनस्य विदुषश्च स इति भूत-

षष्ठोऽध्यायः । उपनिषत्सु तृतीयोऽध्यायः समाप्तः ॥ ३ ॥ ॐ तत्सत् हरिः ॐ ॥

---

मपि विद्वानेतेनैव प्रज्ञानेनाऽस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्व्वान् कामानाप्त्वाऽमृतः समभवदित्योमिति ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीशङ्कराचार्य्यभगवत्कृतौ बह्वृचोपनिषद्भाष्ये तृतीयोऽध्यायः सम्पूर्णः ॥ ॐ तत्सत् ॥

---

वाचिनां परामर्शायोग्यत्वात् पूर्व्वाध्यायोक्तो वामदेवः परामृश्यत इत्याह । स वामदेव इति ॥ ब्रह्मविदः फलमित्यत्र वाक्यतात्पर्य्याद्वामदेवादिपुरुषविशेषे तात्पर्य्याभावात् यः कश्चन चाह्य इत्याह । अन्यो वेति ॥ एवमिति कोऽयमात्मेत्युक्तप्रकारेण एतं प्रज्ञानरूपं यथोक्तं ब्रह्म प्रज्ञानेनात्मना वेदेत्यर्थः । एतेनैवेत्येतच्छब्दोक्तप्रकृतत्वं व्यक्तीकरोति । येनैवेति ॥ येनैव प्रज्ञानात्मना ब्रह्म विद्वांसः पूर्वेऽमृता अभूवन् तेनैव प्रज्ञानात्मना यथोक्तं ब्रह्म वेद वामदेवोऽन्यो वा स अमृतोऽभवत् तथाऽयमपीदानीन्तनोऽपि विद्वानेतेनैव प्रज्ञानात्मना अस्माल्लोकादुत्क्रम्यामृतः समभवदित्यन्वयः । अत्रोत्क्रमणं पक्षिणो नीडादिवोर्द्ध्वगमनं न भवति किन्तु देहात्मभावत्यागेन प्रज्ञानात्मभाव एवेत्यभिप्रेत्य प्रज्ञानात्मना उत्क्रम्येत्युक्तम् । प्रज्ञानात्मना विद्वानिति वान्वयः । उक्तमात्मतत्त्वमङ्गीकारवाचिना ओङ्कारेण स्वानुभवप्रकटनेन दृढीकुर्वन् ओङ्कारस्याथशब्दस्य द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्य्यातौ तस्मान्माङ्गलिकावुभाविति स्मृतेरोङ्कारेण ब्रह्मात्मानुसन्धानलक्षणं मङ्गलं कर्त्तुमोमित्युक्तमिति ॥ ४ ॥ इति श्रीमदानन्दज्ञानविरचितायामैतरेयोपनिषद्भाष्यटीकायां तृतीयोऽध्यायः समाप्तः ॥ ३ ॥ ॐ तत् सत् ॐ ॥

। ओं हरिः ओं ।

—⊂oo⊃—

## कृष्णयजुर्व्वेदीयश्वेताश्वतरोपनिषद्भाष्यम् ।

इदं विवरणमल्पग्रन्थं ब्रह्मजिज्ञासूनां सुखावबोधायारभ्यते । ननु चित्सदानन्दाद्वितीयब्रह्मस्वरूपश्चेदात्मा नानन्दाद्वितीयब्रह्मस्वरूपोऽप्यात्मा स्वाश्रयया स्वविषयया विद्यया स्वानुभवगम्यया साभासया स्वाभाविकपुरुषपुमर्थः प्राप्ताशेषानर्थोऽविद्यापरिकल्पितैरेव साधनैरिष्टप्राप्तिमनिष्टप्राप्तिञ्चापुरुषार्थम्मोक्षार्थमलभमानो मकरादिभिरिव रागादिभिरितस्ततः समाकृष्यमाणः सुरनरतिर्य्यगादिप्रभेदभेदितेनेश्वरार्थकर्म्मानुष्ठानेनापगतरागादिमलो नित्यादिदर्शनेनोत्पन्नेहामुत्रार्थभोगविरागो वेत्याचार्य्यद्वारेण वेदान्तश्रवणादिनाऽहं ब्रह्मास्मीति ब्रह्मात्मतत्त्वमवगम्य निवृत्ताज्ञानतत्कार्य्यो वीतशोको वृत्तिलक्षणस्य मोक्षस्य विद्याधीनत्वात् युज्यते च तदर्थोपनिषदारम्भः । तथा तद्विज्ञानादमृतत्वम् । तमेवं विद्वानमृत इह भवति नान्यः पन्थाऽयनाय विद्यते । न चेदिहावेदिम् महती विनष्टिः । य एतद्विदुरमृतास्ते भवन्ति । किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत् । तं विदित्वा न लिप्यते कर्म्मणा पापकेन । तरति शोकमात्मवित् । निचाय्य तं मृत्युमुखात् प्रमुच्यते । एतद्यो वेद निहितं गुहायाम् । सोऽविद्याग्रन्थिं विकिर-

तीह सोम्य। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे।
यथा नद्यः स्यन्दमानाः समुद्रे गच्छन्त्यस्तं नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्॥

यो ह वै तच्छायमशरीरमलोहितं शुभमक्षरं वेदयते पुरुषं वेद यथा मा वो मृत्युः परिद्दधाः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः। विद्ययाऽमृतमश्नुते। सर्व्वाणि रूपाणि विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति। अपहत्य पाप्मानमनन्ते स्वर्गे लोके तत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवति वीतशोकः। य एतद्विदुरमृतास्ते भवन्ति तदीशं ज्ञात्वाऽमृता भवन्ति तदेवोपयन्ति। निचाय्येमां शान्तिमत्यन्तमेति। तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति। ये पूर्व्वं देवा ऋषयश्च तं विदुस्तेषां-
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।

कर्म्मजं बुद्धियुक्ता हि फलं त्यक्ता मनीषिणः॥
जन्मबन्धविनिर्म्मुक्ताः पदं गच्छन्त्यनामयम्।
सर्व्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि॥
ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा।
एतद्बुद्धा बुद्धिमान् स्यात् कृतकृत्यश्च भारत॥
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्।
सर्व्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम्॥
तद्ध्यग्रं सर्व्वविद्यानां प्राप्यते ह्यमृतं ततः।
प्राप्यैतत् कृतकृत्यो हि द्विजो भवति नान्यथा॥
एवं यः सर्व्वभूतेषु पश्यत्यात्मनमात्मना।

स सर्व्वं समतामेत्य ब्रह्माभ्येति सनातनम् ॥
सम्यग्दर्शनसम्पन्नः कर्म्मभिर्न स बध्यते।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥
कर्म्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात् कर्म्म न कुर्व्वन्ति यतयः पारदर्शिनः ॥
ज्ञानं निःश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः ।
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्व्वपातकैः ॥

एवं मृत्युञ्जायमानं विदित्वा
ज्ञानेन विद्वांस्तेज अभ्येति नित्यम् ।
न विद्यते ह्यन्यथा तस्य पन्था-
स्तम्मत्वा कविरास्ते प्रसन्नः ॥

चेतसस्त्वीश्वरज्ञानाद्विशुद्धिः परमा मता ।
अयन्तु परमो धर्म्मो यद्योगेनात्मदर्शनम् ॥
आत्मज्ञः शोकसन्तीर्णो न बिभेति कुतश्चन ।
मृत्योः सकाशान्मरणादथवान्यकृताद्भयात् ॥
न जायते न म्रियते न बध्यो न च घातकः ।
न बध्यो बन्धकारी वा न मुक्तो न च मोचकः ॥
पुरुषः परमात्मा तु यदतोऽन्यदसच्च तत् । एवं श्रुति-स्मृतीतिहासादिषु ज्ञानस्यैव मोक्षसाधनत्वावगमाद्युज्यत एवोपनिषदारम्भः ॥ किञ्च उपनिषत्समाख्ययैव ज्ञान-स्यैव परमपुरुषार्थसाधनत्वमवगम्यते । तथा हि । उप-निषदिति उपनिपूर्व्वस्य सदेर्विशरणगत्यवसादनार्थस्य रूप-माचक्षते । उपनिषच्छब्देन व्याचिख्यासितग्रन्थप्रतिपाद्य-वस्तुविषया विद्योच्यते । तादर्थ्यात् ग्रन्थोऽपि उपनिषत् ।

ये मुमुक्षवो दृष्टानुश्रविके विषयवितृष्णाः सन्त उपनिषच्छ-ब्देन विद्यान्तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारवीजस्य विशरणाद्विनाशात् परब्रह्मगमयितृत्वाद्गर्भ-जन्मजरामरणाद्यप्रवृत्तस्यावसादयितृत्वादुपनिषत्समाख्यया-प्यव्यक्तात् परं श्रेय इति ब्रह्मविद्योपनिषदुच्यते। भवेदेव-मुपनिषदारम्भो यदि विज्ञानस्यैव मोक्षसाधनत्वं भवेत्। न चैतदस्ति। कर्म्मणामपि मोक्षसाधनत्वावगमात्। अपाम सोमममृता अभूम। अक्षय्यं ह वै चातुर्म्मास्ययाजिनः सुकृतं भवतीत्यादिना। न त्वेतदस्ति। श्रुतिविरोधान्न्यायविरो-धाच्च। श्रुतिविरोधस्तावत्। तत् यथेह कर्म्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते तमेवं विद्वान-मृत इह भवति नान्यः पन्था विद्यतेऽयनाय। न कर्म्मणा न प्रजया धनेन त्यागेनैकेन अमृतत्वमानशुः। प्लवा ह्येते अदृढा यज्ञरूपाः। अष्टादशोक्तमवरं येष्टकर्म्म*। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति। नास्त्य-कृतः कृतेन।

कर्म्मणा बध्यते जन्तुर्व्विद्यया च विमुच्यते।
तस्मात् कर्म्म न कुर्व्वन्ति यतयः पारदर्शिनः॥
अज्ञानमलपूर्णत्वात् पुराणो मनिलः स्मृतः।
तत् क्षयाद्धि भवेन्मुक्तिर्नान्यथा कर्म्मकोटिभिः॥
प्रजया कर्म्मणा मुक्तिर्धनेन च सता न हि।
त्यागेनैकेन मुक्तिः स्यात्तदभावे भ्रमन्त्यहो॥

---

* आर्षमेतत्।

कर्म्मोदये कर्म्मफलानुरागास्तथानुयन्ति न तरन्ति मृत्युम् ।
ज्ञानेन विद्वांस्तेज अभ्येति नित्यं न विद्यते ह्यन्यथा तस्य पन्थाः ॥

एवं त्रयीधर्म्ममनुप्रपन्ना यथागतं कामकामा लभन्ते ।
अमार्थमाश्रमाश्चापि वर्णानां परमार्थतः ॥
आश्रमैर्न च वेदैश्च यज्ञैः साङ्ख्यैर्व्रतैस्तथा ।
उग्रैस्तपोभिर्विविधैर्दानैर्नानाविधैरपि ।
न लभन्ते तमात्मानं लभन्ते ज्ञानिनः स्वयम् ॥
त्रयीधर्म्ममधर्म्मार्थं किंपाकफलसन्निभम् ।
नास्ति तात सुखं किञ्चिदत्र दुःखशताकुले ।
तस्मान्मोक्षाय यततां कथं सेव्या मया त्रयी ।
अज्ञानपाशबन्धत्वादमुक्तः पुरुषः स्मृतः ॥
ज्ञानात्तस्य निवृत्तिःस्यात् प्रकाशात्तमसो यथा ।
तस्माज्ज्ञानेन मुक्तिः स्यादज्ञानस्य परिक्षयात् ॥

व्रतानि दानानि तपांसि यज्ञाः सत्यञ्च तीर्थाश्रमकर्म्मयोगाः ।
स्वर्गार्थमेवाशुभमध्रुवञ्च ज्ञानं ध्रुवं शान्तिकरं महार्थम् ॥

यज्ञैर्देवत्वमाप्नोति तपोभिर्ब्रह्मणः पदम् ।
दानेन विविधान् भोगान् ज्ञानेन मोक्षमाप्नुयात् ॥
धर्म्मरज्ज्वा व्रजेदूर्द्ध्वं पापरज्ज्वा व्रजेदधः ।
द्वयं ज्ञानासिना छित्वा विदेहः शान्तिमृच्छति ।
त्यज धर्म्ममधर्म्मञ्च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यज्योऽसि तत् त्यज ॥

एवं श्रुतिस्मृतिविरोधान्न कर्म्मसाधनममृतत्वम् ।
न्यायविरोधात् । कर्म्मसाधनत्वे मोक्षस्य चतुर्विधक्रियान्त-
र्भावादनित्यत्वं स्यात् । यत् कृतकं तदनित्यमिति कर्म्म-

साध्यस्य नित्यत्वादर्शनात्। नित्यश्च मोक्षः सर्व्ववादिभिरभ्युपगम्यते। तथा च श्रुतिः। "चातुर्मास्यप्रकरणे प्रजामनु प्रजायसे तदु ते मर्त्यामृतमिति"। किञ्च। सुकृतमिति सुकृतस्याक्षयत्वमुच्यते। सुकृतशब्दश्च कर्म्मणि। नन्वेवं तर्हि कर्म्मणां देवादिप्राप्तिहेतुत्वेन बन्धहेतुत्वमेव। सत्यं अतो बन्धहेतुत्वमेव। तथा च श्रुतिः। "कर्म्मणा पितृलोकः, सर्व्व एते पुण्य लोका भवन्ति। इष्टापूर्त्तं मन्यमाना वरिष्ठा नान्यच्छ्रेयो वेदयन्ते प्रमूढाः॥ नाकस्य पृष्ठे सुकृतेऽनुभूत्वे मं लोकं हीनतरं वा विशन्ति।

एवं कर्म्मसु निस्नेहा ये केचित् पारदर्शिनः।

विद्यामयोऽयं पुरुषो न तु कर्म्ममयः स्मृतः॥"

एवं त्रयोधर्म्ममनुप्रपन्ना गतागतं कामकामालभन्तइति।

यदा पुनः फलनिरपेक्षमीश्वरार्थं कर्म्मानुतिष्ठन्ति तदा मोक्षसाधनज्ञानसाधनान्तःकरणशुद्धिसाधनपारम्पर्य्येण मोक्षसाधनं भवति॥

तथाह भगवान्।

ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः।

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि।

योगिनः कर्म्म कुर्व्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये॥

यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।

यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्॥

शुभाशुभफलैरेवं मोक्ष्यसे कर्म्मबन्धनैः।

सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसीति॥

तथा च मोक्षक्रमः । शुद्ध्यभावे मोक्षाभावं मार्गभिय
तच्छुद्धिं दर्शयति श्रीविष्णुधर्मे ॥

अनूचानस्ततो यज्वा कर्म्मन्यासं ततः परम् ।
ततो ज्ञानित्वमभ्येति योगी मुक्तिं क्रमाल्लभेत् ॥
अनेकजन्मसंसारचिते पापसमुच्चये ।
नाक्षीणे जायते पुंसां गोविन्दाभिमुखी मतिः ॥
जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥
न त्वकर्म्माशयो ह्यत्र महामुक्तिविरोधकृत् ।
तस्यैव शमने यत्नः कार्य्यः संसारभीरुणा ॥
सुवर्णादिमहादानपुण्यतीर्थावगाहनैः ।
शरीरैश्च महाक्लेशैः शास्त्रोक्तैस्तच्छमो भवेत् ॥
देवतास्तुतिसच्छास्त्रश्रवणैः पुण्यदर्शनैः ।
गुरुशुश्रूषणैश्चैव पापबन्धः प्रशाम्यति ॥

याज्ञवल्क्योऽपि शुद्ध्यपेक्षां तत्साधनञ्च दर्शयति ॥

कर्त्तव्याऽऽशयशुद्धिस्तु भिक्षुकेण विशेषतः ।
ज्ञानोत्पत्तिनिमित्तत्वात् स्वतन्त्रीकरणाय च ॥
मलिनो हि यथाऽऽदर्शो रूपालोकस्य न क्षमः ।
तथा विपक्वकरण आत्मज्ञानस्य न क्षमः ॥
आचार्य्योपासनं वेदशास्त्रार्थस्य विवेकिता ।
तत्कर्म्मणामनुष्ठानं सङ्गः सद्भिर्गिरः शुभाः ॥
स्त्र्यालोकालम्भविगमः सर्व्वभूतात्मदर्शनम् ।
त्यागः परिग्रहाणाञ्च जीर्णकाषायधारणम् ।
विषयेन्द्रियसंरोधस्तन्द्रालस्यविवर्जनम् ।

शरीरपरिसङ्ख्यानं प्रवृत्तिष्वघदर्शनम् ॥
नीरजस्तमसा सत्त्वशुद्धिर्निस्पृहता शमः ।
एतैरुपायैः संशुद्धः सत्वयोग्यमृतो भवेत् ॥
यतो वेदाः पुराणानि विद्योपनिषदस्तथा ।
श्लोकाः सूत्राणि भाष्याणि यच्चान्यद्वाङ्मयं क्वचित् ॥
वेदानुवचनं यज्ञो ब्रह्मचर्य्यं तपो दमः ।
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः ।
तथाचाथर्वणे विशुद्धापेक्षमात्मज्ञानं दर्शयति ।
जन्मान्तरसहस्रेषु यदा क्षीणास्तु किल्बिषाः ।
तदा पश्यति योगेन संसारच्छेदनं महत् ॥

यस्मिन् विशुद्धे विरजे च चित्ते य आत्मवत् पश्यन्ति यतयः क्षीणदोषाः । तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति ॥

बृहदारण्यके विविदिषाहेतुत्वं यज्ञादीनां दर्शयति । ननु । विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह । तपो विद्या च विप्रस्य नैश्रेयसकरं परमित्यादिना कर्म्मणामप्यमृतत्वप्राप्तिहेतुत्वमवगम्यते । सत्यमवगम्यत एव तदपेक्षितशुद्धिद्वारेण न च साक्षात् । तथाहि विद्याञ्चाविद्याञ्च । तपो विद्या च विप्रस्य नैश्रेयसकरं परमित्यादिना ज्ञानकर्म्मणोर्निश्रेयसहेतुत्वमभिप्रायकथनयोस्तद्धेतुत्वमित्याकाङ्क्षायां तपसा कल्मषं हन्ति विद्ययामृतमश्नुते। अविद्यया मृत्युन्तीर्त्वा विद्ययामृतमश्नुत इति वाक्यशेषेण कर्म्मणः कल्मषक्षयहेतुत्वं विद्ययाऽमृतत्वप्राप्तिहेतुत्वं प्रदर्शितम् । यत्र तु शुद्धाद्यवान्तरकार्य्यानुपदेशस्तत्रापि शाखान्तरोपसंहार-

न्यायेनोपसंहारः कर्त्तव्यः। ननु कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समा इति यावज्जीवकर्म्मानुष्ठाननियमे सति कथं विद्याया मोक्षसाधनत्वमुच्यते। कर्म्मण्यधिकृतस्यायं नियमो नानधिकृतस्याऽनियोज्यस्य ब्रह्मवादिनः। तथाच विदुषः कर्म्मानधिकारं दर्शयति श्रुतिः। नैतद्विद्वान्नृषिणा विधेयो न रुध्यते विधिना शब्दचारः। एतद्ध स्म वै तत्पूर्व्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे। एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्य्यं चरन्ति। एतद्धस्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवेति॥ यथाह भगवान्॥

यस्त्वात्मविधिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येवात्मना तुष्टस्तस्य कार्य्यं न विद्यते॥
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
नचास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः॥

तथाचाह भगवान् परमेश्वरो लैङ्गे कालकूटाख्याने॥

तेन नैतेन विप्रस्य त्यक्तसङ्गस्य देहिनः।
कर्त्तव्यं नास्ति विप्रेन्द्रा अस्ति चेत्तत्त्वविन्न च॥
इह लोके परं चैव कर्त्तव्यं नास्ति तस्य वै।
जीवन्मुक्तो यतस्तु स्याद्ब्रह्मवित् परमार्थतः॥
ज्ञानाभ्यासरतो यस्तु सर्व्वतत्त्वार्थवित् स्वयम्।
कर्त्तव्याभावमुत्सृज्य ज्ञानमेवाधिगच्छति॥
वर्णाश्रमाभिमानी यस्त्यक्त्वा ज्ञानं द्विजोत्तमः।

अन्यत्र रमते मूढः सोऽज्ञानी नात्र संशयः ॥
क्रोधो भयं तथा लोभो मोहो भेदेच्छणं तमः ।
धर्माधर्मौ च तेषां हि तद्वशात्तदनुग्रहः ॥
शरीरे सति वै क्लेशः सोऽविद्यां संत्यजेत् ततः ।
अविद्यां विद्यया हित्वा स्थितस्यैवेह योगिनः ॥
क्रोधाद्या नाशमायान्ति धर्माधर्मौ च देहजौ ।
तत्क्षयाच्च शरीरेण न पुनः सम्प्रयुज्यते ॥
स एव मुक्तः संसाराद्दुःखत्रयविवर्जितः ।

तथा शिवधर्मोत्तरे ।

ज्ञानामृतस्य तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किञ्चित् कर्त्तव्यमस्ति चेन्न स तत्त्ववित् ॥
लोकद्वयेन कर्त्तव्यं किञ्चिदस्य न विद्यते ।
इहैव स विमुक्तः स्यात् सम्पूर्णः समदर्शनः ॥

तस्माद्विदुषः कर्त्तव्याभावादविद्यावद्विषय एवायं कुर्व्वन्नेवेत्यादिकर्म्मनियमः । कुर्व्वन्नेवेति च नायं कर्म्मनियमः किन्तु विद्यामाहात्म्यं दर्शयितुं यथा कामं कर्म्मानुष्ठानमेव द्रष्टव्यम् । एतदुक्तं भवति । यावज्जीवं यथा कामं पुण्यपापादिकं कुर्व्वत्यपि विदुषि न कर्म्मलेपो भवति विद्यासामर्थ्यादिति । तथा हि । ईशावास्यमिदꣳ सर्व्वमित्यारभ्य तेन त्यक्तेन भुञ्जीथा इति विदुषः सर्व्वकर्म्मत्यागेनात्मपालनमुक्त्वा नियोज्ये ब्रह्मविदि त्यागकर्त्तव्यतोक्तिरप्युक्तैवोक्तेति मत्वा चकितः सन् वेदो विदुषस्त्यागकर्त्तव्यतामपि नोक्तवान् । कुर्व्वन्नेवेह लोके विद्यमानं पुण्यपापादिकं कर्म्म यावज्जीवं जिजीविषेत् न पुण्यादिबन्धभयात् पुण्य-

दिकं त्यक्त्वा तूष्णीमवतिष्ठेत्। एतावत् कर्म्माणि कुर्व्वत्यपि विदुषि त्वयि यतो यावज्जीवानुष्ठानादन्यथा भावः स्वरूपात् प्रच्युतिः पुण्यादिनिमित्तसंसारान्वयो नास्ति। अथवा इतः कर्म्मानुष्ठानोत्तरकालभाव्यन्यथाभावः संसारान्वयो नास्ति। यस्मात्त्वयि विन्यस्तं न कर्म्म लिप्यते॥ तथाच श्रुत्यन्तरं॥ न लिप्यते कर्म्मणा पापकेन। एवं विदि पापं कर्म्म न श्लिष्यते। नैनं कृताकृते तपतः। एवं ह्यस्य सर्व्वे पाप्मानः प्रदूयन्ते। ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते यथा॥

लैङ्गे॥ ज्ञानिनः सर्व्वकर्म्माणि जीर्य्यन्ते नात्र संशयः।
क्रीडन्नपि न लिप्येत पापैर्नानाविधैरपि॥

शिवधर्म्मोत्तरेऽपि॥

तस्माज्ज्ञानासिना तूर्णमशेषं कर्म्मबन्धनम्।
कामाकामकृतं छित्त्वा शुद्धस्वात्मनि तिष्ठति॥
यथा वह्निर्म्महादीप्तः शुष्कमार्द्रञ्च निर्द्दहेत्।
तथा शुभाशुभं कर्म्म ज्ञानाग्निर्द्दहते क्षणात्॥
पद्मपत्रं यथा तोयैः स्वस्थैरपि न लिप्यते।
शब्दादिविषयाम्भोभिस्तद्वज्ज्ञानी न लिप्यते॥
यस्मान्मन्त्रबलोपेतः क्रीडन् सर्पैर्न्न दृश्यते।
क्रीडन्नपि न लिप्येत तद्वदिन्द्रियपन्नगैः॥
मन्त्रौषधबलैर्यद्वज्जीर्य्यते भक्षितं विषम्।
तद्वत् सर्व्वाणि पापानि जीर्य्यन्ते ज्ञानिनः क्षणात्॥

तथा च सूत्रकारः॥ पुरुषार्थोऽतःशब्दादिति बादरायण इति ज्ञानस्यैव परमपुरुषार्थहेतुत्वमभिधाय शेषत्वात् पुरुषार्थवाद इत्यादिना कर्म्मापेक्षितकर्त्तृप्रतिपादकत्वेन विद्यायाः

कर्म्मशेषत्वमाशङ्क्याधिकोपदेशात्तु बादरायणस्येत्यादिना कर्त्तृत्वादिसंसारधर्म्मरहितापहतपाप्मादिरूपब्रह्मोपदेशात्तद्विज्ञानपूर्व्विकात्तु कर्म्माधिकारसिद्धिं त्वाशासानस्य कर्म्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चाविद्याकृतस्य विद्यासामर्थ्यात् स्वरूपोपदर्शनात् कर्म्माधिकारः। स्थितिप्रसङ्गाद् भिन्नप्रकरणत्वाद्भिन्नकार्य्यत्वाच्च परस्परसमुच्चयोऽङ्गाङ्गीभावो नास्तीति प्रतिपाद्याऽत एवाग्नीन्धनाद्यनपेक्षेति विद्याया एव परमपुरुषार्थहेतुत्वादग्नीन्धनाद्याश्रमकर्म्माणि विद्यायाः स्वार्थसिद्धौ नापेक्षितव्यानीति पूर्व्वोक्तस्याधिकरणस्य फलमुपसंहृत्याऽत्यन्तमेवानपेक्षायां प्राप्तायां सर्व्वापेक्षा च यज्ञश्रुतेरश्ववदिति नात्यन्तमनपेक्षा। उत्पन्ना हि विद्या फलसिद्धिं प्रति न किञ्चिदन्यदपेक्षते। उत्पत्तिं प्रत्यपेक्षत एव। विविदिषन्ति यज्ञेनेति श्रुतेरिति विविदिषा साधनत्वेन कर्म्मणामुपयोगं दर्शितवान्। तथा च न विशेत् स्तुतयेऽनुमतिर्व्वेति सूत्रद्वयेन कुर्व्वन्नेवेति पदद्वयस्याविषयत्वेन विद्यास्तुतित्वेन वार्थद्वयं दर्शितवान्। अत उक्तेन प्रकारेण ज्ञानस्यैव मोक्षसाधनत्वाद्युक्तः परोपनिषदारम्भः। ननु बन्धस्य मिथ्यात्वे सति ज्ञान निवर्त्त्यत्वेन ज्ञानादमृतत्वं स्यात्। नत्वेतदस्ति। प्रतिपन्नत्वाद्बाधाभावात्। युष्मदादिस्वरूपत्वेनात्मनो विलक्षणत्वे सादृश्याद्यभावादध्यासासम्भवाच्च। उच्यते। न तावत् प्रतिपन्नत्वेन सत्यत्वं वक्तुं शक्यते। प्रतिपत्तेः सत्यत्वमिथ्यात्वयोस्समानत्वात्। नापि बाधाभावात्सत्यत्वम्। किञ्चिन्मुखेन कारणमुखेन च बाधसम्भवात्। तथाहि श्रुतिः। प्रप-

स्वस्य मिथ्यात्वं मायाकरणत्वञ्च दर्शयति। नतु द्वितीयमस्ति। एकत्वम्। नास्ति द्वैतम्। कुतो विदिते वेद्यं नास्ति। एकमेवाद्वितीयम्। वाचारम्भणं विकारो नामधेयम्। एकमेव सन्नेह नानास्ति किञ्च न। एकधैवानुद्रष्टव्यम्। मायान्तु प्रकृतिं विद्यात्। माया सृजते विश्वमेतत्। इन्द्रो मायाभिः पुरुरूप ईयत इत्यादिभिर्वाक्यैः। अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया॥

अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम्।

तथा च ब्राह्मे पुराणे॥

धर्म्माधर्म्मौ जन्ममृत्यू सुखदुःखेषु कल्पना॥
वर्णाश्रमस्तथा वासः स्वर्गो नरक एव च।
पुरुषस्य न सन्त्येते परमार्थस्य कुचचित्॥
दृश्यते च जगद्रूपमसत्यं सत्यवन्मृषा।
तोयवन्मृगतृष्णा तु यथा मरुमरीचिका॥
रौप्यवल्लोकसम्भूतं लोकसं शुक्तिरेवच।
सर्पवद्रज्जुखण्डश्च निशायां वेश्ममध्यगः॥
एक एवेन्दुवद्योम्नि तिमिराहतचक्षुषः।
आकाशस्य घटीभावो नीलत्वं स्निग्धता तथा॥
एकश्च सूर्य्यो बहुधा जलाधारेषु दृश्यते।
आभाति परमात्मापि सर्व्वोपाधिषु संस्थितः॥
द्वैतभ्रान्तिरविद्याख्या विकल्पो न च तत्तथा।
परत्रबन्धागारस्था तेषामात्माभिमानिनाम्।
आत्मभावनया भ्रान्त्या देहं भावयतः सदा।

आद्यन्तैरादिमध्यान्तैर्भ्रमभूतैस्त्रिभिः सदा ॥
जाग्रत्स्वप्नसुषुप्तैस्तु छादितं विश्वतैजसम् ।
स्वमायया स्वमात्मानम्मोहयेद्द्वैतरूपया ॥
गुहागतं स्वमात्मानं लभते च स्वयं हरिः ।
व्योम्नि वज्रानलज्वाला कलापो विविधाकृतिः ॥
आभाति विष्णोः सृष्टिश्च स्वभावो द्वैतविस्तरः ।
शान्ते मनसि शान्तश्च घोरे मूढ़े च तादृशः ॥
ईश्वरो दृश्यते नित्यं सर्व्वत्र न तु तत्त्वतः ।
देहमृत्पिण्डहेम्नाश्च गात्रभाजनभेदतः ॥
चराचराणां भूतानां द्वैतता न च सत्यतः ।
सर्व्वगे तु निराधारे द्वैतस्यात्मनि संस्थिता ॥
अविद्याद्विगुणां सृष्टिं करोत्यसमर्थयंश्च तम् ।
सर्पस्य रज्जुता नास्ति नास्ति रज्जौ भुजङ्गता ॥
उत्पत्तिनाशयोर्नास्ति कारणं जगतोऽपि च ।
लोकानां व्यवहारार्थमविद्येयं विनिर्म्मिता ॥
एषा विमोहिनीत्युक्ता द्वैताद्वैतस्वरूपिणी ।
अद्वैतं भावयेद्ब्रह्म सकलं निष्कलं सदा ॥
आत्मज्ञः शोकसन्तीर्णो न बिभेति कुतश्चन ।
मृत्योः सकाशान्मरणादथवान्यकृताद्भयात् ॥
न जायते न म्रियते न बध्यो न च घातकः ।
न बद्धो बन्धकारी वा न मुक्तो न च मोक्षदः ॥
पुरुषः परमात्मा तु यदतोऽन्यदसच्च तत् ।
एवं बुद्ध्वा जगद्रूपं विष्णोर्म्मायामयं मृषा ॥
भोगसङ्गी भवेन्मुक्तस्त्यक्त्वा सर्व्वविकल्पनाम् ।

त्यक्तासर्व्वविकल्पश्च स्वात्मस्थं निश्चलं मनः ॥
कृत्वा शान्तो भवेद्योगी दग्धेन्धन इवानलः ।
एषा चतुर्व्विंशतिभेदभिन्ना परा माया प्रकृतिस्तत्समुत्थौ ।
कामक्रोधौ लोभमहौ भयञ्च विषादशोकौ च विकल्पजालम् ॥
धर्म्माधर्म्मौ सुखदुःखे च सृष्टिविनाशपाकौ नरके गतिश्च ।
वासः स्वर्गे जातयश्चाश्रमाश्च रागद्वेषौ विविधा व्याधयश्च ॥
कौमारतारुण्यजरावियोगसंयोगभोगानशनं व्रतानि ।
इतीदमीदृग्विदयं निधाय तूष्णीमासीनः सुमतिश्च विद्वान् ॥
तथा च श्रीविष्णुधर्म्मे षडध्याय्याम् ॥
अनादिसम्बन्धवति क्षेत्रज्ञेऽयमविद्यया ।
युक्तः पश्यति भेदेन ब्रह्म तच्चात्मनि स्थितम् ॥
पश्य त्वात्मानमन्यच्च यावद्वै परमात्मनः ।
तावत् सम्भ्राम्यते जन्तुर्म्मोहितो निजकर्म्मणा ॥
सङ्क्षीणाशेषकर्म्मा तु परं ब्रह्म प्रपश्यति ।
अभेदेनात्मनः शुद्धं शुद्धत्वादक्षयो भवेत् ॥
अविद्या च क्रियाः सर्व्वा विद्या ज्ञानं प्रचक्षते ।
कर्म्मणा जायते जन्तुर्व्विद्यया च विमुच्यते ॥
अद्वैतं परमार्थो हि द्वैतं तद्भिन्न उच्यते ।
पशुतिर्य्यङ्मनुष्याख्यस्तथैव नृप नारकः ॥
चतुर्व्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः ।
अहमन्योऽपरश्चाऽयममी चात्र तथाऽपरे ॥
अज्ञानमेतदद्वैताख्यमद्वैतं श्रूयतां परम् ।
मम त्वहमिति प्रज्ञा वियुक्तमपि कल्पवत् ॥
अविकार्य्यमनाः खेदमद्वैतमनुभूयते ।

मनोवृत्तिमयं द्वैतमद्वैतं परमार्थतः ॥
मनसो वृत्तयस्तस्माद्धर्म्माधर्म्मनिमित्तजाः ।
निरोद्धव्यास्तन्निरोधे अद्वैतं नोपपद्यते ॥
मनोदृष्टमिदं सर्व्वं यत् किञ्चित् सचराचरम् ।
मनसो ह्यमनीभावे द्वैतभावं तदाप्नुयात् ॥
कर्म्मणो भावना चेयं सा ब्रह्मपरिपन्थिनी ।
कर्म्मभावनया तुल्यं विज्ञानमुपजायते ॥
तादृग्भवति विज्ञप्तिर्यादृशी खलु भावना ।
क्षये तस्याः परम्ब्रह्म स्वयमेव प्रकाशते ॥
परमात्मा मनुष्येन्द्र विभागो ज्ञानकल्पितः ।
क्षये तस्यात्मपरयोरविभागत एव हि ।
आत्मचेतज्ञसञ्ज्ञो हि संयुक्तः प्राकृतैर्गुणैः ।
तैरेव विगतः शुद्धः परमात्मा निगद्यते ॥
तथा च श्रीविष्णुपुराणे ॥
परमात्मत्वमेवैको नान्योऽस्ति जगतः परः ।
तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥
यदेतद्दृश्यते मूर्त्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वरम् ॥
अहं हरिः सर्व्वमिदं जनार्दनो नान्यत् ततः कारणकार्य्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगता भवन्ति ॥

ज्ञानस्वरूपमत्यन्तं निर्म्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥

ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्त्ति र्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदाञ्जानीहि विज्ञानविजृम्भितानि॥

वस्त्वस्ति किं कुत्रचिदादिमध्यपर्य्यन्तहीनं सततैकरूपम् ।
यच्चान्यथा त्वं द्विज याति भूयो न तत्तथा तत्रकुतोहि तत्त्वम् ॥

मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः ।
जनैः स्वकर्म्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥

तस्मिन् न विज्ञानमृतेऽस्ति किञ्चित्
क्वचित् कदाचित् द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्म्मभेद
विभिन्नचित्तै र्ब्बहुधाभ्युपेतम् ॥

ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति॥

सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत् तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥

अविद्यासञ्चितं कर्म्म तच्चाशेषेषु जन्तुषु ।
आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ॥

प्रवृद्ध्यपचयौ न स्त एकस्याखिलजन्तुषु ।
यत् तु कालान्तरेणापि नान्यसञ्ज्ञामुपैति वै ॥

परिणामादिसम्भूतं तद्वस्तु नृप तच्च किम् ।
यदन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ॥

तदेषोऽहमयं चान्यो वक्तुमेवमपीष्यते ।
यदा समस्तदेहेषु पुमानेको व्यवस्थितः ॥

तदा हि को भवान् सोऽहमित्येतद्विप्रलम्भनम् ।
त्वं राजा सविकारोऽयं वयं वाह्याः पुरःसराः ॥
अयञ्च भवतो लोको नस्तदेतत् त्वयोच्यते ।
वस्तुराजेति यल्लोके यच्च राजभटात्मकम् ॥
तथाऽन्ये च नृपत्वञ्च तत्तत्सङ्कल्पनामयम् ।
अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ॥
परमार्थस्तु भूपाल सङ्क्षेपाच्छ्रूयतां मम ।
एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः ॥
जन्मवृद्ध्यादिरहित आत्मा सर्व्वगतोऽव्ययः ।
परज्ञानमयः सद्भिर्नामजात्यादिभिः प्रभुः ॥
न योगवान् न युक्तोऽभून्नैव पार्थिव योच्यति ।
तस्यात्मपरदेहेषु स यो ह्येकमयं हि तत् ॥
विज्ञानपरमार्थोऽसौ द्वैतिनो तथ्यदर्शिनः ।
एवमेकमिदं विद्धन्नभेदि सकलं जगत् ॥
वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ।
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥
सर्वभेदान्यभेदेन स ददर्श तदात्मनः ।
तदा ब्रह्म ततो मुक्तिमवाप परमां द्विज ॥
सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक् ॥
एकः समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥
इतीरितस्तेन स राजवर्य्यस्तत्याज भेदं परमार्थदृष्टिः ।
स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप ॥

तथा लैङ्गे ॥

तस्मादज्ञानमूलो हि संसारः सर्वदेहिनां ।
परतन्त्रे स्वतन्त्रे च भिदाभावाद्विचारतः ॥
एकत्वमपि नास्त्येव द्वैततन्त्रं कुतोऽस्त्यहो ॥
एकं नास्त्यथ मर्त्यस्य कुतो मृतसमुद्भवः ।
नान्तःप्रज्ञो न वहिःप्रज्ञो न चोभयत एव च ॥
न प्रज्ञानघनस्त्वेवं न प्रज्ञोऽप्रज्ञ एव सः ।
विदिते नास्ति वेद्यञ्च निर्व्वाणं परमार्थतः ॥
अज्ञानतिमिरात् सर्व्वं नात्र कार्य्या विचारणा ।
ज्ञानञ्च बन्धनञ्चैव मोक्षो नाप्यात्मनो द्विजाः ॥
न ह्येषा प्रकृतिर्जीवो विकृतिश्च विकारतः ।
त्रिकारो नैव मायैषा सदसद्व्यक्तिवर्जिता ॥

तथाह भगवान् पराशरः ॥

अस्माद्धि जायते विश्वं मैत्रेय प्रविलीयते ।
स मायी मायया बद्धः करोति विविधास्तनूः ॥
न चात्रैवं संसरति न च संसारयेत् परम् ।
न कर्त्ता नैव भोक्ता च न च प्रकृतिपूरुषौ ॥
न माया नैव च प्राणाश्चैतन्यं परमार्थतः ।
तस्मादज्ञानमूलो हि संसारः सर्व्वदेहिनाम् ॥
नित्यः सर्व्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकः स भिद्यते शक्त्या मायया न स्वभावतः ॥
तस्माद्द्वैतमेवाहुर्म्मुनयः परमार्थतः ।
ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः ॥
अर्थस्वरूपमज्ञानाः पश्यन्त्यन्ये कुदृष्टयः ।

कूटस्थो निर्गुणो व्यापी चैतन्यात्मा स्वभावतः ॥
दृश्यते ह्यर्थरूपेण पुरुषैर्भ्रान्तदृष्टिभिः ।
यदा पश्यन्ति चात्मानं केवलं परमार्थतः ॥
मायामात्रमिदं द्वैतं तदा भवति निर्वृतः ।
तस्माद्विज्ञानमेवास्ति न प्रपञ्चो न संसृतिः ॥

एवं स्मृत्यादिना नामादिकारणत्वोपन्यासमुखेन स्वरूपेण च बाधितत्वात् प्रपञ्चस्य मिथ्यात्वमवगम्यते । अस्थूलादिलक्षणस्य ब्रह्मणस्तद्विपरीतस्थूलाकारो मिथ्या भवितुमर्हति । यथैकस्य चन्द्रमसस्तद्विपरीतद्वितीयाकारस्तद्वत् । तथा च सूत्रकारेण । न स्थानतोऽपि परस्योभयलिङ्गं सर्व्वत्र हि स्वरूपत उपाधितश्च विरुद्धरूपद्वयासम्भवान्निर्विशेषमेव ब्रह्मेत्युपपद्यते । नन्वभेदादिति श्रुतिबलात् किमिति सविशेषमपि ब्रह्म नाभ्युपगम्यत इत्याशङ्क्य न प्रत्येकमेतद्वचनादित्युपाधिभेदमेतद्वचनभेदस्य श्रुत्यैव बाधितत्वाद्भेदश्रुतिबलात् सविशेषस्य ग्रहणायोगान्निर्व्विशेषमेवेत्युपपाद्यापि चैनमेक इति भेदनिन्दापूर्व्वकं अभेदमेवैतरेयशाखिनः समामनन्ति । मनसैवेदमाप्तव्यम् । नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । एकधैवानुद्रष्टव्यमिति । भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्व्वं प्रोक्तं त्रिविधं ब्रह्म मेतदिति सर्व्वभोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामभिधीयत इति ॥ पुनरपि निर्व्विशेषपक्षे दृढीकृते किमित्येकस्वरूपस्योभयस्वरूपासम्भवेनाकारमेव ब्रह्माऽवधार्य्यते न पुनर्विपरीतमित्याशङ्क्यारूपवदेव हि तत्प्रधानत्वादिति रूपाद्याकाररहितमेव ब्रह्मावधारयितव्यम् । कस्मात् । तत्प्रधान-

त्वात्। अस्थूलमनण्वह्रस्वमदीर्घमशब्दमस्पर्शमरूपमव्ययम्। आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्येतदनुशासनमिति। एवमादीनि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि इतराणि कारणब्रह्मविषयाणि न तत्प्रधानानि। तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्ति। अतस्तत्परश्रुतिप्रतिपन्नत्वात् निर्विशेषमेव ब्रह्मावगन्तव्यं न पुनः सविशेषमिति निर्विशेषपक्षमुपपाद्य का तर्ह्याकारविषयाणां श्रुतीनां गतिरित्याकाङ्क्षायां प्रकाशवच्चावैयर्थ्यादिति। चन्द्रसूर्य्यादीनां जलाद्युपाधिषु च उपाधिकृतनानात्ववच्च ब्रह्मणोऽप्युपाधिकृतनानात्वरूपस्य विद्यमानत्वात्तदाकारवतो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते। एवमवैयर्थ्ये नानाकारब्रह्मविषयाणां वाक्यानामिति भेदश्रुतीनामौपाधिकब्रह्मविषयत्वेनावैयर्थ्यमुक्त्वा पुनरपि निर्विशेषमेव ब्रह्मेति दृढत्वमाह च तन्मात्रमिति। स यथा सैन्धवघनो न बाह्यः कृत्स्नो रसघन एव। एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति श्रुत्युपन्यासेन विज्ञानव्यतिरिक्तरूपान्तराभावमुपन्यस्य चाथोऽपि स्मर्य्यत इति। अथात आदेशो नेति नेति। अन्यदेव तद्विदितादथोऽविदितादधि। यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह। प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसञ्ज्ञितम्। विश्वस्वरूपवैरूप्यं लक्षणं परमात्मन इत्यादिश्रुतिस्मृत्युपन्यासमुखेन प्रत्यस्तमितमेव ब्रह्मेत्युपपाद्या एव चोपमा सूर्य्यादिवदिति। य एव चेतनमात्र-

रूपो नेति नेत्यात्मको विदिताविदिताभ्यामन्यो वाचामगोचरं प्रत्यस्तमितभेदो विश्वस्वरूपलक्षणरूपः परमात्मा अविद्योपाधिको भेदः। अतएव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्य्यादिरिवेत्युपादीयते मोक्षशास्त्रेषु। आकाशमेकं हि यथा घटादिषु पृथक् पृथक् तथात्मैको ह्यनेकश्च जलधारेष्विवांशुमान्॥

एक एव तु भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥

तथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा॥

इति दृष्टान्तबलेनापि निर्विशेषमेव ब्रह्मेत्युपपाद्याम्बुवदग्रहणादित्यात्मनो मूर्त्तत्वेन सर्व्वगतत्वे जलसूर्य्यादिवत् मूर्त्तसम्भिन्नापदेशस्थितत्वाभावाद्दृष्टान्तदार्ष्टान्तिकयोः सादृश्यं नास्तीत्याशङ्क्य वृद्धिह्रासभाक्त्वमिति। न हि दृष्टान्तदार्ष्टान्तिकयोर्विवक्षितांशमुक्त्वा सर्व्वसारूप्यं केनाचिद्दर्शयितुं शक्यते। सर्व्वसारूप्ये दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात्। वृद्धिह्रासभाक्त्वमत्र विवक्षितम्। जलगतसूर्य्यप्रतिबिम्बं जलवृद्धौ वर्द्धते जलह्रासे च ह्रसति जलचलने चलति जलभेदे भिद्यत इत्येवं जलधर्म्मानुविधायि भवति न तु परमार्थतः सूर्य्यस्य तत्त्वमस्ति। एवं परमार्थतो विकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तरभावात् भजत एवोपाधिमान् वृद्धिह्रासादीनि। विवक्षितांशप्रतिपादनेन दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यमुक्त्वा दर्शितान् प्रति पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष

आविशत्। इन्द्रो मायाभिः पुरुरूप ईयते। मायिनं तु महेश्वरम्। मायी सृजते विश्वमेतत्। एकस्तथा सर्व्व-भूतान्तरात्मा। रूपं रूपं प्रतिरूपो बभूव। एको देवः सर्व्वभूतेषु गूढः। एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत। स एष इह प्रविष्ट आनखाग्रेभ्यः। तत् सृष्ट्वा तदेवानुप्राविशदित्यादिना परस्यैव ब्रह्मण उपाधियोगं दर्शयित्वा निर्विशेषमेव ब्रह्म। भेदस्तु जलसूर्य्यादिवदौपाधिको मायानिबन्धन इत्युपसंहृतवान्। किञ्च। ब्रह्मविदामनुभवोऽपि प्रपञ्चबाधकः। तेषां निष्प्रपञ्चात्मदर्शनस्य विद्यमानत्वात्। तथा तेषामनुभवं दर्शयति। यस्मिन् सर्व्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः। विदिते वेद्यं नास्तीति। एवं निर्व्वाण मनुशासनम्। यत्र वा अन्यदिव स्यात् तत्राऽन्योन्यत् पश्येत्। यत्र त्वस्य सर्व्वमात्मैवाऽभूत्।

तत् केन कं पश्येत्।

यदेतद्दृश्यते मूर्त्तमेतज्ज्ञानात्मनस्तव।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः।
ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत्।
ज्ञानात्मकं प्रपश्यन्ति तद्रूपं परमेश्वरम्॥
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत्।
सर्व्वभूतान्यशेषेण ददर्श स तदात्मनः।
तथा ब्रह्म ततो मुक्तिमवाप परमां द्विज।
मत्तात्मव्यतिरेकेन द्वितीयं यो न पश्यति।
ब्रह्मभूतः स एवेह वेदशास्त्र उदाहृतः॥

## कृष्णयजुर्वेदीयश्वेताश्वतरोपनिषत् ॥

ओं ब्रह्मवादिनो वदन्ति। किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठिताः। अधिष्ठिताः केन सुखेतरेषु वर्त्तामहे ब्रह्मविदो व्यवस्थाम ॥ १ ॥

इत्येव श्रुतिस्मृतियुक्तितोऽनुभवतश्च प्रपञ्चस्य बाधितत्वादत्यन्तविलक्षणानामसदृशरूपाणां मधुरतिक्तश्वेतपीतादीनामपि परस्पराध्यासदर्शनादमूर्त्तेऽप्याकाशे तलमलिनताद्यध्यासदर्शनादात्मानात्मनोरत्यन्तविलक्षणयोर्मूर्त्तामूर्त्तयोरपि तथा सम्भवात् स्थूलोऽहं कृशोऽहमिति देहात्मनोरध्यासानुभवात्।

हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यत।

इत्यादि श्रुतिस्मृतिदर्शनात्। य एनं वेत्ति हन्तारम्। प्रकृतेः क्रियमाणानीति स्मृतिदर्शनाच्चाध्यासस्य प्रहाणायात्मैकत्वविद्याप्रतिपत्तये उपनिषदारभ्यते ॥

ब्रह्मवादिनो वदन्तीत्यादि श्वेताश्वतराणाम् मन्त्रोपनिषत्। तस्या अल्पग्रन्था वृत्तिरारभ्यते। ब्रह्मवादिनः ब्रह्मवदनशीलाः सर्व्वे सम्भूय वदन्ति। किं कारणं ब्रह्म आहोस्वित् कालादि कालस्वभाव इति वक्ष्यमाणम्। अथवा किं कारणं ब्रह्म सिद्धिरूपमुपादानभूतं किमित्यर्थः। अथवा बृहयति बृंहयति तस्मादुच्यते परं ब्रह्मैव श्रुत्यैवं निर्व्वच-

कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः

र्निमित्तोपादानयोरुभयोर्वा प्रश्नः। किं कारणं ब्रह्मेति। किं ब्रह्म कारणं आहोस्वित् कालादि। अथवा अकारणमेव। कारणत्वेऽपि किं निमित्तमुतोपादानम्। अथवोभयम्। तद्वा किं लक्षणमिति। वक्ष्यमाणपरिहारानुरूपेण तस्येत्थात्वा वा प्रश्नेऽपि सङ्गहः कर्त्तव्यः। प्रश्नापेक्षत्वात् परिहारस्य। कुतः स्म जाताः कुतो वयं कार्य्यकारणवन्तो जाताः। न स्वरूपेण जीवानामुत्पत्त्याद्यसम्भवात्। तथा च श्रुतिः। न जायते म्रियते वा विपश्चित् जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति। जरामृत्यू शरीरस्य अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्म्मेति॥ तथा च स्मृतिः। अजः शरीरग्रहणात् स जात इति कीर्त्त्यत इति। किञ्च। जीवात्मकेन केन वा वयं सृष्टाः सन्तो जीवाम इति स्थितिविषयः प्रश्नः॥ क्व च सम्प्रतिष्ठाः प्रलयकाले स्थिताः। अधिष्ठिता नियमिताः केन सुखेतरेषु सुखदुःखेषु वर्त्तामहे। ब्रह्मविदो व्यवस्थां हे ब्रह्मविदः सुखदुःखेषु व्यवस्थां केनाधिष्ठिताः सन्तोऽनुवर्त्तामह इति सृष्टिस्थितिप्रलयनियमहेतुः किमिति प्रश्नसङ्गहः॥ १॥

इदानीं कालादीनि ब्रह्मकारणत्वे प्रतिपक्षभूतानि विचारविषयत्वेन दर्शयति। कालस्वभाव इति॥ योनिशब्दः सम्बध्यते। कालो योनिः कारणं स्यात्। कालो नाम सर्व्वभूतानां विपरिणामहेतुः स्वभावः। स्वभावो नाम पदार्थानां प्रति नियता शक्तिः अग्नेरौष्ण्यमिव। नियतिरविषमपु-

## पुरुष इति चिन्त्या। संयोग एषां न त्वात्म-
## भावादात्माप्यनीशः सुखदुःखहेतोः ॥२॥

पुण्यपापलक्षणं कर्म्म तद्वा कारणम्। यदृच्छा आकस्मिकी प्राप्तिः। भूतानि आकाशादीनि वा। योनिः पुरुषो वा विज्ञानात्मा योनिः। इति इत्थमुक्तप्रकारेण किं योनिरिति चिन्त्या चिन्त्यं निरूपणीयम्। केचिद् योनिशब्दं प्रकृतिं वर्णयन्ति। तस्मिन् पक्षे किं कारणं ब्रह्मेति पूर्व्वोक्तम्। किं कारणं ब्रह्मेति कारणपदमवाप्यनुसन्धेयम्॥ तत्र कालादीनामकारणत्वं दर्शयति। संयोग एषामित्यादिना। अयमर्थः। किं कालादीनि प्रत्येकं कारणं उत तेषां समूहः। न च प्रत्येकं कालादीनां कारणत्वं सम्भवति। दृष्टिविरुद्धत्वात्। देशकालनिमित्तानां संहतानामेव लोके कार्य्यकरत्वदर्शनात्। न चाप्येषां कालादीनां संयोगसमूहः कारणम्। समूहस्य संहतेः परार्थशेषत्वेन शेषिण आत्मनो विद्यमानत्वादस्वातन्त्र्यात् सृष्टिस्थितिप्रलयनियमलक्षणकार्य्यकरणत्वायोगात् आत्मा तर्हि कारणं स्यादेव। एतदत आह। आत्माप्यनीशः सुखदुःखहेतोः। आत्मा जीवोऽप्यनीशः स्वतन्त्रो न कारणम्। अस्वातन्त्र्यादेव चात्मनोऽपि सृष्ट्यादिहेतुत्वं न सम्भवतीत्यर्थः। कथमनीशत्वम्। सुखदुःखहेतोः सुखदुःखहेतुभूतस्य पुण्यापुण्यलक्षणस्य कर्म्मणो विद्यमानत्वात्। कर्म्मपरवशत्वेनास्वातन्त्र्याच्च। त्रैलोक्यसृष्टिस्थितिनियमे सामर्थ्यं न विद्यत एवेत्यर्थः। अथवा सुखदुःखादिहेतुभूतस्याध्यात्मिकादिभेदभिन्नस्य जगतोऽनीशो न कारणम्॥ २॥

ते ध्यानयोगानुगता अपश्यन्

एवं पक्षान्तराणि निराकृत्य प्रमाणान्तरागोचरे वस्तुनि प्रकारान्तरमपश्यन्तो ध्यानयोगानुगमेन परममूलकारणं स्वयमेव प्रतिपेदिरे। ते ध्यानयोगेति ॥ ध्यानं नाम चित्तैकाग्र्यं तदेव योगो युज्यतेऽनेनेति ध्यातव्यस्वीकारोपायस्तमनुगताः समाहिता अपश्यन्। दृष्टवन्तः ॥ देवात्मशक्तिमिति। पूर्व्वोक्तमेव समुदायपरिहाराणां सूनं उत्तरत्र प्रत्येकं प्रपञ्चयिष्यते तत्रायं प्रश्नसङ्क्षेपः। किं ब्रह्म कारणं आहोस्वित् कालादितया। किं कारणं ब्रह्म आहोस्वित् कार्य्यकारणविलक्षणम्। अथवा कारणं वा अकारणञ्च। कारणत्वेऽपि किमुपादानमुत निमित्तम्। अथवोभयकारणं ब्रह्म किंलक्षणं अकारणं वा ब्रह्म किंलक्षणमिति। तत्रायं परिहारः। न कारणं नाप्यकारणं न चोभयं नाप्युभयं न च निमित्तं न चोपादानं न चोभयमेतदुक्तं भवति। अद्वितीयस्य परमात्मनो न स्वतः कारणत्वमुपादानत्वं निमित्तत्वञ्च। यदुपाधिकमस्य कारणत्वादि तदेवं कारणनिमित्तमुपपाद्य तदेव प्रयोजकं निष्कृष्य दर्शयति। देवात्मशक्तिमिति ॥ देवस्य द्योतनादियुक्तस्य मायिनो महेश्वरस्य परमात्मन आत्मभूतामस्वतन्त्रां न साङ्ख्यपरिकल्पितप्रधानादिव पृथग्भूतां स्वतन्त्रां शक्तिं कारणमपश्यन्। दर्शयिष्यति च। मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमिति ॥ तथा ब्राह्मे।

एषा चतुर्व्विंशतिभेदभिन्ना माया पराप्रकृतिस्तत् समुत्था। तथा च। मयाध्यक्षेण प्रकृतिः सूयते सचराचरं। इति स्वगुणैः प्रकृतिकार्य्यभूतैः पृथिव्यादिभिश्च निगूढां संवृताम्।

## देवात्मशक्तिं स्वगुणैर्निगूढाम् ।

कार्य्याकारेण कारणाकारस्याभिभूतत्वात् । कार्य्यापृथक्स्वरूपेणोपलब्धुमयोग्यामित्यर्थः । तथा च प्रकृतिकार्य्यत्वं गुणानां दर्शयति व्यासः ।

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवा इति ॥ कोऽसौ देवो यस्येयं विश्वजननी शक्तिरभ्युपगम्यते इत्यत आह । यः कारणानि निखिलानि तानि पूर्व्वोक्तानि कालात्मयुक्तानि कालात्मभ्यां युक्तानि कालपुरुषसंयुक्तानि स्वभावादीनि कालस्वभाव इति मन्त्रोक्तान्यधितिष्ठति नियमयति एकोऽद्वितीयः। योऽद्वितीयः परमात्मा तस्य शक्तिं कारणमपश्यन्निति वाक्यार्थः । अथवा देवात्मशक्तिं देवतात्मना ईश्वररूपेणाव स्थितां शक्तिम् । तथा च ।

सर्व्वभूतेषु सर्व्वात्मन् या शक्तिरपराभवा ।
गुणाश्रया नमस्तस्यै शाश्वतायै परेश्वर ॥
याऽतीताऽगोचरा वाचां मनसां चाविशेषणा ।
ज्ञानध्यानपरिच्छेद्या तां वन्दे देवतां परामिति ॥

प्रपञ्चयिष्यति स्वभावादिनामकारणत्वमज्ञानस्यैव कारणत्वं स्वभावमेके कवयो वदन्तीत्यादि । मायी सृजते विश्वमेतत् । एको रुद्रो न द्वितीयोऽवतस्थे । एको वशी बहुधा शक्तियोगादित्यादि । स्वगुणैरीश्वरगुणैः सर्व्वज्ञत्वादिभिर्वा सतत्त्वादिभिर्निगूढां कार्य्यकारणविनिर्म्मुक्तपूर्णानन्दाद्वितीयब्रह्मात्मनैवानुपलभ्यमानां ॥ कोऽसौ देवः । यः कारणानीत्यादि पूर्व्ववत् । अथवा देवस्य परमेश्वरस्यात्म-

यः कारणानि निखिलानि तानि

भूतां तु जगदुदयस्थितिलयहेतुभूतां ब्रह्मविष्णुशिवात्मिकां शक्तिमिति॥ तथाचोक्तम्।

शक्तयो यस्य देवस्य ब्रह्मविष्णुशिवात्मिका इति।

ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तय इति च।

स्वगुणैः सत्त्वरजस्तमोभिः। सत्त्वेन विष्णू रजसा ब्रह्मा तमसा महेश्वरः सत्त्वाद्युपाधिसम्बन्धस्वरूपेण निरुपाधिकपूर्णानन्दाद्वितीयब्रह्मात्मैवानुपलभ्यमानाः परस्यैव ब्रह्मणः सृष्ट्यादिकार्य्यं कुर्व्वन्तोऽवस्थाभेदमाश्रित्य। शक्तिभेदव्यवहारा न पुनस्तत्त्वभेदमाश्रित्य तथा चोक्तम्।

सर्गस्थित्यन्तकारिणीं ब्रह्मविष्णुशिवात्मिकाम्।

स सञ्ज्ञां याति भगवानेक एव जनार्द्दनः॥

इति प्रथममीश्वरात्मना मायिरूपेणावतिष्ठते ब्रह्म। स पुनर्म्मूर्त्तिरूपेण त्रिधा व्यवतिष्ठते। तेन च रूपेण सृष्टिस्थितिनियमादिकार्य्यं करोति। तथा च श्रुतिः परस्य शक्तिद्वारेण नियमनादिकार्य्यं दर्शयति। लोकानीशत ईशनीभिः प्रत्यङ्जनास्तिष्ठति सञ्चुकोप अन्तकाले संसृज्य विश्वा भूतानि गोपायति। ईशत ईशनीभिर्जननीभिः परमशक्तिभिरिति विशेषणात्॥

ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः।

विष्णुशक्तिः स्मृता प्रोक्तैः स्मृतैः परमशक्तिभिः॥

इति परदेवतानां ग्रहणम्। अथवा देवात्मशक्तिमिति देवस्य आत्मा च शक्तिश्च यस्य परस्य ब्रह्मणोऽवस्थाभेदास्तां प्रकृतिपुरुषेश्वराणां स्वरूपभूतां ब्रह्मरूपेणावस्थितां परात्

कालात्मयुक्तान्यधितिष्ठत्येकः ॥ ३ ॥

परतरां शक्तिं कारणमपश्यन्निति । तथाच तयासां स्वरूपभूतं प्रदर्शयिष्यति । भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् । त्रयं यदा विन्दते ब्रह्ममेतदिति । स्वगुणैर्ब्रह्मपरतन्त्रैः प्रकृत्यादिविशेषणैरुपाधिभिर्निगूढाम् । तथा च दर्शयिष्यति । एको देवः सर्व्वभूतेषु गूढ इति । तं दुर्दर्शं गूढमनुप्रविष्टमिति श्रुतेः । यो वेद निहितं गुहायाम् । इहैव सन्तं न विजानन्ति देवा इति श्रुत्यन्तरम् । यः कारणानीति पूर्व्ववत् । अथ वा देवात्मनो द्योतनात्मनः प्रकाशस्वरूपस्य ज्योतीषां ज्योतिरूपस्य प्रज्ञानघनस्वरूपस्य परमात्मनो जगदुदयस्थितिलयनियमनविषयां शक्तिं सामर्थ्यमपश्यन्निति स्वगुणैः स्वव्यष्टिभूतैः सर्व्वज्ञसर्व्वेशित्वादिभिर्निगूढां तत्तद्विशेषरूपेणावस्थितत्वात् स्वरूपेण शक्तिमात्रेणानुपलभ्यमानाम् । तथा च मानान्तरवेद्यां शक्तिं दर्शयिष्यति ।

न तस्य कार्य्यं करणञ्च विद्यते
न तत् समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्व्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रियापि चेति ॥

समानमन्यत् कारणं देवात्मशक्तिमिति प्रश्ने परिहारे च ये ये पक्षभेदाः प्रदर्शितास्ते सर्व्वे सङ्गृहीताः । उत्तरत्र सर्व्वेषां प्रपञ्चनादप्रस्तुतस्य प्रपञ्चनायोगात् प्रश्नोत्तरदर्शनाच्च । समासव्यासधारणस्य च विदुषामिष्टत्वात् । तथाचोक्तम् ।

इष्टं हि विदुषां लोके समासव्यासधारणमिति। तथा च श्रुत्यन्तरे सकृच्छ्रुतस्य गोपामिति पदस्य व्याख्याभेदः श्रुत्यैव प्रदर्शितः। अपश्यं गोपामित्याह। प्राणा वै गोपा इति। अपश्यन् गोपामित्याह असौ वा आदित्यो गोपा इति। अथ कस्मादुच्यते ब्रह्मेत्यारभ्य बृहयन्त्ति यद्ब्रह्मेति तस्मादुच्यते परंब्रह्मेति। सकृच्छ्रुतस्य ब्रह्मपदस्य निमित्तोपादानरूपेणार्थभेदः श्रुत्यैव दर्शितः। एवं तावत् देवात्मशक्तिं यः कारणानि निखिलानि कालात्मना युक्तान्यधितिष्ठत्येक इति। एकस्याद्वितीयस्य परमात्मनः स्वरूपेण शक्तिरूपेण च निमित्तकारणोपादानकारणत्वं मायित्वेनेश्वररूपत्वं देवतात्मत्वसर्व्वज्ञत्वादिरूपत्वं सत्यज्ञानानन्दाद्वितीयरूपत्वञ्च समासेन श्रुत्यर्थाभ्यामभिहितम्॥ इदानीं तमेव सर्व्वात्मानं दर्शयति कार्य्यकारणयोरनन्यत्वप्रतिपादनेन। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति निदर्शनेनाद्वितीयापूर्व्वानपरनेतिनेत्यात्मकवागगोचराशनायाद्यसंस्पृष्टप्रत्यस्तमितभेदचित् सदानन्दब्रह्मात्मत्वं प्रदर्शयितुमना अप्रकृत्यैव प्रपञ्चं भ्रान्तामवस्थां प्राप्तस्य परब्रह्मण ईश्वरात्मनः सर्व्वज्ञत्वापहतपाप्मादिरूपेण देवतात्मना ब्रह्मादिरूपेण कार्य्यादिरूपेण वैश्वानरादिरूपेण च मोक्षापेक्षितमुमुक्षूणां स यदि पितृलोककाम इति विश्वैश्वर्य्यार्थीनां समां वा नित्यं शङ्करं वा प्रयाति। साधर्म्यनाविशिष्टत्वेन मामहं वैष्णवं तथा इत्यादि देवतासायुज्यप्राप्त्यर्थीनां वैश्वानरप्राप्त्यर्थांश्चोपासनार्थामशेषलौकिकवैदिककर्म्मप्रसिद्ध्यर्थांश्च यदि कार्य्यकारणरूपेण स्वरूपेण चित्सदानन्दाद्वितीयब्रह्मात्मना

## तमेकनेमिं त्रिवृतं षोडशान्तं

च व्यवस्थितां स्यात् तदा भोग्यभोक्तृनियन्तृ भावे संसारमोक्षयोरभाव एव स्यात्। अधिकारिणोऽभावेन साधनभूतस्य प्रपञ्चस्याभावात्। तत् तदा दातुरीश्वरस्याभावात्। तथा संसारादिभूतमीश्वरं दर्शयति। संसारमोक्षस्थितबन्धहेतुरिति॥ तथा च संसारमोक्षयोरभाव एव स्यात्। तत्सिद्ध्यर्थं प्रपञ्चाद्यवस्थानं दर्शयति।

एकं पादं नोत्क्षिपति सलिलाण्डं स उच्चटन्।
स चेदविन्ददानन्दं न सत्यं नानृतं भवेत्॥

सनत्सुजातेऽपि एकं पादं नोत्क्षिपति इत्यादि।

तथा च श्रुतिः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति तच्च प्रथमेन मन्त्रेण॥ ३॥

सर्व्वात्मानं ब्रह्मचक्रं दर्शयति द्वितीयेन नदीरूपेण। तमेकेति। य एकः कारणानि निखिलानि अधितिष्ठति तमेकनेमिम्। योनिः कारणमारभ्य अव्याकृतमाकाशं परमव्योम माया प्रकृतिः शक्तिः तमोऽविद्या छाया अज्ञानं अनृतं अव्यक्तिमित्येवमादिशब्दैरभिलप्यमाना एका कारणावस्था नेमिरिव नेमिः सर्व्वाधारो यस्याधिष्ठातुरद्वितीयस्य परमात्मनस्तमेकनेमिम्। त्रिवृतं त्रिभिः सत्त्वरजस्तमोभिः प्रकृतिगुणैर्वृतम्। षोडशको विकारः पञ्च भूतान्येकादशेन्द्रियाणि अन्तोऽवसानं विस्तारसमाप्तिर्यस्यात्मनस्तं षोडशान्तम्। अथवा प्रश्नोपनिषदि यस्मिन्नेताः षोडशकलाः प्रभवन्तीत्यारभ्य स प्राणमसृजत प्राणाच्छ्रद्धामित्यादिनामान्ताः षोडशकला अवसानं यस्येति। अथवा एकनेमि-

## शताङ्गारं विंशति प्रत्यराभिः ।

मिति कारणभूताव्याकृतावस्थाऽभिहिता । तत्कार्य्यंस-मष्टिभूतविराट्सूत्रद्वयं तद्व्यष्टिभूतभूरादिचतुर्द्दशभुवनानि अन्तोऽवसानं यस्य प्रपञ्चात्मना ऽवस्थितस्य तं षोडशान्तम् । शतार्द्धारं पञ्चाशत्प्रत्ययभेदविपर्य्यया शक्तिस्तुष्टिसिद्ध्याख्या अरा इव यस्य तं शतार्द्धारम् पञ्च विपर्य्ययभेदाः । तमो मोहो महामोहस्तामिस्रो ह्यन्धतामिस्र इति । शक्तिरष्टा-विंशति । तुष्टिर्न्नवधा । अष्टधा सिद्धिः । एते पञ्चाशत् प्रत्ययभेदाः । तत्र तमसो भेदोऽष्टविधः । अष्टसु प्रकृतिषु स्वात्मना आत्मप्रतिपत्तिविषयभेदेनाष्टविधत्वम् । प्रतिपत्ते-र्म्मोहस्य चाष्टविधो भेदः । अणिमादिशक्तिर्म्मोहः । दशविधो महामोहः । दृष्टानुश्रविकशब्दादिविषयेषु पञ्चसु पञ्चस्वभि-निवेशो महामोहः । दृष्टानुश्रविकभेदेन तेषां दशविध-त्वम् । तामिस्रोऽष्टादशविधः । दृष्टानुश्रविकेषु दशसु विषयेष्वष्टविधैरैश्वर्य्यैः प्रयतमानस्य तदसिद्धौ यः क्रोधः स तामिस्रोऽभिधीयते । अन्धतामिस्रोऽप्यष्टादशविधः । अष्ट-विधैश्वर्य्ये दशसु विषयेषु भोग्यत्वेनोपस्थितेषु अर्द्धभुक्तेषु मृत्युना ह्रियमाणस्य यः शोको जायते महता क्लेशेनैते प्राप्ता न चैते मयोपभुक्ताः । प्रत्यासन्नश्चायं मरणकाल इति सोऽन्धतामिस्र इत्युच्यते विपर्य्ययभेदा व्याख्याताः । शक्तिरष्टाविंशतिधोच्यते । एकादशेन्द्रियाणां शक्तयः मूकत्व-बधिरत्वान्धत्वप्रभृतयो वाह्याः । अन्तः करणस्य पुरुषार्थ-योग्यता तुष्टीनां विपर्य्ययेणाष्टधा शक्तिः । तुष्टिर्न्नवधा । प्रकृत्युपादानकालभाग्याख्याश्चतस्रः । विषयोपरमाः पञ्च ।

## अष्टकैः षड्भिर्विश्वरूपैकपार्श्वं

कश्चित् प्रकृतिपरिज्ञानात् कृतार्थोऽस्मीति मन्यते स पुनः पारिव्राज्यलिङ्गं गृहीत्वा कृतार्थोऽस्मीति मन्यते। अपरः पुनः प्रकृतिपरिज्ञानेन किं आश्रमाद्युपादानेन वा किं बहुना कालेनावश्यं मुक्तिर्भवति इति मत्वा परितुष्यति। कश्चित् पुनर्मन्यते विना भाग्येन न किञ्चिदपि प्राप्यते। यदि ममास्ति ततो भवत्येवाऽत्रैव मोक्ष इति परितुष्यति। विषयाणामार्जनमशक्यमिति उपारम्य तुष्यति। शक्यते द्रष्टुमार्जितुमर्जितस्य रक्षणमशक्यमिति उपारम्य परितुष्यति। सातिशयत्वादिदोषदर्शनेनोपारम्यापरस्तुष्यति। विषयाः सुतरामेवाभिलाषं जनयन्ति न च तद्भोगाभ्यासे तृप्तिरुपजायते।

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धत इति ॥

तस्मादलमनेन पुनःपुनरसन्तोषकारणेनोपभोगेनेति। एवं सङ्गदोषदर्शनादुपारम्य कश्चित् तुष्यति। नानुपहत्य भोग्यान्युपभोगाः सम्भवन्ति। भूतोपघातभोगाच्चाधर्म्मः। अधर्म्मान्नरकादिप्राप्तिरिति हिंसादोषदर्शनात् कश्चिदुपारम्य तुष्यति। प्रकृत्युपादानकालभाग्याश्चतस्रः। विषयाणामार्जनरक्षणविषयसङ्गहिंसादोषात् पञ्च तुष्टय इति नव तुष्टयो व्याख्याताः। सिद्धयो ऽभिधीयन्ते। ऊहशब्दोऽध्ययनमिति। तिस्रः सिद्धयः। दुःखविघातास्तिस्रः। सुहृत्प्राप्तिर्दानमिति सिद्धिद्वयम्। ऊहस्तत्त्वं जिज्ञासमानस्य। उपदेशमन्तरेण जन्मान्तरसंस्कारवशात् प्रकृत्यादिविषयं ज्ञानमुत्प-

## त्रिमार्गभेदं द्विनिमित्तैकमोहम ॥ ४ ॥

द्यते सेयमूहो नाम प्रथमा सिद्धिः। शब्दानामभ्यासमन्तरेण श्रवणमात्राद् यज्ज्ञानमुपपद्यते सा द्वितीया सिद्धिः। अध्ययनं नाम शास्त्राभ्यासाद् यज्ज्ञानमुपपद्यते सा तृतीया सिद्धिः। आध्यात्मिकस्याऽधिभौतिकस्याऽधिदैविकस्य त्रिविधदुःखस्य व्युदासात् शीतोष्णादिजन्यदुःखसहिष्णोस्तितिचौर्य्यज्ज्ञानमुत्पद्यते तस्याऽऽध्यात्मिकादिभेदात् सिद्धेस्त्रैविध्यम्। सुहृदं प्राप्य या सिद्धिर्ज्ञानस्य सा सुहृत्प्राप्तिर्नाम सिद्धिः। आचार्य्यहितवस्तुप्रदाने या सिद्धिर्व्विद्यायाः सा दानं नाम सिद्धिः। एवमष्टविधा सिद्धिर्व्विख्याता। एवं विपर्य्यया शक्तिः। तुष्टिसिद्ध्याख्याः पञ्चाशत्प्रत्ययभेदा व्याख्याताः। एवं ब्रह्मपुराणे कल्पोपनिषद्व्याख्यानप्रदेशे षष्टितन्त्राध्याये पञ्चाशत् प्रत्ययभेदाः प्रतिपादिताः। अथवा पञ्चाशच्छक्तिरूपिण इति परस्य या शक्तयः पुराणे स्वरूपत्वेनाभिमताः पञ्चाशच्छक्तय अरा इव यस्य तं शतार्द्धारम्। विंशतिप्रत्यरा दशेन्द्रियाणि तेषाञ्च विषया शब्दस्पर्शरूपरसगन्धवचनादानविहरणोत्सर्गानन्दाः। पूर्व्वोक्तानामराणां प्रत्यरा ये प्रतिविधियन्ते कीलका अराणां दार्ढ्याय ते प्रत्यरा उच्यन्ते तैः प्रत्यरैर्य्युक्तं अष्टकैः षड्भिर्युक्तमिति योजनीयम् ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

इति प्रकृत्यष्टकम् ॥ त्वक्चर्म्ममांसरुधिरमेदोऽस्थिमज्जाशुक्रानि धात्वष्टकम्। अणिमाद्यैश्वर्य्याष्टकम्। धर्म्मज्ञानवैराग्यैश्वर्य्याधर्म्माज्ञानवैराग्यानैश्वर्य्याख्या भावाष्टकम्। ब्रह्म-

पञ्चस्रोतोम्बुं पञ्चयोन्युग्रवक्रां
पञ्चप्राणोर्म्मिं पञ्चबुद्ध्यादिमूलाम।

प्रजापतिदेवगन्धर्वयक्षराक्षसर्सापर्त्पिशाचा देवाष्टकम्। अष्टावात्मगुणा ज्ञेयाः। दया सर्व्वभूतेषु क्षान्तिरनसूयाशौचमनायासो मङ्गलमकार्पण्यमस्पृहेति गुणाष्टकं षष्ठम्। एतैः षड्भिर्युक्तं विश्वरूपैकपाशं स्वर्गपुत्राद्याद्यादिविषयभेदात्। विश्वरूपं विश्वरूपो नानारूपः॥ एकः काम्याख्यः पाशोऽस्येति विश्वरूपैकपाशः। धर्म्माधर्म्मज्ञानमार्गभेदा अस्येति त्रिमार्गभेदम्। द्वयोः पुण्यपापयोर्निमित्तैकमोहो देहेन्द्रियमनोबुद्धिजात्यादिष्वनात्मस्वात्माभिमानोऽस्येति द्विनिमित्तैकमोहम्। अपश्यन्निति क्रियापदमनुवर्त्तते। अधीम इत्युत्तरमन्त्रस्थं वा क्रियापदम्॥ ४॥

पूर्व्वं चक्ररूपेण दर्शितमिदानीं नदीरूपेण दर्शयति। पञ्चस्रोत इति। पञ्चस्रोतांसि चक्षुरादीनि ज्ञानेन्द्रियाणि अम्बुस्थानानि यस्यास्तां नदीं पञ्चस्रोतोऽम्बुं अधीम इति सर्व्वत्र सम्बध्यते। पञ्चयोनिभिः कारणभूतैः पञ्चभूतैर्ग्रां वक्राश्च पञ्चयोन्युग्रवक्रां। कर्म्मेन्द्रियाणि पाण्यादयो वा ऊर्म्मयो यस्यास्तां। पञ्चबुद्धीनां चक्षुरादिजन्यानामज्ञानामादिकारणं मनः। मनोवृत्तिरूपत्वात् सर्व्वज्ञानानां मनो मूलं कारणं यस्याः संसारसरितस्ताम्॥ तथाच मनसः सर्व्वहेतुत्वं दर्शयति।

मनोविजृम्भितं सर्व्वं यत्किञ्चित् सचराचरम्।
मनसो ह्यमनोभावे द्वैतं भित्वोपलभ्यत इति॥

पञ्चशब्दादयो विषया आवर्त्तस्थानीयास्तेषु विषयेषु

पञ्चवर्त्तां पञ्चदुःखौघवेगाम्
पञ्चशक्रभेदां पञ्चपर्व्वामधीमः ॥ ५ ॥
सर्व्वाजीवे सर्व्वसंस्थे वृहन्ते
अस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ।

प्राणिनो निमज्जन्तीति यस्यास्तां पञ्चावर्त्ताम् । गर्भदुःख-जन्मदुःखजरादुःखव्याधिदुःखमरणदुःखानि यस्यास्तां पञ्च-दुःखौघवेगाम् । अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्ले-शभेदाः पञ्चपर्व्वाण्यस्यास्तां इति । एवं तावन्नदीरूपेण ब्रह्मचक्ररूपेण च कार्य्यकारणात्मकं ब्रह्म सप्रपञ्चमिहाभि-हितम् ॥ ५ ॥

इदानीमस्मिन् कार्य्यकारणात्मकब्रह्मचक्रे केन वा संस-रति केन वा मुच्यत इति संसारमोक्षहेतुप्रदर्शनायाह । सर्व्वाजीवेति । सर्वेषामाजीवनमस्मिन्निति सर्व्वाजीवे । सर्व्वेषां संस्था समाप्तिः प्रलयो यस्मिन्निति सर्व्वसंस्थे । वृह-न्तेऽस्मिन् हंसो जीवः । हन्ति गच्छत्यध्वानमिति हंसः । भ्राम्यते अनात्मभूतदेहादिमात्मानं मन्यमानः सुरनरति-र्य्यगादिभेदभिन्ननानायोनिषु । एवं भ्राम्यमाणः परिवर्त्तत इत्यर्थः । केन हेतुना नानायोनिषु प्रवर्त्तत इति तत्राह । पृथगात्मनं प्रेरितारञ्च मत्वेति । आत्मानं जीवात्मानं प्रे-रितारञ्चेश्वरं पृथग्भेदेन मत्वा ज्ञात्वा अन्योऽसावन्योऽहम-स्मीति जीवेश्वरभेददर्शनेन संसारे परिवर्त्तत इत्यर्थः । केन मुच्यत इत्याह । जुष्टः सेवितस्तेन ईश्वरेण चिसदानन्दा-

पृथगात्मानं प्रेरितारञ्च मत्वा

जुष्टस्ततस्तेनामृतत्वमेति ॥ ६ ॥

उद्गीतमेतत् परमन्तु ब्रह्म

द्वितीयब्रह्मात्मनाऽहं ब्रह्मास्मीति समाधानं कृत्वेत्यर्थः। ते-नेश्वरसेवनादमृतत्वमेति। यस्तु पूर्णानन्दब्रह्मरूपेणात्मा-नमवगच्छति स मुच्यते। यस्तु परमात्मनो ऽन्यमात्मानं जानाति स सम्बध्यत इति। तथा च बृहदारण्यके भेद-दर्शनस्य संसारहेतुत्वं प्रदर्शितम्। य एवं वेदाहं ब्रह्मा-स्मीति स इदं सर्व्वं भवतीति। तस्य ह न देवाश्च नाभू-त्या ईशते। आत्मा ह्येषां स भवति। अथ योऽन्यां देवता-मुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानामिति॥

तथा च श्रीविष्णुधर्म्मे।

पश्यत्यात्मानमन्यन्तु यावद्वै परमात्मनः।

तावत् स भ्राम्यते जन्तुर्म्मोहितो निजकर्म्मणा॥

सङ्क्षीणाशेषकर्म्मा तु परं ब्रह्म प्रपश्यति।

अभेदेनात्मनः शुद्धं शुद्धत्वादक्षयो भवेत्॥ ६॥

ननु तमेकयोनिमित्यादिना सप्रपञ्चं ब्रह्म प्रतिपादितम्। तथा च सत्यहं ब्रह्मास्मीति ब्रह्मात्मप्रतिपत्तावपि सप्रपञ्च-स्यैव ब्रह्मण आत्मत्वेनावगमात्तं यथा यथोपासते तदेव भव-तीति सप्रपञ्चब्रह्मप्राप्तिरेव स्यात्। ततश्च प्रपञ्चस्यापरित्या-गान्न मोक्षसिद्धिः। ततश्च जुष्टस्ततस्तेनामृतत्वमेतीति

तस्मिंस्त्रयं सुप्रतिष्ठाऽक्षरञ्च ।

मोक्षोपदेशोऽनुपपन्न एवेत्याशङ्क्याह । उद्गीतमिति । सप्रपञ्चं ब्रह्म यदि स्यात्ततो भवत्येव मोक्षाभावः । न त्वेतदस्ति । कस्मात् । यत उद्गीतं गीतमुपदिष्टं कार्य्यकारणलक्षणात् प्रपञ्चाद्दे दान्तैः । अन्यदेव तद्विदितादथो अविदितादधि । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । अस्थूलमशब्दमस्पर्शं स एष नेति नेतीति । ततो यदुत्तरम् । अन्यत्र धर्म्मात् । न सन्न चासच्छिव एव केवलः । तमसः परः । यतो वाचो निवर्त्तन्ते । यत्र नान्यत् पश्यति नान्यद्विजानाति । स भूमा । योऽशनायापिपासे शोकं मोहं जरामत्येति । अप्राणो ह्यमनाः परतः परः । एकमेवाऽद्वितीयम् । वाचारम्भणं विकारो नामधेयम् । नेह नानास्ति किञ्चन । एकधैवानुद्रष्टव्यम् । इत्येवमादिषु प्रपञ्चास्पृष्टमेव ब्रह्मावगम्यत इत्यर्थः । यत एवं प्रपञ्चधर्म्मरहितं ब्रह्म अतएव परमन्तु ब्रह्म । तु शब्दोऽवधारणे । परममेव उत्कृष्टमेव । संसारधर्म्मानास्कन्दितत्वात् । उद्गीतत्वेन ब्रह्मण उत्कृष्टत्वात् । तं यथा यथोपासत इति न्यायेन उत्कृष्टब्रह्मोपासनात् उत्कृष्टमेव फलं मोक्षाख्यं भवत्येवेत्यभिप्रायः । नन्वेवं तर्हि ब्रह्मणः प्रपञ्चसंस्पृष्टत्वे प्रपञ्चस्यापि ब्रह्मासंसर्गात् साङ्ख्यवाद इव प्रपञ्चस्यापि पृथक् सिद्धत्वेन स्वतन्त्रत्वाद्वाचारम्भणं विकारो नामधेयमिति पारतन्त्र्याभ्युपगमेन मिथ्यात्मोपदेशपूर्व्वकमद्वितीयब्रह्मात्मत्वे नोपदेशोऽनुपपन्नस्त्वेत्याशङ्क्याह । तस्मिंस्त्रयमिति । यद्यपि ब्रह्म प्रपञ्चासं-

**अत्रान्तरं ब्रह्मविदो विदित्वा**
**लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥ ७ ॥**

स्पृष्टं स्वतन्त्रञ्च तथापि प्रपञ्चो न स्वतन्त्रः। अपि तु तस्मि न्नेव ब्रह्मणि त्रयं प्रतिष्ठितं भोक्ता भोग्यं प्रेरितारमिति। वक्ष्यमाणं भोक्तृनियन्तृलक्षणम्। अजा ह्येका भोक्तृभो- ग्यार्थप्रयुक्तेति। वक्ष्यमाणं भोक्तृभोग्यरूपं चान्यद्वेदश्रुति- सिद्धं विराट्सूत्राभ्यां कृतनामरूपकर्म्मविश्वतैजसप्राज्ञजाग्रत्- स्वप्नसुषुप्तिरूपस्वरूपं प्रतिष्ठितं रज्ज्वामिव सर्पः। य एत- स्मिन् सर्व्वं भोक्त्रादिलक्षणं प्रपञ्चरूपं प्रतिष्ठितम्। अत एवास्य भोक्त्रादित्रयात्मकस्य प्रपञ्चस्य ब्रह्म सुप्रतिष्ठा शोभन- प्रतिष्ठा। ब्रह्मणोऽन्यस्य चलनात्मकत्वात्। चलप्रतिष्ठाऽन्यत्र। ब्रह्मणोऽचलत्वादत्राचलप्रतिष्ठा। नन्वेवं तर्हि विकारभूत- प्रपञ्चाश्रयत्वेन परिणामित्वाद्दध्यादिवदनित्यं स्यादित्याश- ङ्क्याह। अक्षरञ्चेति॥ यद्यपि विकारः प्रपञ्चाश्रयस्तथापि अक्षरं न क्षरतीत्यक्षरम्। चशब्दोऽवधारणे। अविनाश्येव ब्रह्म। मायात्मकत्वाद्विकारस्य। विकाराश्रयत्वेऽप्यविनाश्येव कूटस्थं ब्रह्मावतिष्ठत इत्यभिप्रायः। मायात्मकत्वञ्च प्रप- ञ्चस्य पूर्व्वमेव प्रपञ्चितम्। तस्मात् सर्वात्मकत्वेऽपि ब्रह्मणः प्रपञ्चस्य मिथ्यात्मकत्वेन ब्रह्मणः प्रपञ्चासंसर्गात् पूर्णानन्द- ब्रह्मात्मानं पश्यतो मोक्षाख्यः परमपुरुषार्थो भवती- त्यर्थः। कथं तर्ह्यात्मानं पश्यतो मोक्षसिद्धिरित्यत आह। अत्रास्मिन्नन्नमयाद्यानन्दमयान्ते देहविराडाद्यव्याकृतान्ते वा प्रपञ्चे पर्व्वपूर्व्वोपाधिप्रविलयेनोत्तरोत्तरमप्यशनायाद्यसंस्पृ-

संयुक्तमेतत् चरमचरञ्च

ष्टं वाचामगोचरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि विश्वा-
द्युपसंहारमुखेन लयं गता अहं ब्रह्मास्मीति ब्रह्मरूपेणैव
स्थिता इत्यर्थः। तत्पराः समाधिपराः। किं कुर्व्वन्ति यो-
निमुक्ता भवन्ति। गर्भजन्मजरामरणसंसारभयान्मुक्ता भव-
न्तीत्यर्थः॥ तथा च योगियाज्ञवल्क्यो ब्रह्मात्मनैवावस्थितं
समाधिं दर्शयति।

यदर्थमिदमद्वैतमरूपं सर्व्वकारणम्।
आनन्दममृतं नित्यं सर्व्वभूतेष्ववस्थितम्॥
तदेव नान्यधीः प्राप्य परमात्मानमात्मना।
तस्मिन् प्रलीयते त्वात्मा समाधिः स उदाहृतः॥
इन्द्रियाणि वशीकृत्य यमादिगुणसंयुतः।
आत्ममध्ये मनः कुर्य्यादात्मानं परमात्मनि॥
परमात्मा स्वयं भूत्वा न किञ्चिच्चिन्तयेत्ततः।
तदा तु लीयते तस्मिन् प्रत्यगात्मन्यखण्डिते॥
प्रत्यगात्मा स एव स्यादित्युक्तं ब्रह्मवादिभिरिति॥७॥

नन्वद्वितीये परमात्मन्यभ्युपगम्यमाने जीवेश्वरयोरपि
विभागाभावात् लीना ब्रह्मणि जीवानां ब्रह्मैकत्वपरल-
यश्रुतिरनुपपन्नेवेत्याशङ्क्य व्यवहारव्यवस्थायां जीवेश्वरयो-
रुपाधितो विभागं दर्शयित्वा तद्विज्ञानादमृतत्वं दर्शयति।
संयुक्तमेतदिति॥ व्यक्तं विकारजातं अव्यक्तं कारणं तदुभयं
चरमचरञ्च। व्यक्तं चरं विनाशि अव्यक्तमचरमविनाशि
तदुभयं परस्परसंयुक्तं कार्य्यकारणात्मकं विश्वं भरते बिभर्त्ति
ईशः ईश्वरः॥ तथाचाह भगवान्।

व्यक्ताव्यक्तं भरते विश्वमीशः ।

क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥

यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वर इति ।

न केवलमीश्वरो व्यक्ताव्यक्तं भरते अनीशश्चानीशश्च । स आत्मा अविद्यातत्कार्य्यभूतदेहेन्द्रियादिभिर्वध्यते भोक्तृभावात् । एतदुक्तं भवति । परस्परसंसक्तव्यष्टिसमष्टिरूप- ईश्वरः । तद्व्यष्टिभूतदेहेन्द्रियात्मकोऽनीशो जीवः । एवं समष्टिव्यष्ट्यात्मकत्वेन जीवपरयोरौपाधिकस्य भेदस्य विद्यमानत्वात्तदुपाध्युपासनद्वारेण निरुपाधिकमीश्वरं ज्ञात्वा मुच्यत इति भोक्त्रात्म्यैक्यवादेनानुपपन्नं किञ्चिद्विद्यत इति ॥ तथाचौपाधिकमेव भेदं दर्शयति भगवान् याज्ञवल्क्यः ।

आकाशमेकं हि यथा घटादिषु पृथग् भवेत् ।

तथात्मैको ह्यनेकश्च जलधारेष्विवांशुमान् ॥

तथा च श्रीविष्णुधर्म्मे ॥

परात्मनो मनुष्येन्द्र विभागो हि न कल्पितः ।

क्षये तस्यात्मपरयोर्व्विभागाभाव एव हि ॥

आत्मा क्षेत्रज्ञसञ्ज्ञोऽयं संयुक्तः प्राकृतैर्गुणैः ।

तैरेव विगतः शुद्धः परमात्मा निगद्यते ॥

अनादिसम्बन्धवत्या क्षेत्रज्ञोऽयमविद्यया ।

युक्तः पश्यति भेदेन ब्रह्म त्वात्मनि संस्थितम् ॥

तथा च श्रीविष्णुपुराणे ॥

विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।

अनीशश्चात्मा बुध्यते भोक्तृभावात्
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥
तथा च वासिष्ठे योगशास्त्रे प्रश्नपूर्व्वकं दर्शितम् ॥
यद्यात्मा निर्गुणः शुद्धः सदानन्दोऽजरोऽमरः ।
संसृतिः कस्य तात स्यान् मोक्षो वाऽविद्यया विभो ॥
चेषनाशे कथं तस्य ज्ञायते भगवान् यतः ।
यथावत् सर्व्वमेतं मे वक्तुमर्हसि साम्प्रतम् ॥
वसिष्ठः ॥
तस्यैव नित्यशुद्धस्य सदानन्दमयात्मनः ।
अवच्छिन्नस्य जीवस्य संसृतिः कीर्त्त्यते बुधैः ॥
एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
भ्रान्त्या रूढः स एवात्मा जीवसञ्ज्ञः सदा भवेत् ॥
तथा च ब्राह्मे पुराणे परस्यैवौपाधिकं जीवादिभेदं दर्शयति ॥
कथं तर्ह्यौपाधिकभेदेन बन्धमुक्त्यादिव्यवस्थेत्याशङ्क्य दृष्टान्तपूर्व्वकं व्यवस्थां दर्शयति ।
एकस्तु सूर्य्यो बहुधा जलाधारेषु दृश्यते ।
आभाति परमात्मा च सर्व्वोपाधिषु संस्थितः ॥
ब्रह्म सर्व्वशरीरेषु बाह्यं चाभ्यन्तरे स्थितम् ।
आकाशमिव भूतेषु बुद्धावात्मा न चान्यथा ॥
एवं सति यया बुद्ध्या देहोऽहमिति मन्यते ।
अनात्मन्यात्मता भ्रान्त्या सा स्यात् संसारबन्धिनी ॥

ज्ञात्वा देवं मुच्यते सर्व्वपाशैः ॥ ८ ॥

सर्व्वैर्व्विकल्पैर्हीनस्तु शुद्धो बुद्धोऽजरोऽमरः ।
प्रशान्तो व्योमवद्व्यापी चैतन्यात्मा सकृत्प्रभः ॥
धूमाभ्रधूलिभिर्व्योम यथा न मलिनीयते ।
प्राकृतैरपरामृष्टो विकारैः पुरुषस्तथा ॥
यथैकस्मिन् घटाकाशे जलैर्धूमादिभिर्युते ।
नान्ये मलिनतां यान्ति दूरस्थाः कुत्रचित् क्वचित् ॥
यथा द्वन्द्वैरनेकैस्तु जीवे च मलिनीकृते ।
एतस्मिन्नापरे जीवा मलिनाः सन्ति कुत्रचित् ॥

तथा च शुकशिष्यो गौडपादाचार्य्यः ॥

यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते ।
न सर्व्वे सम्प्रयुज्यन्ते तद्वज्जीवाः सुखादिभिरिति ॥

तस्मादद्वितीये परमात्मन्युपाधितो जीवेश्वरयोर्जीवानाञ्च भेदव्यवस्थायाः सिद्धत्वान्न विशुद्धसत्वोपाधेरीश्वरस्याविशुद्धोपाधिजीवगता सुखदुःखमोहाज्ञानादयः ॥

तथा च भगवान् पराशरः ।

ज्ञानात्मकस्याऽमलसत्त्वराशेरपेतदोषस्य सदा स्फुटस्य । किं वा जगत्यस्ति समस्तपुंसामज्ञातमस्यास्ति हृदि स्थितस्येति ॥

नापि जीवान्तरगतसुखदुःखमोहादिना जीवान्तरस्य बद्धस्य मुक्तस्य वा सम्बन्धः । उपाधितो व्यवस्थायाः सम्भवात् । अत एकमुक्तौ सर्व्वमुक्तिरिति भवदुक्तस्य चोद्यस्यानवकाशः ॥ ८ ॥

ज्ञाज्ञौ द्वावजावीशनीशा-
वजा ह्येका भोक्तृभोग्यार्थयुक्ता।

किञ्चेदमपरं वैलक्षण्यमित्याह। ज्ञाज्ञौ द्वाविति॥ न केवलं व्यक्ताव्यक्तं भरते ईशो नाप्यनीशः सन् बध्यते जीवोऽपि तु। ज्ञाज्ञौ ज्ञ ईश्वरः। अज्ञो जीवः। तौ। अजौ जातादिरहितौ। ब्रह्मण एवाविकृतस्य जीवेश्वरात्मनाऽवस्थानात्। तथा च श्रुतिः।

पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः।

पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति॥

एकस्तथा सर्व्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्चेति च॥ ईशनीशौ छान्दसं ह्रस्वत्वम्॥ नन्वद्वैतवादिनो यदि भोक्तृभोग्यलक्षणप्रपञ्चसिद्धिः स्यात् तदा सर्व्वेशः परमेश्वरः। अनीशो जीवः। सर्व्वज्ञः परमेश्वरः। असर्व्वशक्तिर्जीवः। सर्व्वकृत् परमेश्वरः। देहादिविभ्रज्जीवः। सर्व्वात्मा परमेश्वरः। असर्व्वात्मा जीवः। विश्वैश्वर्य्य आप्तकामः परमेश्वरः। अल्पैश्वर्य्योऽनाप्तकामो जीवः। सर्व्वतः पाणिः सहस्रशीर्षा नित्योऽनित्यानामित्यादिना जीवेश्वरयोर्व्विलक्षणव्यवहारसिद्धिःस्यात्। न तद्भोक्तादिप्रपञ्चसिद्धिरस्ति। स्वतः कूटस्थापरिणाम्यद्वितीयस्य वस्तुनो भोक्तादिरूपत्वाभावात्। नापि परतो ब्रह्मव्यतिरिक्तस्य भोक्तादिप्रपञ्चहेतुभूतस्य वस्त्वन्तरस्याभावात्। वस्त्वन्तरसद्भावे द्वैतहानिरित्याशङ्क्याह। अजा ह्येका भोक्तृ भोग्यार्थयुक्तेति॥ भवेदयमीश्वराद्यविभागः। यदि प्रपञ्चासिद्धिरेव स्यात् सिद्धत्येवं प्रपञ्चः। हि यस्मा-

**अनन्तश्चात्मा विश्वरूपो ह्यकर्त्ता**
**त्रयं यदा विन्दते ब्रह्ममेतत ॥ ९ ॥**

इत्यर्थं। यस्मादजा प्रकृतिर्न जायत इत्यादिना सिद्धा प्रसवधर्म्मिणि। अजामेकाम्। मायान्तु प्रकृतिं विद्यात्। इन्द्रो मायाभिः पुरुरूप ईयते। माया परा प्रकृतिः। सम्भवाम्यात्ममायया। इत्यादिश्रुतिस्मृतिसिद्धा विश्वजननी देवात्मशक्तिरूपैका स्वविकारभूतभोक्तृभोगभोग्यार्थप्रयुक्ता ईश्वरनिकटवर्त्तिनी किंकुर्व्वाणाऽवतिष्ठते। तस्मात् सोऽपि मायी परमेश्वरो मायोपाधिसन्निधेस्तद्वानिव कार्य्यभूतैर्देहादिभिस्तद्वदेव विभक्तएवाऽविभक्त ईश्वरादिरूपेणावतिष्ठते। तस्मादेकस्मिन्नेकरसे परमेऽभ्युपगम्यमानेऽपि जीवेश्वरादिसर्व्वलौकिकवैदिकसर्व्वभेदव्यवहारसिद्धिः। ततस्तयोर्वस्त्वन्तरस्य सद्भावाद् द्वैतवादिप्रसक्तिः। मायाया अनिर्वाच्यत्वेन वस्तुत्वायोगात्। तथाह।

एषा हि भगवन्माया सदसद्भक्तिवर्जितेति॥ यस्मादजैव भोक्त्रादिरूपा तस्मात् तत्स्वीकृतस्य मिथ्यासिद्धवस्तुत्वम्। सम्भवात्। अनन्तश्चात्मा। चशब्दोऽवधारणे। अनन्त एवात्मा। अस्यान्तःपरिच्छेदो देशतःकालतो वस्तुतोऽपि न विद्यत इति। विश्वरूपो विश्वमस्यैव रूपमिति। परस्याविश्वरूपत्वात्। वाचारम्भणं विकारो नामधेयमिति। रूपस्य रूपव्यतिरेकेणाभावात् विश्वरूपत्वादप्यात्मत्वं सिद्धमित्यर्थः। हि शब्दो यस्मादर्थे। यस्माद्विश्वरूपवैरूप्यलक्षणः परमात्मा इत्येवमादिभिरात्मनो विश्व-

क्षरं प्रधानममृताक्षरं हरः
क्षरात्मनावीशते देव एकः।

रूपत्वमित्यर्थः। यत एवानन्तो विश्वरूप आत्मा अतएव अकर्त्ता कर्त्तृत्वादिसंसारधर्म्मरहित इत्यर्थः॥ कदैवमनन्तो विश्वरूपः कर्त्तृत्वादिसकलसंसारधर्म्मवर्जितो मुक्तः पूर्णा-नन्दाद्वितीयब्रह्मरूपेणैवावतिष्ठत इत्यत्राह। त्रयं यदा विन्दते ब्रह्ममेतदिति। त्रयं भोक्तृभोगभोग्यरूपम्। माया-त्मकत्वादधिष्ठानभूतव्यतिरेकेण निवृत्तनिखिलविकल्पपूर्णा-नन्दाद्वितीयब्रह्मभाक् कर्त्तृत्वादिसकलसंसारधर्म्मवर्जितो वीतशोकः कृतकृत्योऽवतिष्ठत इत्यर्थः। अथवा ज्ञाज्ञा-जात्मकजीवेश्वरप्रकृतिरूपत्रयं ब्रह्म यदा विन्दते लभते तदा मुच्यत इति। ब्रह्ममिति मकारान्तम्। ब्रह्ममेतु मां मधुमेतु माम्॥ मामिति छान्दसम्॥ जीवेश्वरयोर्वि-भागं दर्शयित्वा तद्विज्ञानादमृतत्वं दर्शितं भवति॥९॥

इदानीं प्रधानेश्वरयोर्वैलक्षण्यं दर्शयित्वा तद्विज्ञानाद-मृतत्वं दर्शयति। क्षरं प्रधानममृताक्षरं हर इति॥ अविद्यादेर्हरणात् परमेश्वरो हरः। अमृतञ्च तदक्षरं चाऽमृताक्षरममृतं ब्रह्मैव ईश्वर इत्यर्थः। स ईश्वर क्षरा-त्मानौ प्रधानपुरुषौ ईशते ईष्टे देव एकश्चित्सदानन्दोऽद्वि-तीयः परमात्मा। तस्य परमात्मनोऽभिध्यानात्। कथं। योजनात्। जिवानां परमात्मासंयोजनात्। तत्त्वभा-वादहं ब्रह्मास्मीति भूयश्चासकृत्। यद्वा स्वात्मार्थज्ञा-ननिष्पत्तिरन्तस्तस्मिन् वाऽर्थज्ञानोदयवेलायां वा विश्वमा-

तस्याभिधानाद्योजनात् तत्त्वभावाद्
भूयश्चान्ते विश्वमायानिवृत्तिः ॥१०॥

यानिवृत्तिः । सुखदुःखमोहात्मकाशेषप्रपञ्चरूपमायानिवृत्तिः ॥१०॥

इदानीं तद्विदस्तदिति ध्यानात् स्वाज्ञानध्यानकृतं फलभेदं दर्शयति ज्ञात्वा देवमयमहमस्मीति । सर्व्वपाशापहानिः । पाशरूपाणां सर्व्वेषामविद्यादीनामपहानिः । क्षीणैरविद्यादिभिः क्लेशैस्तत्कार्य्यभूतजन्ममृत्युप्रहाणिः । जननमरणादिदुःखहेतुविनाशफलं प्रदर्शितम् । ध्याने किञ्चित् क्रममुक्तिरूपंविशेषमाह । तस्य परमेश्वरस्याभिध्यानाद् देहभेदे शरीरभेदोपायोत्तरकालमर्चिरादिना देवयानपथा गत्वा परमेश्वरसायुज्यं गतस्य तृतीयं विराड्रूपापेक्षया व्याकृतपरमव्योमकारणेश्वरावस्थं विश्वैश्वर्य्यलक्षणं भवति । स तत्रैव निर्व्विशेषमात्मानं ज्ञात्वा केवलो निरस्तसमस्तैश्वर्य्यं तदुपाधिसिद्धिरव्याकृतपरमव्योमकारणेश्वरात्मकतृतीयावस्थं विश्वैश्वर्य्यं हित्वा आप्तकाम आत्मकामः पूर्णानन्दाद्वितीयब्रह्मरूपे ऽवतिष्ठते ॥ एतदुक्तम्भवति । सम्यग्दर्शनस्य तथाभूतवस्तुविषयत्वेन निर्व्विषयपूर्णानन्दाद्वितीयब्रह्मविषयत्वाद्विज्ञानानन्तरमविद्यातत्कार्य्यप्रहाणेन पूर्णानन्दाद्वितीयब्रह्मस्वरूपो ऽवतिष्ठते । ध्यानस्य पुनः सहसा न निराकारे बुद्धिः प्रवर्त्तत इति । सविशेषब्रह्मविषयत्वात् तं यथा यथोपासत इति न्यायेन सविशेषविश्वैश्वर्य्यलक्षणब्रह्मप्राप्त्या विश्वैश्वर्य्यमनुभूय निर्व्विशेषपूर्णानन्दब्रह्मात्मानं

ज्ञात्वा देवं सर्व्वपाशापहानिः
क्षीणैः क्लेशैर्जन्ममृत्यु प्रहाणिः।

ज्ञात्वा केवलात्मकामो वाऽऽमाशेषपुमर्थो मुक्तो भवति॥ तथा शिवधर्म्मोत्तरे ज्ञानध्यानयोर्विश्वैश्वर्य्यलक्षणं केवलात्मकामलक्षणञ्च फलं दर्शयति।

ध्यानादैश्वर्य्यमतुलमैश्वर्य्यात् सुखमुत्तमम्।
ज्ञानेन तत् परित्यज्य विदेहो मुक्तिमाप्नुयादिति॥

तथा च दहरादिसविशेषसगुणोपासकानां स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादिना विश्वैश्वर्य्यलक्षणं फलं दर्शयति। तथा च प्रश्नोपनिषदि। यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परमपुरुषमभिध्यायीत स तेजसि सूर्य्ये सम्पन्न इत्यादिना परमपुरुषमभिध्यायतोऽर्च्चिरादिमार्गोपदेशपूर्व्वकम्। स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षत इति ब्रह्मलोकं गतस्य तत्रैव सम्यग्दर्शनलाभं दर्शयित्वा तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं वेत्तीति सम्यग्दर्शनेन मोक्ष उपदिष्टः तमेवं विद्वानमृत इह भवतीति विदुषोऽर्च्चिरादिगमनं विना इहैवाऽमृतत्वप्राप्तिं दर्शयति॥ अथाकामयमान इत्यारभ्य न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येतीत्यादिना विनैवोत्क्रान्तिं विदुषो मोक्ष उपदिष्टः। उदस्मात् प्राणाः क्रामन्त्याहो नेति नेति होवाच याज्ञवल्क्य इति प्रश्नपूर्व्वकमुत्क्रान्त्यभावो दर्शितः। तथा च ब्राह्मे पुराणे जीवन्मुक्तिं गत्यभावं दर्शयति॥

तस्याऽभिध्यानात्तृतीयं
देहभेदे विश्वैश्वर्यं केवल आप्तकामः ॥११॥

यस्मिन् काले स्वमात्मानं योगी जानाति केवलम् ।
तस्मात् कालात् समारभ्य जीवन्मुक्तो भवेदसौ ॥
मोक्षस्य नैव किञ्चित् स्यादन्यत्र गमनं क्वचित् ।
स्थानं परार्द्धमपरं यत्र गच्छन्ति योगिनः ॥
अज्ञानबन्धभेदस्तु मोक्षो ब्रह्मलयस्त्विति ॥
तथा लैङ्गे विदुषो जीवन्मुक्तिं दर्शयति ॥
इह लोके परे चैव कर्त्तव्यं नास्ति तस्य वै ।
जीवन्मुक्तो यतस्तस्मात् ब्रह्मवित् परमार्थतः ॥

शिवधर्म्मोत्तरे ॥

वाञ्छात्ययेऽपि कर्त्तव्यं किञ्चिदस्य न विद्यते ।
इहैव स विमुक्तः स्यात् सम्पूर्णः समदर्शनः ॥

तस्मादुपासको देहादुत्क्रम्याऽर्चिरादिना देवयानेन विश्वैश्वर्य्यं ब्रह्म प्राप्य विश्वैश्वर्य्यमनुभूय तत्रैव केवलं प्रत्यस्तमितभेदपूर्णानन्दाद्वितीयब्रह्मात्मानं ज्ञात्वा केवलमात्मकामो मुक्तो भवति विद्वान् । निर्व्विशेषपूर्णानन्दाद्वितीयब्रह्मविज्ञानादशेषगन्तृगन्तव्यगमनादिभेदप्रत्यस्तमयाद्विनैवोत्क्रान्तिं देवयान ब्रह्मज्ञानसमनन्तरं जीवन्मुक्तो ब्रह्मज्ञानसमनन्तरं ब्रह्मानन्दमनुभूयात्मरतिरात्मतृप्त आत्मनैवान्तःसुखोऽन्तरारामोऽन्तर्ज्योतिरात्मक्रीड आत्मरतिरात्ममिथुन आत्मानन्द इहैव स्वाराज्ये भूम्नि स्वे महिम्नमृतोऽवतिष्ठते। तद्धेतुत्वाद्बाह्यविषयपरित्यागेन ब्रह्मण्याधाय

एतज्ज्ञेयं नित्यमेवात्मसंस्थं
नातः परं वेदितव्यं हि किञ्चित् ।

वाङ्मनःकामनिष्पाद्यं श्रौतस्मार्त्तलक्षणं कर्म्म कृत्वा विशुद्ध-सत्त्वो योगारूढो भूत्वा शमादिसाधनसम्पन्नः ॥

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥
एवं युञ्जन् सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥
सर्व्वभूतस्थमात्मानं सर्व्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्व्वत्र समदर्शनः ॥
समं पश्यन् हि सर्व्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥११॥

यस्माज् ज्ञानान्तरं परमपुरुषार्थसिद्धिस्तस्मात् एतज्-ज्ञेयमिति ॥ एतत् प्रकृतं केवलात्माकाशब्रह्मरूपं नित्यं नियमेन ज्ञेयं किमत्रान्यसंस्थं न स्वात्मस्थं ज्ञेयं नानात्मनि ॥ श्रात्मे श्रूयते ।

तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषामिति ॥

तथा च शिवधर्म्मोत्तरे योगिनामात्मनि स्थितिः ॥

शिवमात्मनि पश्यन्ति प्रतिमासु न योगिनः ।
आत्मस्थं यः परित्यज्य वहिस्थं यजते शिवम् ॥
हस्तस्थं पिण्डमुत्सृज्य लिह्यात् कूर्परमात्मनः ।
सर्व्वत्रावस्थितं शान्तं न पश्यन्तीह शङ्करम् ॥

**भोक्ता भोग्यं प्रेरितारञ्च मत्वा**
**सर्व्वं प्रोक्तं त्रिविधं ब्रह्ममेतत ॥ १२ ॥**

ज्ञानचक्षुर्व्विहीनत्वादन्धः सूर्य्यं यथोदितम् ।
यः पश्येत् सर्व्वगं शान्तं तस्याध्यात्मस्थितः शिवः ॥
आत्मस्थं ये न पश्यन्ति तीर्थे मार्गन्ति ते शिवम् ।
आत्मस्थं तीर्थमुत्सृज्य वहिस्तीर्थादि यो व्रजेत् ॥
करस्थं स महारत्नं त्यक्त्वा काचं विमार्गति ।

अथवा एतद्यदपरोक्षं प्रत्यगात्मरूपं तन्नित्यमविनाशि स्वे महिम्नि स्थितं ब्रह्मैव ज्ञेयम् । कस्मात् । हिशब्दो यस्मादर्थे। तस्मान्नातः परं वेदितव्यमस्ति किञ्चिदपि । श्रूयते च वृहदारण्यके । तदेतत् पदनीयमस्य सर्व्वस्य यदयमात्मेति ॥ कथमेतज् ज्ञेयमित्याह । भोक्ता जीवो भोग्यमितरत् । सर्व्वप्रेरिताऽन्तर्य्यामी परमेश्वरः । तदेतत्त्रिविधं प्रोक्तं ब्रह्मैवेति । भोक्त्राद्यशेषभेदप्रपञ्चविलापनेनैव निर्व्विशेषं ब्रह्मात्मानं जानीयादित्यर्थः ॥ तथा चोक्तं कावषेयगीतायाम् ॥

त्यक्त्वा सर्व्वविकल्पांश्च स्वात्मस्थं निश्चलं मनः ।
कृत्वा शान्तो भवेद्योगी दग्धेन्धन इवानलः ॥

तथा च श्रीविष्णुपुराणे ॥

तस्यैव कल्पनाहीनस्वरूपग्रहणं हि यत्
मनसा ध्याननिष्पाद्यः समाधिः सोऽभिधीयत इति ॥

तदानीमोमित्येतेनाक्षरेण परम्पुरुषमभिध्यायीत । ओमित्यात्मानं युञ्जीत । ओमित्यात्मानं ध्यायीतेतिश्रुतेः ॥१२॥

वह्नेर्यथा योनिगतस्य मूर्त्ति-
र्न दृश्यते नैव च लिङ्गनाशः ।
स भूय एवेन्धनयोनिगृह्य-
स्तद्वोभयं वै प्रणवेन देहे ॥ १३ ॥

स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिं ।
ध्याननिर्म्मथनाभ्यासाद् देवं पश्येन्निगूढ़वत् ॥

तिलेषु तैलं दधिनीव सर्पि- ॥ १४ ॥

आत्मानमन्विष्य पराभिध्याने प्रणवस्य नियमाभिध्यानाङ्गत्वेन प्रणवं दर्शयति । वह्नेर्यथेति ॥ वह्नेर्यथा योनिगतस्य अरणिगतस्य मूर्त्तिः स्वरूपं न दृश्यते मथनात् प्राङ् नैव च लिङ्गस्य सूक्ष्मदेहस्य विनाशः स एवाऽरणिगतोऽग्निर्भूयः पुनः पुनरिन्धनयोनिना मथनेन गृह्यः । योनिशब्दोऽत्र कारणवचनः । इन्धनेन कारणेन पुनः पुनर्म्मथनाद्गृह्यः । तद्वोभयं । इवार्थो वाशब्दः । तच्चोभयं तदुभयमिव मथनात् प्राङ् न गृह्यते मथनेन च गृह्यते । तद्वदात्मा वह्निस्थानीयः प्रणवेनोत्तरारणिस्थानीयेन मथनाद्गृह्यते देहे अधरारणिस्थानीये ॥ १३ ॥

तदेव प्रपञ्चयति । स्वदेहेति ॥ स्वदेहमरणिं कृत्वा अधरारणिं ध्यानेन निर्म्मथनं तस्य निर्म्मथनस्याऽभ्यासाद् देवं ज्योतीरूपं प्रपश्यन्निगुढ़ाग्निवत् ॥१४॥

उक्तस्यार्थस्य द्रढ़िम्ने दृष्टान्तान् बहून् दर्शयति । तिलेष्विति ॥ तिलेषु यन्त्रपीडनेन तैलं गृह्यते दधिमथनेन

रापः स्रोतःस्वरणीषु चाग्निः ।
एवमात्मनि गृह्यतेऽसौ
सत्येनैनं तपसा योऽनुपश्यति ॥ १५ ॥
सर्व्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितं ।
आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परं ।

सर्पिरिव । आपः स्रोतःसु नदीषु भूखननेन । अरणीषु चाग्निर्म्मथनेन । एवमात्मात्मनि स्वात्मनि गृह्यते । असौ मननात्मभूतदेहादिषु अन्नमयाद्यशेषोपाधिप्रविलापनेन निर्व्विशेषे पूर्णानन्दे स्वात्मन्येवावगम्यत इत्यर्थः । केन तर्हि पुरुषेणात्मा आत्मन्येव गृह्यत इत्याह । सत्येन यथा भूतहितार्थवचनेन भूतहितेन । सत्यं भूतहितं प्रोक्तमिति स्मरणात् । तपसा इन्द्रियमनसामैकाग्र्यलक्षणेन । मनसश्चेन्द्रियाणाञ्चैकाग्र्यं परमन्तप इति स्मरणात् । एनमात्मानं योऽनुपश्यति ॥१५॥

कथमेनमनुपश्यतीत्यत आह ॥ सर्व्वव्यापीति ॥ सर्व्वं प्रकृत्यादिविशेषान्तं व्याप्यावस्थितं न देहेन्द्रियाद्यध्यात्ममात्रावस्थितमात्मानम् । क्षीरे सर्पिरिव सारत्वेन निरन्तरतया आत्मत्वेन सर्व्वेष्वर्पितमात्मविद्यातपसोर्मूलम् कारणम् । श्रूयते च । एष ह्येव साधुकर्म्म कारयति । ददामि बुद्धियोगं तं येन मामुपयान्ति त इति । अथवा आत्मविद्या च तपश्च यस्यात्मलाभे मूलहेतुरिति ॥ तथा च श्रुतिः । विद्ययाऽमृतमश्नुते विद्ययाऽमृतम् । तपसा ब्रह्मविजिज्ञासस्वेति च ब्रह्म उपनिषत्परं उपनिषत्सर्मस्मिन्

तद्ब्रह्मोपनिषत्परमिति ॥१६॥ इति श्वेताश्वतरोपनिषत्सु प्रथमोऽध्यायः ॥ ओं तत्सत् ओं हरिः ओं ॥

परं श्रेय इति । यः सत्यादिसाधनसंयुक्त एनं सर्व्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितं आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परं अनुपश्यति चैनं सर्व्वगतब्रह्मात्मदर्शिनामात्मन्येव गृह्यते नासत्यादियुक्तैर्नापरिच्छिन्नब्रह्मज्ञानमयात्मात्मना । श्रूयते च । सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्य्येण नित्यम् । न येषु जिह्ममनृतं न माया चेति ॥ द्विर्व्वचनमध्यायपरिसमाप्त्यर्थम् ॥१६॥ इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य्यश्रीमच्छङ्करभगवत्प्रणीते श्वेताश्वतरोपनिषद्भाष्ये प्रथमोऽध्यायः ॥१॥ हरिः ओं ॥

---

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः।
अग्निंज्योतिर्निचाय्य पृथिव्या अध्याभरत॥१
युक्तेन मनसा वयं देवस्य सवितुः सवे।
सुवर्गेयाय शक्त्या ॥ २ ॥

ध्यानमुक्तं ध्याननिर्म्मथनाभ्यासाद् देवं पश्येन्निगूढ़-वदिति परमात्मदर्शनोपायत्वेन इदानीं तदपेक्षितसाधन-विधानार्थं द्वितीयोऽध्याय आरभ्यते। तत्र प्रथमं तत्सिध्यर्थं सवितारमाशास्ते । युञ्जान इति॥ युञ्जानः प्रथमं मनः। प्रथमं ध्यानारम्भे मनः परमात्मनि संयोजनया धिय इत-रानपि प्राणान्। प्राणा वै धिय इति श्रुतेः। अथवा धियः वाह्यविषयज्ञानानि। किमर्थम्। तत्त्वाय तत्त्वमहंणाय सविता धियो वाह्यविषयज्ञानाद् अग्निं तस्य ज्योतिःप्रकाशं निचाय्य दृष्ट्वा पृथिव्या अधि अस्मिन् शरीरे आभरत् आहरत्। एतदुक्तं भवति ज्ञाने प्रवृत्तस्य मम वाह्यविषय-ज्ञानादुपसंहृत्य परमात्मन्येव संयोजयितुमनुग्राहकदेवता-त्मनामग्न्यादीनां यत् सर्व्ववस्तुप्रकाशसामर्थ्यं तत्सर्व्वं-मस्मद्वागादिषु सम्पादयेत् सविता यत्प्रसादादवाप्यते योग इत्यर्थः। अग्निशब्द इतरासामप्यनुग्राहकदेवताना-मुपलक्षणार्थः॥ १॥

युक्तेनेति॥ यदा तत्त्वाय मनो योजयन्ननुग्राहकशक्त्या-धानेन देहेन्द्रियदार्ढ्यं करोति तदा युक्तेन सवित्रा पर-

युक्ताय मनसा देवान् सुवर्यतो धिया दिवम ।
बृहज्ज्योतिः करिष्यतः सविताप्रसुवाति तान्
[ ॥ ३ ॥

युञ्जते मन उत युञ्जते धियो
विप्रा विप्रस्य बृहतो विपश्चितः ।

मात्मनि संयोजितेन मनसा वयं तस्य देवस्य सवितुः सवि-ऽनुज्ञायां सत्यां स्वर्गयाय स्वर्गप्राप्तिहेतुभूताय ध्यानकर्म्मणि यथासामर्थ्यं प्रयतामहे परमात्मवचनोऽत्र स्वर्गशब्दः तत् प्रकरणात् तस्यैव सुखरूपत्वात् तदंशत्वाच्चेतरस्य सुखस्य । तथा च श्रुतिः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रा-मुपजीवन्तीति ॥ २ ॥

युक्तायेति ॥ पुनरपि सोऽप्येवं करोत्विति प्रार्थना । युक्ताय योजयित्वा देवान् मनआदीनि करणानि तेषां विशेषणम् । स्वः स्वर्गं सुखं पूर्णानन्दब्रह्म यत इति द्वितीया-बहुवचनम् । नः पूर्णानन्दब्रह्म गच्छतो न शब्दादिविषयान् । पुनरपि विशेषणान्तरं धिया सम्यग्दर्शनेन दिवं द्योतनस्व-भावचैतन्यैकरसं बृहन् महद् ब्रह्मज्योतिःप्रकाशं करिष्यतः पूर्णानन्दब्रह्माविष्करिष्यतः । अत्र द्वितीयाबहुवचनम् । सविता प्रसुवाति तान् तानि करणानि । यथा करणानि विषयेभ्यो निवृत्तानि आत्माभिमुखानि आत्मप्रकाशमेव तथानुजानातु सवितेत्यर्थः ॥ ३ ॥

तस्यैवमनुजानतो महता परितुष्टिः कर्त्तव्येत्याह ।

वि होत्रा दधे वयुना विदेक इन्
मही देवस्य सवितुः परिष्टुतिः ॥ ४ ॥
युजे वां ब्रह्म पूर्व्यं नमोभि
र्व्विश्लोका यन्ति पथ्येव सूराः ।

युञ्जत इति ॥ युञ्जते योजयन्ति ये विप्रा मन उत युञ्जते धिय इतराण्यपि करणानि । धीहेतुत्वात् करणेषु धीशब्द-प्रयोगः । तथा च श्रुत्यन्तरम् । यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सहेति । विप्रस्य विशेषणव्याप्तस्य बृहतो महतो विपश्चितः सर्व्वज्ञस्य देवस्य सवितुर्म्मही महती परिष्टुतिः कर्त्तव्या । कैर्विप्रैः । पुनरपि विशिनष्टि । वि होत्रा दधे । होत्राः क्रिया यो विदधे वयुनावित् प्रज्ञावित् सर्व्वज्ञानात् साक्षिभूत एषोऽद्वितीयः । ये विप्रा मनआदिकरणानि विषयेभ्य उपसंहृत्यात्मन्येव योजयन्ति तैर्व्विप्रस्य बृहतो विपश्चितो महती परिष्टुतिः कर्त्तव्या । होत्रा दधे वयुना-विदेकः सविता ॥ ४ ॥

किञ्च ॥ युजे वामिति ॥ युजे वां समादधे वां युवयोः करणानुग्राहकयोः सम्बन्धि प्रकाश्यत्वेन तत् प्रकाशितं ब्रह्मेत्यर्थः । अथवा वामिति बहुवचनार्थे युष्माकं कारणभूतं ब्रह्म पूर्व्यं पूर्व्वं चिरन्तनं युजे समादधे । नमोभिर्न्नम-स्कारैश्चित्तप्रणिधानादिभिः । एष एवं समादधानस्य मम श्लोका यन्ति कीर्त्तितव्या यन्ति विविधमेत्य पथ्येव सूराः । पथि सन्मार्गे । अथवा पथ्या कीर्त्तिरित्येतद्वाक्यं प्रार्थना-

शृण्वन्ति विश्वे अमृतस्य पुत्रा
आ ये धामानि दिव्यानि तस्थुः ॥ ५ ॥
अग्निर्यत्राभि मथ्यते वायुर्यत्राभि युज्यते ।
सोमो यत्रातिरिच्यते तत्र सञ्जायते मनः
[ ॥ ६ ॥
सविता प्रसवेन जुषेत ब्रह्मपूर्व्यम् ।

रूपं शृण्वन्तु विश्व अमृतस्य ब्रह्मणः पुत्राः सूरात्मनो हिरण्य-गर्भस्य । के ते । ये धामानि दिव्यानि दिविभवान्यातस्थुर-धितिष्ठन्ति ॥ ५ ॥

युञ्जानः प्रथमं मन इत्यादिना सवित्रादिप्रार्थना प्रति-पादिता । यस्तु पुनः प्रार्थनां कृत्वा तैरनुज्ञातः सन् योगे प्रवर्त्तते स भोगहेतोः कर्म्मण्येव प्रवर्त्तत इत्याह । अग्निर्य-त्रेति ॥ अग्निर्यत्राभिमथ्यते भरणमथनतत्साधनादौ । वायु र्यत्र प्रवर्ग्यादौ । पवित्रप्रेरितः शब्दमभिव्यक्तं करोति । सोमो यत्र दशापवित्रात् पूयमानोऽतिरिच्यते तत्र क्रतौ सञ्जायते मनः । यस्मादननुज्ञातस्य तस्य भोगहेतोः कर्म्म-ण्येव प्रवृत्तिः तस्मात् ॥ ६ ॥

सवितेति ॥ सविता प्रसवेन सवितृप्रसवेनेति यावत् । जुषेत सेवेत ब्रह्म पूर्व्यं चिरन्तनम् । तस्मिन् ब्रह्मणि योनिष्ठां समाधिलक्षणां कृण्वसे कुरुष्व । एवं कुर्व्वतो मम किं ततो भवतीत्याह । न हि ते पूर्व्वं स्मार्त्तं कर्म्म दृष्टं श्रौतञ्च कर्म्माक्षिपन् न पुनर्भोगहेतोर्बध्नाति । ज्ञानाग्निना

तत्र योगिं छ्यपसे न हि ते पूर्व्वमच्चिमत्

॥ ७ ॥

सबीजस्य दग्धत्वात्। उक्तञ्च। यथेषिका तूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्व्वे पाप्मानः प्रदूयन्त इति। ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथेति चेति। अग्निर्यत्राभिमथ्यत इत्यत्राऽपरा व्याख्या। अग्निः परमात्मा। अविद्यातत्कार्य्यस्य दाहकत्वात्। उक्तञ्च। अहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति। यत्र यस्मिन् पुरुषे मथ्यते स्वदेहमरणिं कृत्वेत्यादिना पूर्व्वोक्तध्याननिर्म्मथनेन वायुर्यत्राऽभियुज्यते शब्दमव्यक्तं करोति रेचकादिकरणात्। सोमो यत्रातिरिच्यतेऽनेकजन्मसेवया तत्र तस्मिन् यज्ञदानतपःप्राणायामसमाधिविशुद्धान्तःकरणे सञ्जाते परिपूर्णानन्दाद्वितीयब्रह्माकारं समुत्पद्यते नान्यत्राऽशुद्धान्तःकरणे। उक्तञ्च।

प्राणायामविशुद्धात्मा यस्मात् पश्यति तत् परम्।
तस्मान्नातःपरं किञ्चित् प्राणायामादिति श्रुतिः॥
अनेकजन्मसंसारचिते पापसमुच्चये।
तत् क्षीणे जायते पुंसां गोविन्दाभिमुखी मतिः॥
जन्मान्तरसहस्रेषु तपोज्ञानसमादिभिः।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते॥

तस्मात् प्रथमं यज्ञाद्यनुष्ठानं ततः प्राणायामादि ततः समाधिः ततो वाक्यार्थज्ञाननिष्पत्तिः ततः कृतकृत्यतेति ॥ ७ ॥

**त्रिरुन्नतं स्थाप्य समं शरीरं**

तत्र योगिनं कुर्यात् इत्युक्तं कथं योगिकरणमित्याशङ्क्य तत्प्रकारं दर्शयति। त्रिरुन्नतमिति॥ त्रीण्युन्नतानि उरोग्रीवशिरांसि उन्नतानि यस्मिन् शरीरे त्रिरुन्नतं संस्थाप्य समं शरीरं हृदीन्द्रियाणि मनश्चक्षुरादीनि मनसा संनिवेश्य संनियम्य ब्रह्मैवोडुपस्तरणसाधनं तेन ब्रह्मोडुपेन ब्रह्मशब्दं प्रणवं वर्णयन्ति। तेनोडुपस्थानीयेन प्रणवेन काकाक्षिवदुभयत्र सम्बध्यते। तेनोपसंहृत्य तेन प्रतरेत अतिक्रमेद्विद्वान् ब्रह्मस्रोतांसि संसारसरितः। स्वाभाविकाविद्याकामकर्म-प्रवर्त्तितानि भयावहानि प्रेततिर्य्यगूर्ध्वप्राप्तिकराणि पुनरावृत्तिभाञ्जि प्राणायामक्षपितमनोमलस्य चित्तं ब्रह्मणि स्थितम्भवतीति प्राणायामो निर्दिश्यते। प्रथमं नाडिशोधनं कर्त्तव्यम्। ततः प्राणायामेऽधिकारः दक्षिणनासिकापुटमङ्गुल्याऽवष्टभ्य वामेन वायुं पूरयेद् यथाशक्ति। ततोऽनन्तरमुत्सृज्यैव दक्षिणेन पुटेन समुत्सृजेत्। सव्यमपि धारयेत्। पुनर्दक्षिणेन पूरयित्वा सव्येन समुत्सृजेद् यथाशक्ति। त्रिपञ्चःकृत्वो वैवमभ्यस्यतः सवनचतुष्टयमपररात्रे मध्याह्ने पूर्व्वरात्रे ऽर्द्धरात्रे च पक्षान् मासाद्विशुद्धिर्भवति। त्रिविधः प्राणायामो रेचकः पूरकः कुम्भक इति। तदेवाह।

ईप्सितानि समभ्यस्य वाञ्छितानि यथाविधि।
प्राणायामं ततो मार्गि! जितासनगतोऽभ्यसेत्॥
मृद्वासने कुशान् सम्यगास्तीर्य्याजिनमेव च।
लम्बोदरञ्च सम्पूज्य फलमोदकभक्षणैः।

हृदीन्द्रियाणि मनसा सन्निवेश्य ।

तदासने सुखासीनः सव्ये नस्येतरं करम् ।
समग्रीवशिराः सम्यक् संवृतास्यः सुनिश्चलः ॥
प्राङ्मुखोदङ्मुखो वापि नासाग्रस्तब्धलोचनः ।
अतिभुक्तमभुक्तञ्च वर्जयित्वा प्रयत्नतः ॥
नाडीसंशोधनं कुर्य्यादुक्तमार्गेण यत्नतः ।
वृथा क्लेशो भवेत् तस्य तच्छोधनमकुर्व्वतः ॥
नासाग्रे शशभृद्वीजं चन्द्रातपवितानितम् ।
सप्तमस्य तु वर्गस्य चतुर्थं विन्दुसंयुतम् ॥
विश्वमध्यस्थमालोक्य नासाग्रे चक्षुषी उभे ।
इडया पूरयेद्वायुं वाह्यं द्वादशमात्रकैः ॥
ततोऽग्निं पूर्व्ववद् ध्यायेत् स्फुरज्ज्वालावलीयुतम् ।
रूषष्ठं विन्दुसंयुक्तं शिखिमण्डलसंस्थितम् ॥
ध्यायेद्विरेचयेद्वायुं मन्दं पिङ्गलया पुनः ।
पुनः पिङ्गलया पूर्य्य प्राणं दक्षिणतः सुधीः ॥
तद्वद्विरेचयेद्वायुमिडया तु शनैः शनैः ।
त्रिचतुर्व्वत्सरञ्चापि त्रिचतुर्म्मासमेव वा ॥
गुरुणोक्तप्रकारेण रहस्येवं समभ्यसेत् ।
प्रातर्म्मध्यन्दिने सायं स्नात्वा षट्कृत्व आचरेत् ॥
सन्ध्यादिकर्म्म कृत्वैवं मध्यरात्रेऽपि नित्यशः ।
नाडीशुद्धिमवाप्नोति तच्चिह्नं दृश्यते पृथक् ॥
शरीरलघुता दीप्तिर्जठराग्निविवर्द्धनम् ।
नादाभिव्यक्तिरित्येतल्लिङ्गं तच्छुद्धिसूचनम् ॥

**ब्रह्मोडुपेन प्रतरेत विद्वान**

**स्रोतांसि सर्व्वाणि भयावहानि ॥ ८ ॥**

यद्यन्ति न जपेस्तेन सर्गगुह्ये रहेतवः ।
प्राणायामं ततः कुर्य्याद्रेचपूरककुम्भकैः ॥
प्राणापानसमायोगः प्राणायामः प्रकीर्त्तितः ।
प्रणवत्रयात्मकं गार्गि ! रेचपूरककुम्भकम् ॥
तदेतत् प्रणवं विद्धि तत्स्वरूपं ब्रवीम्यहम् ।
यद्वेदादौ स्वरः प्रोक्तो वेदान्तेषु प्रतिष्ठितः ॥
तयोरन्तं तु यद्गार्गि ! वर्गपञ्चकपञ्चमम् ।
रेचकं प्रथमं विद्धि द्वितीयं पूरकं विदुः ॥
तृतीयं कुम्भकं प्रोक्तं प्राणायामस्त्रिरात्मकः ।
त्रयाणां कारणं ब्रह्म भारूपं सर्व्वकारणम् ॥
रेचकः कुम्भको गार्गि ! सृष्टिस्थित्यात्मकावुभौ ।
कुम्भकस्तत्र संहारः कारणं योगिनामिह ॥
पूरयेत् षोडशैर्मात्रैरापादतलमस्तकम् ।
मात्रैर्द्वात्रिंशकैः पश्चाद्रेचयेत् सुसमाहितः ।
सम्पूर्णकुम्भवद्वायुमों यथा मद्विदेशतः ॥
कुम्भकं धारणं गार्गि ! चतुःषष्ट्या तु मात्रया ।
ऋषयस्तु वदन्त्यन्ये प्राणायामपरायणाः ॥
पवित्रभूताः पूतान्ताः प्रभञ्जनजये रताः ।
तत्रादौ कुम्भकं कृत्वा चतुःषष्ट्या तु मात्रया ॥
रेचयेत् षोडशैर्मात्रैर्नासेनैकेन सुन्दरि ! ।
तयोश्च पूरयेद्वायुं शनैः षोडशमात्रया ॥

प्राणान प्रपीड्येह सं युक्तचेष्टः।
क्षीणे प्राणे नासिकयोच्छ्वसीत:।
दुष्टाश्वयुक्तमिव वाहमेनं
विद्वान मनो धारयेताप्रमत्तः॥ ९॥

प्राणस्यायमनन्त्वेवं वशं कुर्य्याज्जयी वशः।
पञ्च प्राणाः समाख्याता वायवः प्राणमाश्रिताः॥
प्राणो मुख्यतमस्तेषु सर्व्वप्राणभृतां सदा।
घोष्ठनासिकयोर्मध्ये हृदये नाभिमण्डले॥
पादाङ्गुष्ठाश्रितं चैव सर्व्वाङ्गेषु च तिष्ठति।
नित्यं षोड़शसङ्ख्याभिः प्राणायामं समभ्यसेत्॥
मनसा प्रार्थितं याति सर्व्वप्राणजयी भवेत्।
प्राणायामैर्द्दहेद् दोषान् धारणाभिश्च किल्विषान्॥
प्रत्याहाराच्च संसर्गं ध्यानेनानीश्वरान् गुणान्।
प्राणायामशतं स्नात्वा यः करोति दिने दिने॥
मातापितृगुरुघ्नोऽपि त्रिभिर्वर्षैर्व्यपोहति॥ ८॥

तदेतदाह॥ प्राणानित्यदिना॥ प्राणान् प्रपीड्य देहयुक्तो नात्यश्रुत इति श्लोकोक्ताश्चेष्टा यस्य स संयुक्तचेष्टः। क्षीणे शक्तिहान्या तनुत्वं गते मनसि नासिकायाः पुटाभ्यां शनैः शनैरुत्सृजेन् नमुखेन। मुखेन मुक्ताभ्यां वायुं प्रतिष्ठाप्य शनैर्नासिकयोरुत्सृजेदिति। उदात्ताश्वाः सूतं रथान्तरमिव मनने मनो धारयेता ऽप्रमत्तः प्रणिहितात्मा च॥ ९॥

समे शुचौ शर्करावह्निवालुका-
विवर्जिते शब्दजलाश्रयादिभिः।
मनोऽनुकूले न तु चक्षुपीड़ने
गुहानिवाताश्रयणे प्रयोजयेत् ॥ १० ॥
नीहारधूमार्कानिलानलानां
खद्योतविद्युतस्फटिकशशिनाम।
एतानि रूपाणि पुरःसराणि
ब्रह्मण्यभिव्यक्तिकराणि योगे ॥११॥

समेति॥ समे निम्नोन्नतरहिते देशे। शुचौ शुद्धे। शर्करावह्निवालुकाविवर्जिते। शर्कराः क्षुद्रोपलाः। वालुकास्तच्च सर्वम्। तथा शब्दजलाश्रयादिभिः। शब्दः कलहादिध्वनिः। जलं सर्व्वप्राण्युपभोग्यम्। मण्डप आश्रयः। मनोऽनुकूले मनोरमे चक्षुःपीडने प्रतिपाद्याभिमुखे। छान्दसो विसर्गलोपः। गुहानिवाताश्रयणे गुहायामेकान्ते निवाते समाश्रित्य प्रयोजयेत् प्रयुञ्जीत चित्तं परमात्मनि ॥ १० ॥

इदानीं योगमभ्यस्यतोऽभिव्यक्तिचिह्नानि वक्ष्यन्ते नीहार इत्यादिना॥ नीहारस्तुषारः। तद्वत् प्राणैः समा चित्तवृत्तिः प्रवर्त्तते ततो धूम इवाभाति। ततोऽर्क इवाभाति। ततो वह्निरिवात्युष्णो वायुः प्रकाशदहनः प्रवर्त्तते। वाह्यवायुरिव सङ्क्षुभितो बलवान् विजृम्भते। कदाचित्। खद्योतखचितमिवान्तरिक्षमालक्ष्यते। विद्युदिव रोचिष्णु प्रवर्त्तते। शुद्धस्फटिकाकृतिः कदाचित् पूर्णशशिवत्। एतानि रूपाणि

पृथ्व्यप्यतेजोऽनिलखे समुत्थिते
पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न दुःखं
प्राप्तस्य योगाग्निमयं शरीरम् ॥ १२ ॥
लघुत्वमारोग्यमलोलुपत्वं
वर्णप्रसादः स्वरसौष्ठवञ्च ।
गन्धः शुभो मूत्रपुरीषमल्पं
योगप्रवृत्तिं प्रथमां वदन्ति ॥ १३ ॥

योगे क्रियमाणे ब्रह्मण्याविष्क्रियमाणे निमित्ते पुरःसराण्य-ग्रगामीनि । तथा परमयोगसिद्धिः ॥ ११ ॥

पृथ्वीति । पृथ्व्यप्तेजोऽनिलखे पृथिव्यादीनि भूतानि द्वन्द्वैकवद्भावेन निर्दिश्यन्ते । तेषु पञ्चसु भूतेषु समुत्थितेषु पञ्चात्मके योगगुणे प्रवृत्त इत्यस्य व्याख्यानम् । कः पुनर्योग-गुणः प्रवर्त्तते । पृथिव्या गन्धः । तथाऽद्भो रसः । एव-मन्यत्र ॥ उक्तं ।

ज्योतिष्मती स्पर्शवती तथा रसवती पुरा ।
गन्धवत्यपरा प्रोक्ता चतस्रस्तु प्रवृत्तयः ॥
आसां योगप्रवृत्तीनां यद्येकापि प्रवर्त्तते ।
प्रवृत्तयोगं तं प्राहुर्योगिनो योगचिन्तकाः ॥ १२ ॥

लघुत्वमिति ॥ न तस्य योगिनो रोगाज् ज्वराद् दुःखममानसं वा भवति । कस्य । प्राप्तस्य योगाग्निमयं शरीरम् । योगाग्निसंप्लुष्टदोषकलापं शरीरं प्राप्तस्य । स्पष्टमन्यत् ॥ १३ ॥

यथैव विम्बं मृदयोपलिप्तं
तेजोमयं भ्राजते तत् सुधातम्।
तद्वात्मतत्त्वं प्रसमीक्ष्य देही
एकः कृतार्थो भवते वीतशोकः ॥ १४ ॥
यदात्मतत्त्वेन तु ब्रह्मतत्त्वं
दीपोपमेनेह युक्तः प्रपश्येत्।
अजं ध्रुवं सर्व्वतत्त्वैर्विशुद्धं
ज्ञात्वा देवं मुच्यते सर्व्वपाशैः ॥ १५ ॥

किञ्च। यथैवेति॥ यथैव विम्बं सौवर्णं राजतं वा मृदयोपलिप्तं मृदादिना मलिनीकृतं पूर्व्वं पश्चात् सुधातं सुधौतमित्यस्मिन्नर्थे सुधातमिति छान्दसम्। अग्न्यादिना विमलीकृतं तेजोमयं भ्राजते। तद्वा तदेव आत्मतत्त्वं प्रसमीक्ष्य दृष्ट्वा एको न द्वितीयः कृतार्थो भवते वीतशोकः। परेषां पाठे तद्वत्सतत्त्वं प्रसमीक्ष्य देहीति। तत्राप्ययमेवार्थः॥ १४ ॥

कथं ज्ञात्वा वीतशोको भवतीत्याह। यदेति॥ यदा यस्यामवस्थायामात्मतत्त्वेन स्वेनात्मना। किंविशिष्टेन दीपोपमेन दीपस्थानीयेन प्रकाशस्वरूपेण ब्रह्मतत्त्वं प्रपश्येत्। तुशब्दोऽवधारणे। परमात्मानमात्मनैव जानीयादित्यर्थः। उक्तञ्च। तदात्मानमेवावेदहं ब्रह्मास्मीति। कीदृशम्। अन्यस्मादजायमानम्। ध्रुवं अप्रच्युतस्वरूपं सर्व्वतत्त्वैरविद्यातत्कार्य्यैर्विशुद्धं असंस्पृष्टं ज्ञात्वा देवं मुच्यते सर्व्वपाशैरविद्यादिभिः॥ १५ ॥

एष हि देवः प्रदिशोऽनुसर्व्वाः
पूर्व्वो हि जातः स उ गर्भे अन्तः।
स विजातः स जनिष्यमाणः।
प्रत्यङ्जनांस्तिष्ठति सर्व्वतोमुखः॥ १६॥
योदेवोऽग्नौ योऽप्सु यो विश्वंभुवनमाविवेश
य ओषधीषु यो वनस्पतिषु तस्मै देवाय
नमो नमः॥ १७॥ श्वेताश्वतरोपनिषत्सु
द्वितीयो ऽध्यायः॥ २ ॥

परमात्मानमात्मतत्त्वेन विजानीयादित्युक्तं तदेव भावयन्नाह। एष हीति॥ एष एव देवः प्रदिशः प्राच्याद्या दिश उपदिशश्च सर्व्वाः पूर्व्वो हिजातः सर्व्वस्माद्धिरण्यगर्भात्मना स उ गर्भे अन्तर्व्वर्त्तमानः स एव जातः शिशुःस जनिष्यमाणोऽपि स एव सर्व्वांश्च जनान् प्रत्यङ् तिष्ठति सर्व्वप्राणिगतानि मुखानि अस्येति सर्व्वतोमुखः॥ १६॥

इदानीं योगवत् साधनान्तराणि नमस्कारादीनि कर्त्तव्यत्वेन दर्शयितुमाह। यो देव इति॥ यो विश्वं भुवनं भुवनविरचितं संसारमण्डलमाविवेश। य ओषधीषु शाल्यादिषु वनस्पतिषु अश्वत्थादिषु तस्मै विश्वात्मने भुवनमूलाय परमेश्वराय नमो नमः। द्विर्व्वचनमादरार्थं अध्यायपरिसमाप्त्यर्थञ्च॥ १७॥ इति श्वेताश्वतरोपनिषद्भाष्ये द्वितीयोऽध्यायः॥ २॥

यएको जालवान् ईशित ईशिनीभिः
सर्व्वांल्लोकानीशित ईशिनोभिः ।
य एवैक उद्भवे सम्भवे च
य एतद्विदुरमृतास्ते भवन्ति ॥ १ ॥
एको हि रुद्रो न द्वितीयाय तस्थुर्य
इमांल्लोकान् ईशत ईशिनीभिः ।
प्रत्यङ्जनांस्तिष्ठति सञ्चुकोपान्तकाले
संसृज्य विश्वा भुवनानि गोपाः ॥ २ ॥

कथमद्वितीयस्य परमात्मन ईशित्रीशितव्यादिभाव इत्याशङ्क्याह । य एक इति ॥ य एकः परमात्मा सजालवान् जालं माया दुरत्ययत्वात् । तथा चाह भगवान् । मम माया दुरत्ययेति । तद्वान् तदस्यास्तीति जालवान् मायावीत्यर्थः । ईशते ईष्टे मायोपाधिः सन् । कैरीशिनीभिः स्वशक्तिभिः ॥ तथाचोक्तम् । ईशित ईशिनीभिः परमशक्तिभिरिति । कान् सर्व्वांल्लोकानीशित ईशिनीभिः । कदा उद्भवे विभूतियोगसम्भवे प्रादुर्भावे च एतद्विदुरमृता अमरणधर्म्मा भवन्ति ॥ १ ॥

कस्मात् पुनर्जालवानित्याशङ्क्याह । एको हीति । हिशब्दो यस्मादर्थे । यस्मादेक एव रुद्रः स्वतो न द्वितीयाय

विश्वतश्चक्षुरुत विश्वतो मुखो
विश्वतो बाहुरुत विश्वतस्पात्।
सं बाहुभ्यां धमति सम्पतत्रै-
र्द्यावाभूमी जनयन् देवएकः॥ ३॥
यो देवानां प्रभवश्चोद्भवश्च

पत्वन्तराय तस्थुर्ब्रह्मविदः परमार्थदर्शिनः॥ उक्तञ्च। एको रुद्रो न द्वितीयाय तस्थुरिति। य इमांल्लोकानीशते नियमयति इह ईशनीभिः। सर्व्वांश्च जनान् प्रति अन्तरः प्रतिपुरुषमवस्थितः। रूपं रूपं प्रतिरूपो बभूवेत्यर्थः। किञ्च। सञ्चुकोपान्तकाले प्रलयकाले। किं कृत्वा संसृज्य विश्वा भुवनानि गोपा गोप्ता भूत्वा। एतदुक्तं भवति। अद्वितीयः परमात्मा। न चाऽसौ कुम्भकारवदात्मानं केवलं मृत्पिण्डस्थानीयमुपादानकारणमुपादत्ते किं तर्हि स्वशक्तिविक्षेपं कुर्व्वन् स्रष्टा नियन्ता वाभिधीयत इति उत्तरो मन्त्रः॥ २॥

तस्यैव विराडात्मनावस्थानं तत्स्रष्टृत्वं प्रतिपादयति। विश्वतश्चक्षुरिति। सर्व्वप्राणिगतानि चक्षुंष्यस्येति विश्वतश्चक्षुः। अतः स्वेच्छयैव सर्व्वत्र चक्षुरूपादौ सामर्थ्यं विद्यत इति विश्वतश्चक्षुः। एवमुत्तरत्र योजनीयम्। बाहुभ्यां धमति संयोजयतीत्यर्थः। अनेकार्थत्वाद्धातूनाम्। पक्षिणं धमति द्विपदो मनुष्यादींश्च पतत्रैः। किं कुर्व्वन् द्यावापृथिवी जनयन् देव एको विराजं सृष्टवानित्यर्थः॥ ३॥

इदानीं तस्यैव सूत्रसृष्टिं प्रतिपादयन् मन्त्रदृगभिप्रेतं

विश्वाधिपो रुद्रो महर्षिः।
हिरण्यगर्भं जनयामास पूर्व्वं
स नो बुद्ध्या शुभया संयुनक्तु ॥ ४ ॥
या ते रुद्र शिवा तनूरघोराऽपापकाशिनी।
तया नस्तनुवा शन्तमया गिरिशन्ताभि-
चाकशीहि ॥ ५ ॥

प्रार्थयते। यो देवानामिति॥ यो देवानामिन्द्रादीनां प्रभव-हेतुरुद्भवहेतुश्च। उद्भवे विभूतियोगः। विश्वस्याधिपो विश्वा धिपः पालयिता। महर्षिः। महांश्चासावृषिश्चेति महर्षिः सर्व्वज्ञ इत्यर्थः। हितं रमणीयमत्युज्ज्वलं ज्ञानं गर्भोऽन्तःसारो यस्य तं जनयामास पूर्व्वं सर्गादौ। स नोऽस्मान् बुद्ध्या शुभया संयुनक्तु परमपदं प्राप्नुयामिति॥४॥

पुनरपि तस्य स्वरूपं दर्शयन्नभिप्रेतमर्थं प्रार्थयते मन्त्र-द्वयेन। या ते रुद्र इत्यादि॥ हे रुद्र तव या शिवा तनूरघोरा। उक्तं तथा च तस्यैते तनुवौ घोराऽन्या शिवाऽन्येति। अथवा शिवा शुद्धा अविद्यातत्कार्य्यविनिर्मुक्ता सच्चिदानन्दाद्वयब्रह्मरूपा न तु घोरा शशिबिम्बमिवाह्लादिनी। अपापकाशिनी स्मृतिमात्रात्पापनाशिनी पुण्याभिव्यक्तिकरी। तया आत्मना नोऽस्मान् शन्तमया सुखतमया पूर्णानन्दरूपया हे गिरिशन्त गिरौ स्थित्वा शं सुखं तनोतीति। अभिचाकशीहि अभिपश्य निरीक्षस्व श्रेयसा नियोजयस्वेत्यर्थः॥ ५॥

यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे।
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत्
॥ ६॥

ततः परं ब्रह्म परं बृहन्तं
यथा निकायं सर्व्वभूतेषु गूढम्।
विश्वस्यैकं परिवेष्टितारं
ईशं तं ज्ञात्वाऽमृता भवन्ति॥ ७॥
वेदाहमेतं पुरुषं महान्तं

किञ्च। यामिषुमिति। यामिषुं गिरिशन्त हस्ते बिभर्षि धारयसि अस्तवे अस्तुं जनेषु शिवां गिरित्र गिरिं त्रायत इति तां कुरु मा हिंसीः पुरुषं मदीयं जगदपि तत्कृत्स्नं साकारं ब्रह्म प्रदर्शयेत्यभिप्रेतमर्थं प्रार्थितवान्॥ ६॥

इदानीं तस्यैव कारणात्मनावस्थानं दर्शयन् ज्ञानादमृतत्वमाह। ततः परमिति। ततः पुरुषयुक्ताज्जगतः परं कारणत्वात् कार्य्यभूतस्य प्रपञ्चस्य व्यापकमित्यर्थः। अथवा ततो जगदात्मनो विराजः परम्। किं तद्ब्रह्म परं बृहन्तं ब्रह्मणो हिरण्यगर्भात् परं बृहन्तं महद्व्यापित्वात् यथानिकायं यथाशरीरम्। सर्व्वभूतेषु गूढं अन्तरवस्थितम्। विश्वस्यैकं परिवेष्टितारं सर्व्वमन्तः कृत्वा स्वात्मना सर्व्वं व्याप्याऽवस्थितमीशं परमेश्वरं ज्ञात्वा ऽमृता भवन्ति॥ ७॥

इदानीमुक्तमर्थं द्रढयितुं मन्त्रदृगनुभवं दर्शयित्वा

आदित्यवर्णं तमसः परस्तात ।
तमेव विदित्वातिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥ ८ ॥
यस्मात परं नापरमस्ति किञ्चित्
यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-
स्तेनेदं पूर्णं पुरुषेण सर्व्वम ॥ ९ ॥

पूर्णानन्दाद्वितीय ब्रह्मात्मपरिज्ञानादेव परमपुरुषार्थप्राप्ति-र्नान्येनेति दर्शयति । वेदाहमेतमिति । वेद जाने तमेतं परमात्मानम् । अथैतं प्रत्यगात्मानं साक्षिणम् । किं । पुरुषं पूर्णं महान्तं सर्व्वात्मत्वात् । आदित्यवर्णं प्रकाश-रूपं तमसोऽज्ञानात् परस्तात् तमेव विदित्वा ऽतिमृत्यु-मेति मृत्युमत्येति । कस्मादस्मान्नान्यः पन्था विद्यतेऽयनाय परमपदप्राप्तये ॥ ८ ॥

कस्मात पुनस्तमेव विदित्वाऽतिमृत्युमेतीत्युच्यते । यस्मा-दिति ॥ यस्मात् परं पुरुषात् परमुत्कृष्टमपरमन्यन्नास्ति यस्मान्नाणीयोऽणुतरञ्च ज्यायो महत्तरं वास्ति वृक्ष इव स्तब्धो निश्चलो दिवि द्योतनात्मनि स्वे महिम्नि तिष्ठत्ये-कोऽद्वितीयः परमात्मा तेनाऽद्वितीयेन परमात्मना इदं सर्व्वं पूर्णं नैरन्तर्य्येण व्याप्तं पुरुषेण पूर्णेन सर्व्वमिदं सर्व्वम् ॥ ९ ॥

ततो यदुत्तरतरं तदरूपमनामयम् ।
य एतद्विदुरमृतास्ते भवन्त्य-
थेतरे दुःखमेवापियन्ति ॥ १० ॥

सर्व्वाननशिरोग्रीवः सर्व्वभूतगुहाशयः ।
सर्व्वव्यापी स भगवान् तस्मात् सर्व्वगतः शिवः
॥ ११ ॥

महान् प्रभुर्व्वै पुरुषः सत्त्वस्यैष प्रवर्त्तकः ।

इदानीं ब्रह्मणः पूर्व्वोक्तकार्य्यकारणतां दर्शयन् ज्ञानिनाममृतत्वमितरेषाञ्च संसारित्वं दर्शयति । तत इति ॥ तत इदं शब्दवाच्याज्जगत उत्तरतरं कारणं ततोऽप्युत्तरं कार्य्यकारणविनिर्म्मुक्तं ब्रह्मैवेत्यर्थः । तदरूपं रूपादिरहितं अनामयं आध्यात्मिकादितापत्रयरहितत्वात् । य एतद्विदुरमृतत्वेनाऽहमस्मीति अमृता अमरणत्वधर्म्मास्ते भवन्ति । अथेतरे ये न विदुर्दुःखमेवापियन्ति ॥१० ॥

इदानीं तस्यैव सर्व्वात्मत्वं दर्शयति ॥ सर्व्वाननेति ॥ सर्व्वाण्याननानि शिरांसि ग्रीवाश्चास्येति सर्व्वाननशिरोग्रीवः । सर्व्वेषां भूतानां गुहायां बुद्धौ शेत इति सर्व्वभूतगुहाशयः । सर्व्वव्यापी स भगवान् ऐश्वर्य्यादिसमष्टिः । उक्तञ्च ।

ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥

भगवति यस्मादेवं तस्मात् सर्व्वगतः शिवः ॥ ११ ॥

किञ्च । महानिति ॥ महान् प्रभुः समर्थो वै निश्चयेन

सुनिर्म्मलामिमां प्राप्तिमीशानो ज्योतिरव्ययः
॥ १२ ॥

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदये सन्निविष्टः ।
हृदा मन्वीशो मनसाभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥ १३ ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात ।
स भूमिं विश्वतो वृत्वा अत्यतिष्ठद् दशाङ्गुलम्
॥ १४ ॥

जगदुदयस्थितिसंहारे सत्त्वस्यान्तःकरणस्यैव प्रवर्त्तकः प्रेरयिता । किमर्थमुद्दिश्य सुनिर्म्मलामिमां स्वरूपावस्थालक्षणां प्राप्तिं परमपदप्राप्तिं ईशान ईशिता । ज्योतिःपरिशुद्धो विज्ञानप्रकाशः । अव्ययोऽविनाशी ॥ १२ ॥

अङ्गुष्ठमात्रेति ॥ अङ्गुष्ठमात्रोऽभिव्यक्तिस्थानहृदयसुषिरपरिमाणापेक्षया । पुरुषः पूर्णत्वात् पुरिशयनाद्वा । अन्तरात्मा सर्व्वस्याऽन्तरात्मभूतः स्थितः । सदा जनानां हृदये सन्निविष्टः हृदयस्थेन मनसाऽभिगुप्तः । मन्वीशो ज्ञानेशः । य एतद्विदुरमृतास्ते भवन्ति । पुरुषोऽन्तरात्मेत्युक्तम् ॥ १३ ॥

पुनरपि सर्व्वात्मानं दर्शयति । सहस्रशीर्षेति ॥ सर्व्वस्य तावन्मात्रत्वप्रदर्शनार्थम् । उक्तञ्च । अध्यारोपापवादाभ्यां

पुरुष एवेद ९ सर्व्वं यद्भूतं यच्च भव्यम।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥१५॥
सर्व्वतः पाणिपादन्तत् सर्व्वतोऽक्षिशिरोमुखम
सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति ॥१६॥

निष्प्रपञ्चं प्रपञ्चयत इति। सहस्राण्यनन्तानि शीर्षाण्यस्येति सहस्रशीर्षा। पुरुषः पूर्णः। एवमुत्तरत्र योजनीयं। स भूमिं भुवनं सर्व्वतोऽन्तर्बहिश्च वृत्वा व्याप्यात्यतिष्ठद् अतीत्य भुवनं समधितिष्ठति। दशाङ्गुलं अनन्तमपारमित्यर्थः। अथवा नाभेरुपरि दशाङ्गुलं हृदयं तत्राधितिष्ठति ॥ १४ ॥

ननु सर्व्वात्मत्वे सप्रपञ्चं ब्रह्म स्यात् तद्व्यतिरेकेणाभावादित्याह। पुरुष एवेदमिति ॥ पुरुषएवेदं सर्व्वम्। यद्भूतं यच्च भव्यं। यदन्नेनातिरोहति यदिदं दृश्यते वर्त्तमानं यद्भूतं यच्च भव्यं भविष्यत्। किञ्च। उतामृतत्वस्येशानो अमरणधर्म्मत्वस्य कैवल्यस्य ईशानः। यच्चान्नेनारोहति यद्वर्त्तते तस्य ईशानः ॥ १५ ॥

पुनरपि निर्व्विशेषं प्रतिपादयितुं दर्शयति सर्वत इति ॥ सर्व्वतः पाणयः पादाश्चेति सर्व्वतः पाणिपादं तत्। सर्व्वतोऽक्षीणि शिरांसि च मुखानि च यस्य तत् सर्व्वतोऽक्षिशिरोमुखम् श्रुतिः श्रवणमस्येति श्रुतिमत्। लोके निकाये सर्व्वमावृत्य संव्याप्य तिष्ठति। उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणाज्ज्ञेयस्य तद्वत्ताशङ्का माभूदित्येवमर्थमुत्तरतो मन्त्रः ॥ १६ ॥

सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम।
सर्व्वस्य प्रभुमीशानं सर्व्वस्य शरणं बृहत ॥१৩॥
नवद्वारे पुरे देही हंसो लेलायते वहिः।
वशी सर्व्वस्य लोकस्य स्थावरस्य चरस्य च ॥१८॥
अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः।

सर्व्वेन्द्रियेति॥ सर्व्वाणि च तानीन्द्रियाणि श्रोत्रादीनीन्द्रियाणि अन्तःकरणपर्य्यन्तानि सर्व्वेन्द्रियग्रहणेन गृह्यन्ते। अन्तःकरणवहिःकरणोपाधिभूतः सर्व्वेन्द्रियगुणैरध्यवसायसङ्कल्पश्रवणवदाभासत इति सर्व्वेन्द्रियगुणाभासम्। सर्व्वेन्द्रियैर्व्वा व्रतमिव तज्ज्ञेयमित्यर्थः। ध्यायतीव लेलायतीवेति श्रुतेः। कस्मात् पुनः कारणात्तद्व्याप्तमिवेति गृह्यत इत्याह। सर्व्वेन्द्रियविवर्ज्जितं सर्व्वकारणरहितमित्यर्थः। अतो न च करणव्यापारैर्व्याप्तं तज्ज्ञेयं। सर्व्वस्य जगतः प्रभुमीशानम्। सर्व्वस्य शरणं परायणं ब्रह्मत् कारणञ्च॥ १৩॥

किञ्च। नवद्वारेति। नवद्वारे शिरसि सप्तद्वाराणि द्वे अवाचीपुरे देही विज्ञानात्मा भूत्वा कार्य्यकारणोपाधिः सन् हंसः परमात्मा हन्त्यविद्यात्मकं कार्य्यमिव लेलायते चलति वहिर्व्विषयग्रहणाय। वशी सर्व्वस्य लोकस्य स्थावरस्य चरस्य च। एवं तावत् सर्व्वात्मकं ब्रह्म प्रतिपादितम् ॥१८॥

अथेदानीं निर्व्विकारानन्दस्वरूपेणानुदितानस्तमित ज्ञानात्मनावस्थितं परमात्मानं दर्शयितुमाह। अपाणिपाद

स वेत्ति वेद्यं न च तस्याऽस्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम् ॥ १९ ॥
अणोरणीयान् महतो महीयाना
ऽऽत्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम् ॥ २० ॥

इति ॥ नास्य पाणिपादावित्यपाणिपादः । अथ जवनो दूरगामी । ग्रहीता पाण्याद्यभावेऽपि सर्व्वग्राही । पश्यति सर्व्वमचक्षुरपि सन् । शृणोत्यकर्णोऽपि । स वेत्ति वेद्यं सर्व्वज्ञत्वाद् अमनस्कोऽपि । न च तस्यास्ति वेत्ता नान्योऽतोऽस्ति द्रष्टेति श्रुतेः । तमाहुरग्र्यं प्रथमं सर्व्वकारणत्वात् पुरुषं पूर्णं महान्तम् ॥ १९ ॥

किञ्च । अणोरणीयानिति । अणोः सूक्ष्मादप्यणीयानणुतरः । महतो महत्त्वपरिमाणान् महीयान् महत्तरः । स चात्माऽस्य जन्तोर्ब्रह्मादिस्तम्बपर्य्यन्तस्य प्राणिजातस्य । गुहायां हृदये निहित आत्मभूतः स्थित इत्यर्थः । तमात्मानं अक्रतुं विषयभोगसङ्कल्परहितमात्मनो महिमानं कर्म्मनिमित्तवृद्धिक्षयरहितमीशं पश्यत्ययमहमस्मीति साक्षाज्जानाति यः स वीतशोको भवति । केन तर्ह्यसौ पश्यति । धातुरीश्वरस्य प्रसादात् । प्रसन्ने हि परमेश्वरे तद्याथात्म्यज्ञानमुत्पद्यते । अथवेन्द्रियाणि धातवः शरीरस्य धारणात् तेषां प्रसादाद्विषयदोष बलाद्यपनयनात् । अन्यथा दुर्व्विज्ञेय आत्मा कामिभिः प्राकृतपुरुषैः ॥२० ॥

वेदाहमेतमजरं पुराणं
सर्व्वात्मानं सर्व्वगतं विभुत्वात ।
जन्मनिरोधं प्रवदन्ति यस्य
ब्रह्मवादिनोऽभिवदन्ति नित्यम ॥ २१ ॥

इति श्वेताश्वतरोपनिषत्सु तृतीयोऽध्यायः ॥३॥

॥ ओं तत सत ओं ॥

उक्तमर्थं द्रढयितुं मन्त्रदृगनुभवं दर्शयति ॥ वेदाहमेतमिति वेद जानेऽहमेतमजरं विपरिणामधर्म्मवर्जितं पुराणं पुरातनम् । सर्व्वात्मानं सर्व्वेषामात्मभूतम् । सर्व्वगतं विभुत्वाद् आकाशवद्व्यापकत्वात् । यस्य च जन्मनिरोधं उत्पत्त्यभावं प्रवदन्ति ब्रह्मवादिनो हि नित्यम् । स्पष्टोऽर्थः ॥२१॥ इति श्वेताश्वतरोपनिषद्भाष्ये श्रीशङ्करभगवतः कृतौ तृतीयोऽध्यायः ॥३॥ ओं तत् सत् ओं ॥

य एकोऽवर्णो बहुधा शक्तियोगाद्

वर्णाननेकान् निहितार्थो दधाति ।

विचैति चान्ते विश्वमादौ स देवः

स नो बुद्ध्या शुभया संयुनक्तु ॥ १ ॥

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।

तदेव शुक्रं तद्ब्रह्म तदापस्तत प्रजापतिः ॥२॥

गहनत्वादस्यार्थस्य भूयो भूयो वक्तव्य इति चतुर्थोऽध्याय आरभ्यते । य एक इति ॥ य एकोऽद्वितीयः परमात्मा । अवर्णो जात्यादिरहितो निर्विशेष इत्यर्थः । बहुधा नानाशक्तियोगाद्वर्णाननेकान् निहितार्थो गृहीतप्रयोजनः स्वार्थनिरपेक्ष इत्यर्थः । दधाति विदधाति अदः । विचैति व्येति च अन्ते लयकाले च । चशब्दादेति मध्ये एति यस्मिन् विश्वं स देवो द्योतनस्वभावो विज्ञानैकरस इत्यर्थः । सनोऽस्मान् शुभया बुद्ध्या संयुनक्तु संयोजयतु । यस्मात् स एव सर्व्वम् ॥१ ॥

न ततो विभक्तमस्तीत्याह मन्त्रत्रयेण । तदेवेति ॥ तदेवात्मतत्त्वमग्निः । तदादित्यः । एवशब्दः सर्व्वत्र सम्बध्यते तदेवशुक्रमिति दर्शनात् । शेषमृजु । तदेव शुक्रं शुद्धं अन्यदपि दीप्तिमन्नक्षत्रादि तद्धिरण्यगर्भ आत्मा तदापः स प्रजापतिर्विराडात्मा ॥२॥

त्वं स्त्री त्वं पुमानसि त्वं
कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चयसि
त्वं जातो भवसि विश्वतो मुखः ॥ ३ ॥
नीलः पतङ्गो हरितो लोहिताक्षस
तडिद्गर्भ ऋतवः समुद्राः ।
अनादिमत्त्वं विभुत्वेन वर्त्तसे
यतो जातानि भुवनानि विश्वा ॥ ४ ॥
अजामेकां लोहित कृष्णवर्णां
बह्वीः प्रजाः सृजमानां सरूपां ।

त्वमेवेति सर्व्वत्र सम्बध्यते स्पष्टो मन्त्रार्थः ॥३॥

नीलेति ॥ त्वमेव नीलः पतङ्गो भ्रमरः । पतनाद्गच्छतीति पतङ्गः । हरितो लोहिताक्षः शुकादिनिकृष्टाः प्राणिनस्त्वमेवेत्यर्थः । तडिद्गर्भो मेघः । ऋतवः समुद्राः । यस्मात्त्वमेव सर्व्वस्यात्मभुतस्तस्मादनादिस्त्वमेव । त्वमेवाद्यन्तशून्यः । विभुत्वेन व्यापकत्वेन यतो जातानि भुवनानि विश्वानि ॥ ४ ॥

इदानीं तेजोऽबन्नलक्षणां प्रकृतिं छान्दग्योपनिषत्प्रसिद्धामजरूपकल्पनया दर्शयति । अजामेकामिति ॥ अजां प्रकृतिं लोहितशुक्लकृष्णां तेजोऽबन्नलक्षणां बह्वीः प्रजाः सृजमानामुत्पादयन्तीं ध्यानयोगानुगतदृष्टां देवात्मशक्तिं

अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोग्यामजोऽन्यः ॥ ५ ॥
द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्य-
नश्नन्नन्योऽभिचाकशीति ॥ ६ ॥
समाने वृक्षे पुरुषो निमग्नो

सरूपां समानाकाराम् । अजो ह्येको विज्ञानात्मा । अना-
दिकामकर्म्मविमोहितः स्वयमात्मानं मन्यमानो जुषमाणः
सेवमानोऽनुशेते भजते । अन्य आचार्य्योपदेशप्रकाशावसा-
दिताविद्यान्धकारो जहाति त्यजति ॥ ५ ॥

इदानीं सूत्रभूतौ परमार्थवस्त्ववधारणार्थमुपन्यस्येते
द्वा इति ॥ द्वा द्वौ विज्ञानपरमात्मानौ । सुपर्णा सुपर्णौ शोभ-
नपतनौ शोभनगमनौ सुपर्णौ पक्षिसामान्याद्वा । तौ पर्णौ
सयुजा सयुजौ सर्व्वदा संयुक्तौ । सखाया सखायौ समाना-
ख्यानौ समानाभिव्यक्तिकारणौ। एवम्भूतौ सन्तौ समानमेकं
वृक्षं वृक्षमिवोच्छेदसामान्याद्वृक्षं शरीरं परिषस्वजाते परि-
ष्वक्तवन्तौ समाश्रितवन्तौ एतौ । तयोरन्योऽविद्याकाम-
वासनाश्रयलिङ्गोपाधिर्व्विज्ञानात्मा पिप्पलं कर्म्मफलं सुखदुः-
खलक्षणं स्वादु अनेकविचित्रवेदनास्वादरूपमत्ति उपभुङ्क्ते
विवेकतोऽनश्नन्नन्यो नित्यशुद्धबुद्धमुक्तस्वभावः परमेश्वरोऽभि-
चाकशीति सर्व्वमपि पश्यन्नास्ते ॥ ६ ॥

तत्रैवं सति समाने वृक्षे शरीरे पुरुषो भोक्ता अवि-

अनीशया शोचति मुह्यमानः।
जुष्टं यदा पश्यत्यन्यमीशमस्य
महिमानमिति वीतशोकः॥ ७॥

ध्याकामकर्म्मफलरागादिगुरुभाराक्रान्तोऽलाबुरिव सर्व्वों जलनिमग्नो निश्चयेन देहात्मभावमापन्नोऽयमेवाहं अमुष्य पुत्रोऽस्य नप्ता कृशः स्थूलो गुणवान् निर्गुणः सुखी दुःखी-त्येवं प्रत्ययो नान्योऽस्मादिति जायते म्रियते संयुज्यते च सम्बन्धिबान्धवैः। अतोऽनीशया न कस्यचित् समर्थोऽहम्। पुत्रो मम नष्टो मृता मे भार्य्या किं मे जीवितेन इत्येवं दीनभावोऽनीशया शोचति सन्तप्यते मुह्यमानो ऽनेकैर-नर्थप्रकारैरविवेकतया विचित्रतामापद्यमानः स एव प्रेत-तिर्य्यङ्मनुष्यादियोनिष्वापतन् दुःखमापन्नः कदाचिदनेक-जन्मशुद्धधर्म्मसञ्चयननिमित्तं केनचित् परमकारुणिकेन दर्शितयोगमार्गोऽहिंसासत्यब्रह्मचर्य्यसर्व्वत्यागसमाहितात्मा सन् शमादिसम्पन्नो जुष्टं सेवितमनेकयोगमार्गैर्य्यदा यस्मिन् काले पश्यति ध्यायमानोऽन्यं वृक्षोपाधिलक्षणाद्विलक्षणमसं-सारिणं अशनायाद्यसंस्पृष्टं सर्व्वान्तरं परमात्मानमीशं अयमहमस्मि आत्मा सर्व्वस्य समः सर्व्वभूतान्तरस्थो नेतरो ऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति विभूतिं महिमानं चेति जगद्रूपमस्यैव महिमा परमेश्वरस्येति यदेवं पश्यति तदा वीतशोको भवति सर्व्वस्माच्छोकसागराद्विमुच्यते कृत-कृत्यो भवतीत्यर्थः। अथवा जुष्टं यदा पश्यत्यन्यमीशं अस्यैव प्रत्यगात्मनो महिमानमिति तदा वीतशोको भवति॥ ७॥

ऋचो अक्षरे परमे व्योमन्
यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति
य इत्तद्विदुस्त इमे समासते ॥ ८ ॥

छन्दांसि यज्ञाः क्रतवो व्रतानि

इदानीं तद्विदः कृतार्थतां दर्शयति । ऋच इति ॥ वेदत्रयनिधौ वेदत्रयवेद्ये अक्षरे परमे व्योमन् व्योम्ना-काशकल्पे यस्मिन् देवा अधि विश्वे निषेदुः आश्रिता-स्तिष्ठन्ति । यस्तं परमात्मानं न वेद किमृचा करिष्यति । य इत्तद्विदुस्तइमे समासते कृतार्थास्तिष्ठन्ति ॥ ८ ॥

इदानीं तस्यैवाक्षरस्य मायोपाधिकजगत्स्रष्टृत्वं तन्नि-मित्तत्वं भेदेन दर्शयति । छन्दांसीति ॥ छन्दांसि ऋग्य-जुःसामाथर्व्वाङ्गिरसाख्या वेदा वेदयज्ञादयो यूप-सम्बन्ध-रहितर्त्विक्कृतक्रियाश्च । यज्ञा ज्योतिष्टोमादयः क्रतवः । व्रतानि चान्द्रायणादीनि । भूतं अतीतं । भव्यं भविष्यत् । यदि तयोमध्यवर्त्ति वर्त्तमानं सूचयति चशब्दसमुच्चयार्थः । यज्ञादिसाध्ये कर्म्मणि प्रपञ्चे भूतादौ च वेदा एव माम-मित्येतद् वदन्ति । यच्छब्दः सर्व्वत्र सम्बध्यते । अस्मात् प्रकृताक्षराद् ब्रह्मणः पूर्व्वोक्तं सर्व्वमुत्पद्यत इति सम्बन्धः । अविकारिब्रह्मणः कथं प्रपञ्चोपादानत्वमित्यत आह । मायीति ॥ कूटस्थव्यापिस्वशक्तिवशात् सर्व्वस्रष्टृत्वमुपपन्न-मित्येतत् । विश्वं पूर्व्वोक्तप्रपञ्चं सृजते उत्पादयति । स्वमा-यया कल्पिते तस्मिन् भूतादिप्रपञ्चे माययैवाऽन्यो वसन्

भूतं भव्यं यच्च वेदा वदन्ति ।
यस्मान् मायी सृजते विश्वमेतत्
तस्मिंश्चान्यो मायया सन्निरुद्धः ॥ ९ ॥
मायान्तु प्रकृतिं विद्यान् मायिनन्तु महेश्वरं ।
तस्यावयवभूतैस्तु व्याप्तं सर्व्वमिदं जगत ॥१०॥
यो योनिं योनिमधितिष्ठत्येको

सन्निरुद्धः सम्बद्धः सन् अविद्यावशगो भूत्वा संसारसमुद्रे भ्रमतीत्यर्थः। पूर्व्वोक्तायाःप्रकृतेर्म्मायात्वं तदधिष्ठातृसच्चिदानन्दरूपब्रह्मणस्तदुपाधिवशान्मायित्वञ्च ॥ ९ ॥

चिद्रूपस्य मायावशात् कल्पितावयवभूतैः कार्य्यकारणसङ्घातैः सर्व्वं भूरादीदं परिदृश्यमानं जगद्व्याप्तञ्चेत्याह। मायान्त्विति ॥ जगत्प्रकृतित्वेनाधस्तात् सर्व्वत्र प्रतिपादिता प्रकृतिर्म्मायैवेति विद्याद्विजानीयात्। तुशब्दोऽवधारणार्थः। महांश्चासावीश्वरश्चेति महेश्वरस्तं मायिनं मायायाः सत्तास्फूर्त्त्यादिप्रदतया अधिष्ठानत्वेन प्रेरयितारमेव विद्यादिति पूर्व्वेण सम्बन्धः। तस्य प्रकृतस्य परमेश्वरस्य रज्ज्वाद्यधिष्ठानेषु कल्पितसर्पादिस्थानीयैर्मायिकैः स्वावयवैरध्यासद्वारा इदं भूरादि सर्व्वं व्याप्तमेव पूर्णमित्येतत्। तुशब्दस्त्ववधारणार्थः ॥ १० ॥

मायातत्कार्य्यादियोनेः कूटस्थस्य सर्व्वात्मनोऽधिष्ठातृत्वं वियदादिकार्य्याणामुत्पत्तिहेतुत्वं तेनैव सर्व्वाधिष्ठातृत्वोपलक्षितसच्चिदानन्दवपुषा ब्रह्मात्मत्वेनात्वज्ञानान्मुक्तिञ्च दर्शयति। यो योनिमिति यो मायाविनिर्म्मुक्तानन्दैकघनः

यस्मिन्निदं स च विचैति सर्व्वं ।
तमीशानं वरदं देवमीड्यं
निचाय्येमां शान्तिमत्यन्तमेति ॥ ११ ॥

यो देवानां प्रभवश्चोद्भवश्च
विश्वाधिपो रुद्रो महर्षिः ।

परमेश्वरः । योनिं योनिमिति वीप्सया मूलप्रकृतिर्म्मायाः अवान्तरप्रकृतयश्च सूचिताः । ताः प्रकृतीः सत्तास्फूर्त्तिप्रदत्वेनाधिष्ठाय तिष्ठति अन्तर्य्यामिरूपेण । य आकाशे तिष्ठन्नित्यादिश्रुतेः । एको ऽद्वितीयः । यस्मिन्मायाद्यधिष्ठातरीश्वरे इदं सर्व्वं जगदुदयसंहारकाले समेति सङ्गच्छते लयं प्राप्नोति । पुनः सृष्टिकाले विविधमेति आकाशादिरूपेण नाना भवति । तं प्रकृतमधिष्ठातारमीशानं नियन्तारम् । वरदं मोक्षप्रदम् । देवं द्योतनात्मकम् । ईड्यं वेदादिस्तुत्यं निचाय्य निश्चयेन ब्रह्माहमस्मीत्यपरोक्षीकृत्य । सुषुप्त्यादौ प्रत्यक्षीकृता या सर्व्वोपरमलक्षणा सार्व्वजनी शान्तिर्येदमा दर्शिता तां प्रसिद्धामिमां शान्तिं सर्व्वदुःखविनिर्म्मुक्तः सुखैकतानस्वरूपां मुक्तिमिति यावत् । गुरूपदिष्टतत्त्वमादिवाक्यजन्यसुखलब्धानेनाविद्यातत्कार्य्यादिविश्व मायानिवृत्त्याऽत्यन्तं पुनरावृत्तिरहितं यथा भवति तथा एति एकरसो भवतीत्येतत् ॥ ११ ॥

स्वात्मानं प्रत्यविरतमभिमुखतया वीक्षन्तं परमेश्वरं

हिरण्यगर्भं पश्यत जायमानं
स नो बुद्ध्या शुभया संयुनक्तु ॥ १२ ॥
यो देवानामधिपो यस्मिंल्लोका अधिश्रिताः ।
य ईशेऽस्य द्विपदश्चतुष्पदः कस्मै
देवाय हविषा विधेम ॥ १३ ॥
सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये

प्रति अखण्डिततत्त्वज्ञानसिद्धये प्रार्थनामाह । यो देवानामिति ॥ पूर्व्वमेवास्य प्रतिपादितोऽर्थः ॥ १२ ॥

ब्रह्मप्रमुखानां देवानां स्वामितामाकाशादिलोकाश्रयत्वं प्रमात्रादीनां नियन्तृत्वं बुद्धिशुद्धिद्वारा सम्यक्ज्ञानसिद्ध्यर्थं मुमुक्षुभिः प्रार्थ्यमानत्वञ्च परमेश्वरस्याह । यो देवानामधिप इति ॥ प्रकृतः परमेश्वरो देवानां ब्रह्मादीनामधिपः स्वामी । यस्मिन् परमेश्वरे सर्व्वकारणे भूरादयो लोका अधिश्रिता अधि उपरि श्रिता अध्यस्ता इति यावत् । प्रकृतः परमेश्वरः । अस्य द्विपदो मनुष्यादेश्चतुष्पदः पश्वादेरीशे ईष्टे । तकारलोपश्छान्दसः । कस्मै कायान्तरूपाय । स्मैभावोऽपि छान्दसः । देवाय द्योतनात्मने तस्मै हविषा चरुपुरोडाशादिद्रव्येण विधेम परिचरेम । विधेः परिचरणकर्म्मण एतद्रूपम् ॥ १३ ॥

परस्यातिसूक्ष्मत्वं जगच्चक्रे साक्षित्वेनावस्थितत्वं निखिलजगत्स्रष्टृत्वं सर्व्वात्मकत्वं तत्तादर्थ्यजनानां मुक्तिश्चेत्येतदृग्भ्योऽधस्तात् प्रतिपादितं यद्यपि तथापि बुद्धि-

विश्वस्य स्रष्टारमनेकरूपं ।
विश्वस्यैकं परिवेष्टितारं
ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥ १४ ॥
स एव काले भुवनस्यास्य गोप्ता
विश्वाधिपः सर्व्वभूतेषु गूढः ।
यस्मिन् युक्ता ब्रह्मर्षयो देवताश्च
तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥ १५ ॥

सौकर्य्यार्थं पुनरप्याह । सूक्ष्मेति ॥ पृथिव्याद्यव्याकृतान्त-मुत्तरोत्तरं सूक्ष्मसूक्ष्मतरत्वमपेक्ष्येश्वरस्य तदपेक्षया सूक्ष्मतम-त्वमाह । सूक्ष्मातीति ॥ कलिलस्याऽविद्यातत्कार्य्यात्म-कद्रुमस्य गहनस्य मध्ये अन्तःसाक्षिरूपेणावस्थितत्वं सनका-दिभिर्ब्रह्मर्षिदेवैश्चाधिकारिपुरुषैरभ्यासतया गम्यत्वं साध-नचतुष्टयादियुक्तसदाहिना ॥ १४ ॥

मोक्षसिद्धिमाह सएवेति ॥ स एव प्रकृतकाले अतीत-कल्पेषु जीवसञ्चितकर्म्मपरिपाकसमये भुवनस्य गोप्ता तत्तत्कर्म्मानुगुण्यतया रक्षिता । विश्वाधिपः विश्वस्वामी । सर्व्वभूतेषु गूढो ब्रह्मादिस्तम्बपर्य्यन्तेषु साक्षिमात्रतयाऽव-स्थितः । यस्मिन् चिद्घनानन्दवपुषि परे युक्ता ऐक्यं प्राप्ताः ।

ते के । ब्रह्मर्षयः सनकादयः । तमेवेश्वरं ज्ञात्वा

ब्रह्माहमस्मीत्यपरोक्षीकृत्य मृत्युपाशान् । मृत्युरविद्या तमोरूपाद्यस्य पाशाः पश्यन्त इति पाशास्तान् । मृत्युर्वै तमः इति श्रुतेः । तत्कार्य्यकामकर्म्म छिनत्ति नाशयति ऐक्यरूपसम्यक्ज्ञानाग्निना दहतीत्यर्थः ॥ १५ ॥

घृतात् परं मण्डमिवातिसूक्ष्मं
ज्ञात्वा शिवं सर्व्वभूतेषु गूढं।
विश्वस्यैकं परिवेष्टितारं
ज्ञात्वा देवं मुच्यते सर्व्वपाशैः॥ १६॥
एष देवो विश्वकर्म्मा महात्मा
सदा जनानां हृदये सन्निविष्टः।

परस्यात्यन्तातिसूक्ष्मतमत्वमानन्दातिशयवत्त्वं निर्दोषवत्त्वं जीवेष्विति सूक्ष्मतया स्वरूपेणावस्थानत्वं सर्व्वस्यापि सत्तादिप्रदतया व्यापित्वं तदेकत्वज्ञानात् पाशहानिञ्च दर्शयति। घृतादिति॥ घृतोपरि विद्यमानं मण्डं सारस्तद्वतामतिप्रीतिविषयो यथा तथा मुमुक्षूणामतिसाररूपानन्दप्रदत्वेन निरतिशयप्रीतिविषयः परमात्मा तद्वद्घृतसारवदानन्दरूपेणात्यन्तसूक्ष्मं ज्ञात्वा शिवमित्येतद्व्याख्यातम्। सर्व्वभूतेषु गूढं ब्रह्मादिस्तम्बपर्य्यन्तेषु जन्तुषु कर्म्मफलभागसाक्षित्वेन प्रत्यक्षतया वर्त्तमानेऽपि तैस्तिरस्कृतेश्वरभावम्। उत्तरार्द्धं व्याख्यातम्॥ १६॥

निर्भेदसुखैकतानात्मनो विश्वकर्त्तृत्वं तद्व्यापित्वं सन्यासिभिराप्तव्यमोक्षरूपञ्चाह। एष इति॥ एषः प्रकृतो देवो द्योतनात्मकः। विश्वकर्म्मा महदादिविश्वं कर्म्म क्रियत इति कर्म्म मायावेशाद् विश्वरूपकार्य्यमस्येति विश्वकर्म्मा। महांश्चासावात्मेति महात्मा सर्व्वव्यापीत्यर्थः। सदा सर्व्वदा जनानां हृदये परमे व्योम्नि हृदाकाशे जलाद्युपाधिषु सूर्य्य-

हृदा मनीषा मनसाऽभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥ १७ ॥
यदाऽतमस्तन्न दिवा न रात्रि-
र्न सन्नचासंछिव एव केवलः ।

प्रतिविम्ववन्निविष्टः सम्यक्कल्पित इत्येतत् । स एव साक्षि-
रूपेण हृदा हृञ् हरण इति स्मरणाद्धरतीति हृत् तेन हृदा
नेति नेतीति निषेधोपदेशेन । मनीषा अयं पुरुषार्थोऽयमात्मा
पुरुषार्थोऽयमात्माऽयमनात्मेत्येतया विवेकबुद्ध्या । मन-
सापि विचारसाध्यैकत्वज्ञानेन च । अभिक्लृप्तः प्रकाशितोऽ-
खण्डैकरसत्वेनाभिव्यक्त इत्येतत् । ये जना साधनच-
तुष्टयसम्पन्नाः सन्यासिन एतत्तत्त्वमस्यादिवाक्यप्रतिपाद्यै-
कत्वरूपमखण्डैकरसमिति यावत् । विदुः ब्रह्माहमस्मीत्य-
परोक्षीकुर्य्युस्ते यथोक्तज्ञानिनोऽमृता भवन्ति अमरणधर्म्माणः
पुनरावृत्तिरहिता भवन्तीत्यर्थः ॥ १७ ॥

कालत्रयेऽपि सुप्तौ प्रियादौ च परमात्मा कूटस्थ इति
निश्चयाज्जाग्रत्स्वप्नयोरपि भ्रान्त्या सद्वितीयत्वावभासः । वस्तु-
तस्तु सदा निर्भेद एवेत्याह । यदेति ॥ यदा यस्यामवस्थाया-
मतमो न तमोऽस्येत्यतमः तत्त्वमादिवाक्यजन्यज्ञानेन दीप-
स्थानीयेन दग्धाविद्यातत्कार्य्यरूपतमस्कत्वात् तदा तत्का-
ले न दिवा दिवारोपोऽपि नास्ति न रात्रिस्तत्रारोपोऽपि
नास्तीति सर्व्वत्रानुषङ्गः । न सत् सत्तारोपोऽपि । नासन्न
सभावारोपोऽपि । तर्हि तत्त्वं सर्व्वं वा शून्यमेव जातमिति
बौद्धमतविशेषमाशङ्क्याह । शिव एवेति ॥ शिव एव स्व-

तदक्षरं तत् सवितुर्वरेण्यं
प्रज्ञा च तस्मात् प्रसृता पुराणी ॥ १८ ॥
नैनमूर्द्ध्वं न तिर्य्यञ्चं न मध्ये परिजग्रभत् ।
न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ॥१९॥
न सन्दृशे तिष्ठति रूपमस्य

स्वभावो निर्व्विकल्पः शून्यमेवेति निपातार्थः। केवलो-ऽविद्यादिविकल्पशून्यः। तदक्षरं तदुक्तस्वरूपं न क्षरतीत्य-क्षरं नित्यं तत् तत्पदलक्ष्यम्। सवितुरादित्यादिमण्डलाभि-मानिनो वरेण्यं सम्भजनीयं प्रज्ञागुरूपदेशात् तत्त्वमस्यादिवा-क्यजा बुद्धिः। चकार एवकारार्थः। तस्माच्छुक्लहेतोः प्रसृता नित्या विवेकादिमत्सु सन्न्यासिषु व्याप्ता पूर्णत्वा-कारेव। पुराणी ब्रह्माणमनारभ्य परम्परया प्राप्ता प्रागादिसिद्धा ॥ १८ ॥

कूटस्थस्य ब्रह्मण ऊर्द्ध्वादिषु दिक्षु केनाप्यपरिग्राह्यत्व-मद्वितीयत्वात् केनाप्यतुलितत्वं कालदिगाद्यनवच्छिन्नयशो-रूपत्वञ्चाह। नैनमिति॥ एनं प्रकृतं अपरिच्छिन्नरूपत्वा-न्निरंशत्वान्निरवयवत्वाच्च ऊर्द्ध्वादिषु दिक्षु कश्चिदपि न परि-जग्रभत् परिग्रहीतुं न शक्नुयात्। तस्य तस्यैवेश्वरस्याखण्ड-सुखानुभवत्वादेतादृशद्वितीयाभावात् प्रतिमा उपमा नास्ति। यस्य नाम महद्यशो यस्येश्वरस्य नाम अभिधानं मह-द्दिगाद्यवच्छिन्नं सर्व्वत्र परिपूर्णं यशः कीर्त्तिः ॥ १९ ॥

ईश्वरस्येन्द्रियाद्यविषयत्वां प्रत्यग्रूपतां तदेकगम्यतां सोप-नायाह। न सन्दृश इति॥ अस्य प्रकृतेश्वरस्य रूपं स्वरूपं

हृदा मनीषा मनसाऽभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥ १७ ॥
यदाऽतमस्तन्न दिवा न रात्रि-
र्न सन्नचासंच्छिव एव केवलः ।

प्रतिविम्बवन्निविष्टः सम्यक्स्थित इत्येतत् । स एव साक्षि-रूपेण हृदा हृञ्‌हरण इति स्मरणाद्धरतीति हृत् तेन हृदा नेति नेतीति निषेधोपदेशेन । मनीषा अयं पुरुषार्थोऽयमात्मा पुरुषार्थोऽयमात्माऽयमनात्मेत्येतया विवेकबुद्ध्या । मन-सापि विचारसाध्यं कल्पज्ञानेन च । अभिक्लृप्तः प्रकाशितोऽ-खण्डैकरसत्वेनाभिव्यक्त इत्येतत् । ये जना साधनच-तुष्टयसम्पन्नाः सन्यासिन एतत्तत्त्वमस्यादिवाक्यप्रतिपाद्यै-कत्वरूपमखण्डैकरसमिति यावत् । विदुः ब्रह्माहमस्मीत्य-परोक्षीकुर्य्युस्ते यथोक्तज्ञानिनोऽमृता भवन्ति अमरणधर्माणः पुनरावृत्तिरहिता भवन्तीत्यर्थः ॥ १७ ॥

कालत्रयेऽपि सुप्तौ प्रियादौ च परमात्मा कूटस्थ इति निश्चयाज्जाग्रत्स्वप्नयोरपि भ्रान्त्या सद्वितीयत्वावभासः । वस्तु-तस्तु सदा निर्भेद एवेत्याह । यदेति ॥ यदा यस्यामवस्थाया-मतमो न तमोऽस्येत्यतमः तत्त्वमादिवाक्यजन्यज्ञानेन दीप-स्थानीयेन दग्धाविद्यातत्कार्य्यरूपतमस्कत्वात् तदा तत्का-ले न दिवा दिवारोपोऽपि नास्ति न रात्रिस्तदारोपोऽपि नास्तीति सर्वत्रानुषङ्गः । न सत् सदारोपोऽपि । नासत् अभावारोपोऽपि । तर्हि तत्त्वं सन्न्व शून्यमेव जातमिति बौद्धमतविशेषमाशङ्क्याह । शिव एवेति ॥ शिव एव मङ्ग-

तदक्षरं तत् सवितुर्वरेण्यं

प्रज्ञा च तस्मात् प्रसृता पुराणी ॥ १८ ॥

नैनमूर्द्ध्वं न तिर्य्यञ्चं न मध्ये परिजग्रभत्।

न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ॥१९॥

न सन्दृशे तिष्ठति रूपमस्य

स्वभावो निर्व्विकल्पः शून्यमेवेति निपातार्थः। केवलोऽविद्यादिविकल्पशून्यः। तदक्षरं तदुक्तस्वरूपं न क्षरतीत्यक्षरं नित्यं तत् तत्पदलक्ष्यम्। सवितुरादित्यादिमण्डलाभिमानिनो वरेण्यं सम्भजनीयं प्रज्ञा गुरूपदेशात् तत्त्वमस्यादिवाक्यजा बुद्धिः। चकार एवकारार्थः। तस्माच्छुद्धत्वहेतोः प्रसृता नित्या विवेकादिमत्सु सन्न्यासिषु व्याप्ता पूर्णत्वात्कारिव। पुराणी ब्रह्माणमनारभ्य परम्परया प्राप्ता अनादिसिद्धा ॥ १८ ॥

कूटस्थस्य ब्रह्मण ऊर्द्ध्वादिषु दिक्षु केनाप्यपरिग्राह्यत्वमद्वितीयत्वात् केनाप्यतुलितत्वं कालदिगाद्यनवच्छिन्नयशोरूपत्वञ्चाह। नैनमिति॥ एनं प्रकृतं अपरिच्छिन्नरूपत्वान्निरंशत्वान्निरवयवत्वाच्च ऊर्द्ध्वादिषु दिक्षु कश्चिदपि न परिजग्रभत् परिग्रहीतुं न शक्नुयात्। तस्य तस्यैवेश्वरस्याखण्डसुखानुभवत्वादेतादृशद्वितीयाभावात् प्रतिमा उपमा नास्ति। यस्य नाम महद्यशो यस्येश्वरस्य नाम अभिधानं महद्दिगाद्यवच्छिन्नं सर्व्वत्र परिपूर्णं यशः कीर्त्तिः ॥ १९ ॥

ईश्वरस्येन्द्रियाद्यविषयत्वं प्रत्यग्रूपतां तद्दर्शनमार्गं मोक्षं नाह। न सन्दृश इति॥ अस्य प्रकृतेश्वरस्य रूपं स्वरूपं

न चक्षुषा पश्यति कश्चनैनं।
हृदा हृदिस्थं मनसा य एन-
मेवं विदुरमृतास्ते भवन्ति ॥ २० ॥
अजात इत्येवं कश्चिद्भीरुः प्रतिपद्यते।

रूपादिरहितं निर्विशेषं स्वप्रकाशाखण्डसुखानुभवं सन्दृशे चक्षुरादिग्रहणयोग्यप्रदेशे न तिष्ठति तद्विषयो न भवतीत्येतत्। इन्द्रियागोचरत्वादेवैनं प्रकृतं चक्षुरित्युपलक्षणम्। सर्व्वेन्द्रियैरपि कश्चन कोऽपि न पश्यति तद्विषयतया ग्रहीतुं न शक्नुयात्। यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यतीत्यादिश्रुतेः। हृदा शुद्धबुद्ध्या। एतद्व्याख्यातं मनसेति। हृदिस्थं हृदाकाशगुहास्थं प्रत्यक्तया तत्रावस्थितम्। ये साधनचतुष्टयादियुक्ताः सन्न्यासिनो योग्याधिकारिण एवं प्रकृतं ब्रह्मात्मनामेवमित्थं ब्रह्माहमस्मीत्यपरोक्षेण विदुर्जानन्ति तेनापरोक्षीकरणमहिम्नाऽमृता भवन्ति अमरणधर्म्माणो भवन्ति। मरणहेत्वविद्यादेस्तत्त्वज्ञानाग्निना दग्धत्वात् पुनर्देहान्तरं न भजन्तीत्यर्थः ॥ २० ॥

इदानीं तत्प्रसादादेव इष्टानिष्टप्राप्तिपरिहाराविति मत्वा तमेव परमेश्वरं प्रार्थयते मन्त्रद्वयेन। अजात इति। इतिशब्दो हेत्वर्थः। यस्मात्त्वमेवाजातो जन्मजराशनायापिपासाधर्म्मवर्ज्जितः। इतरत् सर्व्वं विनाशि दुःखान्वितम्। तस्माज्जन्मजरामरणाशनायापिपासाशोकमोहान्वितात् संसाराद्भीरुर्भीतः सन् कश्चिदेक एव परतन्त्रस्त्वामेव शरणं प्रपद्ये मादृशो वा कश्चित् प्रपद्यत इति प्रथमपुरुषमन्वधीयते।

रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यं ॥२१॥

मा नस्तोके तनये मा न आयुषि
मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्रभामितोऽवधी-
र्हविष्मन्तः सदसि त्वा हवामहे ॥ २२ ॥

इति श्वेताश्वतरोपनिषत्सु चतुर्थोऽध्यायः ॥४॥

हे रुद्र! यत्ते दक्षिणं मुखं उत्साहजननं ध्यातमाह्लादकरमित्यध्याहार्य्यं । अथवा दक्षिणस्यां दिशि भवं दक्षिणं मुखं तेन मां पाहि नित्यं सर्व्वदा ॥ २१ ॥

किञ्च ॥ मा न इति ॥ मा रीरिष इति सर्व्वत्र सम्बध्यते । मा रीरिषः । रोषणं मरणं विनाशं माकार्षीः । नोऽस्माकं तोके पुत्रे तनये पौत्रे न आयुषि । मा नो गोषु मा नो ऽश्वेषु शरीरिषु । ये चास्माकं वीरा विक्रमन्तो भृत्यास्तान् हे रुद्र! भामितः क्रोधितः सन्नवधीः । कस्मात् यस्माद्धविष्मन्तो हविषा युक्ताः सदसि त्वा हवामहे अस्मिन् सदसि त्वामाह्वयाम इत्यर्थः ॥ २२ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ श्वेताश्वतरोपनिषद्भाष्ये चतुर्थोऽध्यायः ॥ ४ ॥ ओं तत्सत् ओं ॥

द्वे अक्षरे ब्रह्मपरे त्वनन्ते
विद्याऽविद्ये निहिते यत्र गूढे ।
क्षरन्त्वविद्या ह्यमृतं तु विद्या
विद्याविद्ये ईशते यस्तु सोऽन्यः ॥ १ ॥
यो योनिं योनिमधितिष्ठत्येको

चतुर्थाध्यायशेषमपूर्व्वार्थं प्रतिपादयितुं पञ्चमोऽध्याय आरभ्यते । द्वे अक्षर इत्यादिना ॥ द्वे विद्याऽविद्ये यस्मिन्नक्षरे ब्रह्मणो हिरण्यगर्भात् परे ब्रह्मपरे परस्मिन् वा ब्रह्मणि अनन्ते देशतः कालतो वस्तुतो वा अपरिच्छिन्ने । यत्र यस्मिन् द्वे विद्याऽविद्ये निहिते स्थापिते गूढेऽनभिव्यक्ते । विद्याऽविद्ये विविच्य दर्शयति । क्षरन्त्वविद्या क्षरणहेतुः संसृतिकारणम् । अमृतन्तु विद्या मोक्षहेतुः । यस्तु पुनर्व्विद्याऽविद्ये ईशते नियमयति स ताभ्यामन्यस्तत्साक्षित्वात् ॥ १ ॥

कोऽसावित्याह । यो योनिमिति ॥ यो योनिं योनिं स्थानं स्थानं यः पृथिव्यां तिष्ठन्नित्यादिनोक्तानि पृथिव्यादीनि अधितिष्ठति नियमयति । एकोऽद्वितीयः परमात्मा । विश्वानि रोहितादीनि रूपाणि योनीश्च प्रभवस्थानानि अधितिष्ठति । ऋषिं सर्व्वज्ञमित्यर्थः । कपिलं कनकं कपिलवर्णं प्रसूतं स्वेनैवोत्पादितम् । हिरण्यगर्भं जनयामास पूर्व्वमित्यस्यैव जन्मश्रवणात् । अन्यस्य वा श्रवणात् । उत्तरत्र । यो ब्रह्माणं विदधाति पूर्व्वम् ।

विश्वानि रूपाणि योनीश्च सर्व्वाः ।
ऋषिं प्रसूतं कपिलं यस्तमग्रे
ज्ञानैर्बिभर्त्ति जायमानञ्च पश्येत ॥ २ ॥
एकैकं जलं बहुधा विकुर्व्व-

यो वै देशांश्च प्रहिणोति तस्मा इति वक्ष्यमाणत्वात् । कपिलोऽग्रज इति पुराणवचनात् । कपिलो हिरण्य-गर्भो वा निर्द्दिश्यते ।

कपिलर्षिर्भगवतः सर्व्वभूतस्य वै किल ।
विष्णोरंशो जगन्मोहनाशाय समुपागतः ॥
कृते युगे परं ज्ञानं कपिलादिस्वरूपधृक् ।
ददाति सर्व्वभूतात्मा सर्व्वस्य जगतो हितम् ॥
त्वं शक्रः सर्व्वदेवानां ब्रह्मा ब्रह्मविदामसि ।
वपुर्बलवतां देवो योगिनां त्वं कुमारकः ॥
ऋषीणाञ्च वसिष्ठस्त्वं व्यासो वेदविदामसि ।
साङ्ख्यानां कपिलो देवो रुद्राणामसि शङ्करः ॥

इति परमर्षिः प्रसिद्धः । ततस्तदानीन्तु भुवनमस्मिन् प्रवर्त्तते कपिलं कवीनाम् । स षोडशात्मो पुरुषस्य विष्णो-र्विराजमानं तमसः परस्तादिति । श्रूयते मुण्डकोपनि-षदि स एव वा कपिलः प्रसिद्धः । अग्रे सृष्टिकाले यो ज्ञानैर्धर्म्मज्ञानवैराग्यैश्वर्य्यैर्बिभर्त्ति बभार जायमानञ्च पश्ये-दपश्यदित्यर्थः ॥ २ ॥

किञ्च । एकैकमिति ॥ सुरनरतिर्य्यगादीनां सृजति जालमेकैकं प्रत्येकं बहुधा नानाप्रकारं विकुर्व्वन् सृष्टि-

अस्मिन् क्षेत्रे संहरत्येष देवः।
भूयः सृष्ट्वा यतयस्तथेशः
सर्व्वाधिपत्यं कुरुते महात्मा ॥ ३ ॥

सर्व्वा दिश ऊर्द्ध्वमधश्च तिर्य्यक्
प्रकाशयन् भ्राजते यद्वनड्वान्
एवं स देवो भगवान् वरेण्यो
योनिस्वभावानधितिष्ठत्येकः ॥ ४ ॥

कालेऽस्मिन् मायात्मके क्षेत्रे। संहरत्येष देवः। भूयः पुनर्य्यो लोकानां तयोर्मरीच्यादयस्तान् सृष्ट्वा तथा। यथा पूर्व्वस्मिन् कल्पे सृष्टवानीशः सर्व्वाधिपत्यं कुरुते महात्मा ॥ ३ ॥

किञ्च ॥ सर्व्वा दिश इति ॥ सर्व्वा दिशः प्राच्याद्या ऊर्द्ध्वमुपरिष्टादधश्चाधस्तात् तिर्य्यक् पार्श्वदिशश्च प्रकाशयन् स्वात्मचैतन्यज्योतिषा प्रकाशते भ्राजते दीप्यते ज्योतिषा यत् उ अनड्वान् यद्वदित्यर्थः। यथाऽनड्वानादित्यो जगच्चक्रानुभावने युक्तः। एवं स देवो द्योतनस्वभावो भगवानैश्वर्य्यादिसमन्वितः। वरेण्यो वरणीयः सम्भजनीयः। निष्कारणं कृत्स्नजगतःस्वभावान् स्वात्मभूतान् पृथ्व्यादीन् भावान् अथवा कारणस्वभावान् पृथिव्यादीनधितिष्ठति नियमयति। एकोऽद्वितीयः परमात्मा ॥ ४ ॥

यश्च स्वभावं पचति विश्वयोनिः
पाच्यांश्च सर्व्वान् परिणामयेद्यः ।
सर्व्वमेतद्विश्वमधितिष्ठत्येको
गुणांश्च सर्व्वान् विनियोजयेद्यः ॥ ५ ॥
तद्वेदगुह्योपनिषत्सु गूढं
तद्ब्रह्मा वेदते ब्रह्मयोनिम ।
ये पूर्व्वं देवा ऋषयश्च तद्विदुस
ते तन्मया अमृता वै बभूवुः ॥ ६ ॥

यश्च स्वभावमिति ॥ यच्च यश्चेति लिङ्गव्यत्ययः । स्वभावं यदग्नेरौष्ण्यं पचति निष्पादयति विश्वस्य जगतो योनिः । पाच्यांश्च पाकयोग्यान् पृथिव्यादीन् परिणामयेद्यः । सर्व्वमेतद्विश्वमधितिष्ठति नियमयत्येकः । गुणांश्च सत्त्वरजस्तमोरूपान् विनियोजयेद्यः । एवं लक्षणः ॥ ५ ॥

किञ्च ॥ वेदगुह्य इति ॥ तत् प्रकृतमात्मस्वरूपं वेदानां गुह्योपनिषदो वेदगुह्योपनिषदस्तासु वेदगुह्योपनिषत्सु गूढं संवृतं ब्रह्मा हिरण्यगर्भो वेदते जानाति ब्रह्मयोनिं वेदप्रमाणकमित्यर्थः । अथवा ब्रह्मणो हिरण्यगर्भस्य योनिं वेदस्य वा ये पूर्व्वं देवा रुद्रादय ऋषयश्च वामदेवादयस्ते तद्विदुस्ते तन्मयास्तदात्मभूताः सन्त अमृता अमरणधर्म्माणो बभूवुः । तथेदानीन्तनोऽपि तमेव विदित्वाऽमृतो भवतीति वाक्यशेषः । एतावत्पदार्थ उपवर्णितः ॥ ६ ॥

गुणान्वयो यः फलकर्मकर्त्ता
कृतस्य तस्यैव स चोपभोक्ता ।
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा
प्राणाधिपः सञ्चरति स्वकर्मभिः ॥ ७ ॥
अङ्गुष्ठमात्रो रवितुल्यरूपः
सङ्कल्पाहङ्कारसमन्वितो यः ।
बुद्धेर्गुणेनात्मगुणेन चैव
आराग्रमात्रोऽप्यपरोऽपि दृष्टः ॥ ८ ॥

अथेदानीं त्वंपदार्थमुपवर्णयितुमुत्तरे मन्त्राः प्रस्तूयन्ते । गुणान्वय इति ॥ गुणैः कर्मज्ञानकृतवासनामयैरन्वयो यस्य सोऽयं गुणान्वयः । फलार्थस्य कर्मफलस्य स एवोपभोक्ता । स विश्वरूपो नानारूपः कार्य्यकारणोपचितत्वात् । त्रयः सत्त्वादयो गुणा अस्येति त्रिगुणः । त्रयो देवयानादयो मार्गभेदा अस्येति त्रिवर्त्मा । धर्माधर्मज्ञानमार्गभेदा अस्येति प्राणस्य पञ्चवृत्तेरधिपः सञ्चरति । कैः । स्वकर्मभिः ॥ ७ ॥

अङ्गुष्ठमात्रोऽङ्गुष्ठपरिमितहृदयसुषिरापेक्षया । रवितुल्यरूपो ज्योतिःस्वरूप इत्यर्थः । सङ्कल्पाहङ्कारादिना समन्वितः । बुद्धेर्गुणेनात्मगुणेन च जरादिना । उक्तं जरामृत्यू शरीरस्येति । आराग्रमात्रः प्रतोदाग्रप्रोतलोहकण्टकाग्रमात्रोऽपरोऽपि ज्ञानात्मा दृष्टोऽवगतः । अपिशब्द

वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥९॥
नैव स्त्री न पुमानेष न चैवायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स रक्ष्यते ॥१०॥
संकल्पनस्पर्शनदृष्टिमोहै-
र्ग्रासाम्बुवृष्ट्यात्मविवृद्धजन्म ।

एकः सम्भावनायां अपरोऽप्यौपाधिको जलसूर्य्य इव जीवात्मा सम्भावित इत्यर्थः ॥ ८ ॥

पुनरपि दृष्टान्तान्तरेण दर्शयति ॥ वालाग्रेति ॥ वालाग्रस्य शतकल्पो भेदमाधादितस्य यो भागस्तस्यापि शतधा कल्पितस्य भागो जीवः स विज्ञेयः । लिङ्ग-स्यातिसूक्ष्मत्वात् । तत्परिमाणेनाऽयं व्यपदिश्यते । स च जीवस्वरूपेणानन्त्याय कल्पते स्वतः ॥ ९ ॥

किञ्च । नैव स्त्रीति ॥ स्वतोऽद्वितीयापरोक्षब्रह्मा-त्मस्वभाववत्त्वान्नैव स्त्री न पुमानेष नैव चाऽयं नपुंसकः । यद्यत् स्त्रीशरीरं पुरुषशरीरं वाऽऽदत्ते तेन तेन स च विज्ञानात्मा रक्ष्यते संरक्ष्यते । तत्तद्धर्मा नात्मन्यध्यस्या-भिमन्यते । मुक्तोऽहं कृशोऽहमहं पुमानहं स्त्री अहं नपुंसक इति ॥ १० ॥

येन तत्त्वंसो शरीराण्यादत्त इत्याह ॥ सङ्कल्पनेति ॥ प्रथमं सङ्कल्पनम् । ततः स्पर्शनं त्वगिन्द्रियव्यापारः । ततो दृष्टिविधानम् । ततो मोहः । तैः सङ्कल्पनस्पर्शन-

कर्म्मानुगान्यनुक्रमेण देही
स्थानेषु रूपाण्यभिसम्प्रपद्यते ॥ ११ ॥
स्थूलानि सूक्ष्माणि बहूनि चैव
रूपाणि देही स्वगुणैर्वृणोति ।
क्रियागुणैरात्मगुणैश्च तेषां
संयोगहेतुरपरोऽपि दृष्टः ॥ १२ ॥
अनाद्यनन्तं कलिलस्य मध्ये
विश्वस्य स्रष्टारमनेकरूपम ।

दृष्टिमोहैः शुभाशुभानि कर्म्माणि निष्पद्यन्ते । ततः कर्म्मानुगानि कर्म्मानुसारीणि स्त्रीपुंनपुंसकलक्षणानि अनुक्रमेण परिपाकापेक्षया । देही मर्त्यः । स्थानेषु देवतिर्य्यङ्मनुष्यादिष्वभिसम्प्रपद्यते । तत्र दृष्टान्तमाह । ग्रासाम्बुनोरन्नपानयोरनियतयोर्वृष्टिरासेचनं निदानमात्मनः शरीरस्य वृद्धिर्जायते यथा तद्वदित्यर्थः ॥ ११ ॥

स्थूलानीति ॥ स्थूलान्यश्मादीनि । तानि च सूक्ष्माणि तैजसधातुप्रभृतीनि । बहूनि देवादिशरीराणि । देही विज्ञानात्मा स्वगुणैर्विहितप्रतिषिद्धविषयानुभवसंस्कारैर्वृणोति आवृणोति । ततस्तत्तत्क्रियागुणैरात्मगुणैश्च स देही अपरोऽपि देहान्तरसंयुक्तो भवतीत्यर्थः ॥ १२ ॥

स एवमविद्याकामकर्म्मफलरागादिगुरुभाराक्रान्तोऽलाबुरिव सान्द्रजलनिमग्नो निश्चयेन देहाहंभावमापन्नः प्रेततिर्य्यङ्मनुष्यादिज्योतिष्यावजवी जवीभावमापन्नः

विश्वस्यैकं परिवेष्टितारं
ज्ञात्वा देवं मुच्यते सर्व्वपाशैः ॥ १३ ॥
भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् ।
कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम्॥१४।
इति श्वेताश्वतरोपनिषत्सु पञ्चमोऽध्यायः ॥५॥
॥ ओं तत् सत् ओं ॥

कथञ्चित् पुण्यवशादीश्वरार्थकर्म्मानुष्ठानेनापगतरागादिमलो नित्यादिदर्शनेनोत्पन्ने ह्यामुत्रार्थफलभोगविरागः शमदमादिसाधनसम्पन्नस्तमात्मानं ज्ञात्वा मुच्यत इत्याह ॥ अनाद्यनन्तमिति ॥ अनाद्यनन्तं आद्यन्तरहितं कलिलस्य मध्ये गहनगभीरसंसारस्य मध्ये विश्वस्य स्रष्टारमुत्पादयितारं अनेकरूपम् । विश्वस्यैकं परिवेष्टितारं स्वात्मना संव्याप्याऽवस्थितम् । ज्ञात्वा देवं ज्योतीरूपं परमात्मानं मुच्यते सर्व्वपाशैरविद्याकामकर्म्मभिः ॥ १३ ॥

केन पुनरसौ गृह्यत इत्याह ॥ भावग्राह्यमिति ॥ भावेन विशुद्धान्तःकरणेन गृह्यत इति भावग्राह्यम् । अनीडाख्यं नीडं शरीरं अशरीराख्यम् । भावाभावकरं शिवं शुद्धं अविद्यातत्कार्य्यविनिर्म्मुक्तमित्यर्थः । कलानां षोडशानां प्राणादिनामान्तानां स प्राणमसृजतेत्यादीनामाथर्वणोक्तानां सर्गकरं देवं ये विदुरहमस्मीति ते जहुः परित्यजेयुस्तनुं शरीरम् ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ श्वेताश्वतरोपनिषद्भाष्ये पञ्चमोऽध्यायः ॥५॥ ओं तत्सत्

॥ ओं तत् सत् हरिः ओं ॥

स्वभावमेके कवयो वदन्ति
कालं तथान्ये परिमुह्यमानाः ।
देवस्यैष महिमा तु लोके
येनेदं भ्राम्यते ब्रह्मचक्रम् ॥ १ ॥
येनावृतं नित्यमिदं हि सर्व्वं
ज्ञः कालकारो गुणी सर्व्वविद्यः ।
तेनेशितं कर्म्म विवर्त्तते ह
पृथ्व्याप्यतेजोऽनिलखानि चिन्त्यम् ॥२॥

नन्वन्ये कालादयः कारणमिति मन्यन्ते तत् कथं पुनरीश्वरस्य कृत्स्नसर्गकर्तृत्वमित्याशङ्क्याह । स्वभावमिति ॥ स्वभावमेके कवयो मेधाविनो वदन्ति । कालं तथान्ये । कालस्वभावयोर्ग्रहणं प्रथमाध्याये निर्द्दिष्टानामन्येषामप्युपलक्षणार्थं । परिमुह्यमाना अविवेकिनो विषयात्मानं न सम्यग् जानन्ति । तु शब्दोऽवधारणे । देवस्यैष महिमा माहात्म्यम् । येनेदं भ्राम्यते परिवर्त्तते ब्रह्मचक्रम् ॥ १ ॥

महिमानं प्रपञ्चयति । येनेति ॥ येनेश्वरेणावृतं व्याप्तमिदं जगत् नित्यं नियमेन । ज्ञः कालकारः कालस्यापि कर्त्ता । गुणी अपहतपाप्मादिमान् । सर्व्वं वेत्तीति सर्व्वविद्यः । तेनेश्वरेणेशितं प्रेरितं कर्म्म क्रियत इति स्वजीव

तत कर्म्म कृत्वा विनिवर्त्त्य भूय-
स्तत्त्वस्य तत्त्वेन समेत्य योगं ।
एकेन द्वाभ्यां त्रिभिरष्टभिर्वा
कालेन चैवात्मगुणैश्च सूक्ष्मैः ॥ ३ ॥
आरभ्य कर्म्माणि गुणान्वितानि
भावांश्च सर्व्वान् विनियोजयेद्यः ।

फणी । हशब्दः प्रसिद्धद्योतकः । प्रसिद्धं यदेतदीश्वरप्रेरकं कर्म्म विवर्त्तत इति । जगदात्मना यत् पुनस्तत् कर्म्म पृथ्व्याप्यतेजोऽनिलखानि पृथिव्यादिभूतपञ्चकं यत् प्रथमाध्याये चिन्त्यमित्युक्तम् ॥ २ ॥

एतदेव प्रपञ्चयति । तदिति ॥ तत् कर्म्म पृथिव्यादि सृष्ट्वा विनिवर्त्त्य प्रत्यवेक्षणं कृत्वा भूयः पुनस्तस्यात्मनस्तत्त्वेन भूम्यादिना योगं समेत्य सङ्गमय्य। णिलोपो द्रष्टव्यः । कतिविधैः प्रकारैः । एकेन द्वाभ्यां त्रिभिरष्टभिर्व्वा प्रकृतिभूतैस्तत्त्वैः । तदुक्तम् ।

भूमिरापोऽनिलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

इति कालेन चैवात्मगुणैश्चान्तःकरणगुणैः कामादिभिः सूक्ष्मैः ॥ ३ ॥

इदानीं कर्म्मणां मुख्यविनियोगं दर्शयति । आरभ्येति ॥ आरभ्य कृत्वा कर्म्माणि गुणैः सत्त्वादिभिरन्वितानि

तेषामभावे कृतकर्म्मनाशः
कर्म्मक्षये याति स तत्त्वतोऽन्यः ॥ ४ ॥
आदिः स संयोगनिमित्तहेतुः
परस्त्रिकालादकालोऽपि दृष्टः ।

योजयेदीश्वरे समर्पयेद् यस्तेषामीश्वरे समर्पितत्वादात्मसम्बन्धाभावस्तदभावे पूर्व्वकृतकर्म्मणां नाशः । उक्तञ्च ॥

यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय ! तत् कुरुष्व मदर्पणम् ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्म्मबन्धनैः ।
ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः ॥
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ॥
योगिनः कर्म्म कुर्व्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥

इति च कर्म्मक्षये विशुद्धसत्त्वो याति ततोऽन्यस्तत्त्वेभ्यः प्रकृतिभूतेभ्योऽन्यश्चाविद्यातत्कार्य्यविनिर्म्मुक्तश्चित्सदानन्दाऽद्वितीयब्रह्मात्मत्वे नावगच्छन्नित्यर्थः। अन्यदिति पाठे तत्त्वेभ्यो यदन्यद् ब्रह्म तद्यातीति ॥ ४ ॥

उक्तस्यार्थस्य द्रढिम्न उत्तरे मन्त्राः प्रस्तूयन्ते कथं नाम विषयविषान्धाः कथं नाम ब्रह्म जानीयुरित्यत आह। आदिरिति ॥ आदिः कारणं सर्व्वस्य शरीरसंयोगनिमित्तानामविद्यानां हेतुः । उक्तञ्च । एष एव साधु कर्म्म कारयति च । परस्त्रिकालादतीतानागतवर्त्तमानात् । उक्तञ्च ।

तं विश्वरूपं भवभूतमीड्यं
देवं स्वचित्तस्थमुपास्य पूर्व्वम् ॥ ५ ॥
स वृक्षकालाकृतिभिः परोऽन्यो
यस्मात प्रपञ्चः परिवर्त्तते यम् ।
धर्म्मावहं पापनुदं भगेशं

यस्मादर्व्वाक् संवत्सरोऽहोभिः परिवर्त्तते। तद्देवाः ज्योतिषां ज्योतिः। आयुर्होपासते। मृतं कस्मात्। यस्मादकालोऽसौ न विद्यन्ते कालाः प्राणादि नामान्ता अस्येत्यकालः। कालवद्धि कालत्रयपरिच्छिन्नमुत्पद्यते विनश्यति च। अयं पुनरकालो निष्प्रपञ्चः। तस्मान् न कालत्रयपरिच्छिन्नमुत्पद्यते विनश्यति च। तं विश्वानि रूपाण्यस्येति विश्वरूपं। भवत्यस्मादिति भवः। भूतमवितथस्वरूपं। ईड्यं देवं स्वचित्तस्थं उपास्यायमहमस्मीति समाधानं कृत्वेत्यर्थः ॥ ५ ॥

पूर्व्ववाक्यार्थज्ञानोदयात् पुनरपि तमेव दर्शयति। स वृक्षेति॥ स वृक्षाकारेभ्यः कालाकारेभ्यः परो वृक्षकालाकृतिभिः परो वृक्षः संसारवृक्षः। उक्तञ्च।

ऊर्द्धमूलो ह्यवाक्शाख एषोऽश्वत्थः सनातन इति। अन्यः प्रपञ्चासंस्पृष्ट इत्यर्थः। यस्मादीश्वरात् प्रपञ्चः परिवर्त्तते। धर्म्मावहं पापनुदं। भगस्यैश्वर्य्यादेरीशं स्वामिनं ज्ञात्वा। आत्मस्थं आत्मनि बुद्धौ स्थितं। अमृतममरणधर्म्माणं।

ज्ञात्वात्मस्थममृतं विश्वधाम ॥ ६ ॥

तमीश्वराणां परमं महेश्वरं

तं देवतानां परमञ्च दैवतम्।

पतिं पतीनां परमं परस्ताद्

विदाम देवं भुवनेशमीड्यम् ॥ ७ ॥

न तस्य कार्य्यं करणञ्च विद्यते

न तत् समश्चाभ्यधिकश्च दृश्यते।

परास्य शक्तिर्विविधैव श्रूयते

विश्वधाम विश्वस्याधारभूतं याति ततोऽन्य इति सर्व्वं च सम्बध्यते ॥ ६ ॥

इदानीं विद्वदनुभवं दर्शयन्नुक्तमर्थं दृढ़ीकरोति। तमीश्वराणामिति ॥ तमीश्वराणां वैवस्वतादीनां परमं महेश्वरं। तं देवतानामिन्द्रादीनां परमञ्च दैवतं। पतिं पतीनां प्रजापतीनां परमं। परस्तात् परतोऽक्षरात्। विदाम देवं द्योतनस्वभावं। भुवनानामीशं भुवनेशं। ईड्यं स्तुत्यम् ॥ ७ ॥

कथं महेश्वरमित्याह। न तस्येति ॥ न तस्य कार्य्यं शरीरं करणं चक्षुरादि विद्यते। न तत् समश्चाभ्यधिकश्च दृश्यते श्रूयते वा। पराऽस्य शक्तिर्विविधैव श्रूयते सा च स्वाभाविकी ज्ञानबलक्रिया च। ज्ञान क्रिया च बलक्रिया

स्वाभाविकी ज्ञानबलक्रियाच ॥ ८ ॥

न तस्य कश्चित् पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गं ।
स कारणं करणाधिपाधिपो
न चाऽस्य कश्चिज्जनिता न चाधिपः ॥ ९॥

य स्तूर्णनाभ इव तन्तुभिः प्रधानजैः ।
स्वभावतो देव एकः स्वमावृणोत् ।
स नो दधाद्ब्रह्माप्ययम ॥ १० ॥

च ज्ञानक्रिया सर्व्वविषयज्ञानप्रवृत्तिः बलक्रिया स्वसन्निधि-मात्रेण सर्व्वं वशीकृत्य नियमनं । यस्मादेवं तस्मात् ॥८॥

न तस्येति ॥ न तस्य कश्चित् पतिरस्ति लोके । अत एव न तस्येशिता नियन्ता। नैव च तस्य लिङ्गं चिह्नं धूम-स्थानीयं येनानुमीयेत । तं सकारणं सर्व्वस्य कारणम् । करणाधिपाधिपः परमेश्वरः । यस्मदेवं तस्मात् न तस्य कश्चिज्जनिता जनयिता न चाधिपः ॥ ९ ॥

इदानीं मन्त्रदृगभिप्रेतमर्थं प्रार्थयते ॥ यस्तूर्णनाभ इति ॥ यथोर्णनाभिरात्मप्रभवैस्तन्तुभिरात्मानमेव समावृ-णोत्। तथा प्रधानजैरव्यक्तप्रभवैर्नामरूपकर्मभिः स्वस्थानीयैः स्वमात्मानमावृणोत् आवृणोति सञ्छादितवान् सः नो मह्यं ब्रह्मण्यप्ययं ब्रह्माप्ययं एकीभावं दधाद् ददात्वित्यर्थः ॥१०॥

एको देवः सर्व्वभूतेषु गूढः
सर्व्वव्यापी सर्व्वभूतान्तरात्मा।
कर्म्माध्यक्षः सर्व्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च॥ ११ ॥
एको वशी निष्क्रियाणां बहूना-
मेकं वीजं बहुधा यः करोति।

पुनरपि तमेव करतलन्यस्तामलकवत् साक्षाद्दर्शयन् तद्विज्ञानादेव परमपुरुषार्थप्राप्तिर्नान्येनेति दर्शयति मन्त्रद्वयेन। एको देव इति॥ एकोऽद्वितीयो देवः द्योतनस्वभावः। सर्व्वभूतेषु गूढ़ः सर्व्वप्राणिषु संवृतः। सर्व्वव्यापी सर्व्वभूतान्तरात्मा स्वरूपभूत इत्यर्थः। कर्म्माध्यक्षः सर्व्वप्राणिकृतविचित्रकर्म्माधिष्ठाता। सर्व्वभूताधिवासः सर्व्वप्राणिषु वसतीत्यर्थः। सर्व्वेषां भूतानां साक्षी सर्व्वद्रष्टा। साक्षाद्द्रष्टरि सञ्ज्ञायामिति स्मरणात्। चेता चेतयिता। केवलो निरुपाधिकः। निर्गुणः सत्त्वादिगुणरहितः॥ ११ ॥

एको वशीति॥ एको वशी स्वतन्त्रः। निष्क्रियाणां बहूनां। जीवानां सर्व्वा हि क्रिया नात्मनि समवेताः किन्तु देहेन्द्रियेषु। आत्मा तु निष्क्रियो निर्गुणः सत्त्वादिगुणरहितः कूटस्थः सन्नानात्मधर्म्मा नात्मन्यध्यस्या ऽभिमन्यते कर्त्ता भोक्ता सुखी दुःखी कृशः स्थूलो मनुष्यो ऽमुष्य पुत्रोऽस्य नप्तेति॥ उक्तञ्च॥

तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥
नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान् ।
तत् कारणं साङ्ख्ययोगाधिगम्यं
ज्ञात्वा देवं मुच्यते सर्व्वपाशैः ॥ १३ ॥

प्रकृतेः क्रियमाणानि गुणैः कर्म्माणि सर्व्वशः ।
अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ॥
तत्त्ववित्तु महाबाहो गुणकर्म्मविभागयोः ।
गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ॥
प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्म्मसु । इति ॥

एकं बीजं बीजस्थानीयं सूक्ष्मभूतम् । बहुधा यः करोति तमात्मस्थं बुद्धौ स्थितं येऽनुपश्यन्ति साक्षाज्जानन्ति ते धीराः बुद्धिमन्तस्तेषामात्मविदां सुखं शाश्वतं नेतरेषामनात्मविदाम् ॥ १२ ॥

किञ्च । नित्य इति ॥ नित्यो नित्यानां जीवानां मध्ये तन्नित्यत्वेन तेषामपि नित्यत्वमित्यभिप्रायः । अथवा पृथिव्यादीनां मध्ये । तथा चेतनश्चेतनानां प्रमातॄणां मध्ये । एको बहूनां जीवानां यो विदधाति प्रयच्छति कामान् कामनिमित्तान् भोगान् । सर्व्वस्य सांख्ययोगाधिगम्यं ज्ञात्वा देवं ज्योतिर्म्मयं मुच्यते सर्व्वपाशैरविद्यादिभिः ॥ १३ ॥

न तत्र सूर्य्यो भाति न चन्द्रतारकम्।
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्व्वम्।
तस्य भासा सर्व्वमिदं विभाति॥ १४॥
एको हंसो भुवनस्यास्य मध्ये
स एवाग्निः सलिले सन्निविष्टः।

कथं चेतनश्चेतनानामित्युच्यते। न तत्रेति। तत्र तस्मिन् परमात्मनि सर्व्वावभासकोऽपि सूर्य्यो न भाति तद्ब्रह्म न प्रकाशयतीत्यर्थः। स हि तस्यैव भासा सर्व्वात्मनो रूपजातं प्रकाशयति। न तु तस्य स्वतः प्रकाशनसामर्थ्यम्। तथा न चन्द्रतारकं। नेमा विद्युतो भान्ति। कुतोऽयमग्निरस्मद्गोचरः। किं बहुना। यदिदं जगद्भाति तमेव स्वतो भारूपत्वाद् भान्तं दीप्यमानमनुभात्यनुदीप्यते। यथा लोहादिवदग्निं दहन्तमनुदहति न स्वतः। तस्यैव भासा दीप्त्या सर्व्वमिदं सूर्य्यादि भाति। उक्तञ्च। येन सूर्य्यस्तपति तेजसेद्धः। न तद्भासयते सूर्य्यो न शशाङ्को न पावक इति। ज्ञात्वा देवं मुच्यत इत्युक्तम्॥ १४॥

कस्मात् पुनस्तमेव विदित्वा मुच्यते नान्येनेत्यत्नाह। एक इति॥ एकः परमात्मा हन्त्यविद्यादिबन्धकारणमिति हंसः। भुवनस्याऽस्य त्रैलोक्यस्य मध्ये नान्यः कश्चित्। कस्मात्। यस्मात् स एवाग्निः। अग्निरिवाऽग्निरविद्यातत्कार्य्यस्य दाहकत्वात्। उक्तञ्च। व्योमा-

तमेव विदित्वाऽतिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥ १५ ॥

स विश्वकृद्विश्वविदात्मयोनिः
कालकारो गुणी सर्व्वविद् यः ।
प्रधानक्षेत्रज्ञपतिर्गुणेशः
संसारमोक्षस्थितिबन्धहेतुः ॥ १६ ॥

तीतोऽग्निरीश्वर इति। सलिले देहात्मना परिणते। उक्तञ्चेति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति। सन्निविष्टः सम्यगात्मत्वेन। यथा सलिले सविता इव स्वच्छे। यद्वा दानादिना विमलीकृतेऽन्तःकरणे सन्निविष्टो वेदान्तवाक्यार्थः सम्यग् ज्ञानफलकारूढोऽविद्यातत्कार्यस्य दाहक इत्यर्थः। तस्मात् तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय परमपदप्राप्तये ॥ १५ ॥

पुनरपि विशेषतो दर्शयति ॥ स विश्वकृदिति ॥ स विश्वकृद्विश्वस्य कर्त्ता। विश्वं वेत्तीति विश्ववित्। आत्मा चासौ योनिश्चेत्यात्मयोनिः। सर्व्वस्यात्मा सर्व्वस्य च योनिश्चैतन्यं ज्योतिरित्यर्थः। कालकारः कालस्य कर्त्ता। गुणी अपहतपाप्मादिमान् विश्वविदित्यस्य प्रपञ्चः। प्रधानमव्यक्तम्। क्षेत्रज्ञो विज्ञानात्मा। तयोः पतिः पालयिता। गुणानां सत्त्वरजस्तमसामीशः। संसारमोक्षस्थितिबन्धानां हेतुः कारणम् ॥ १६ ॥

स तन्मयो ह्यमृत ईशसंस्थो

ज्ञः सर्वगो भुवनस्यास्य गोप्ता ।

य ईशेऽस्य जगतो नित्यमेव

नान्यो हेतुर्विद्यत ईशनाय ॥ १७ ॥

यो ब्रह्माणं विदधाति पूर्व्वं

यो वै वेदांश्च प्रहिणोति तस्मै ।

स तन्मय इति ॥ स तन्मयो विश्वात्मा । अथवा तन्मयो ज्योतिर्म्मय इति । तस्य भासा सर्व्वमिदं विभातीत्येतदपेक्षयोच्यते । अमृतोऽमरणधर्म्मा । ईशे स्वामिनि सम्यक् स्थितिर्य्यस्यासावीशसंस्थः । जानातीति ज्ञः । सर्व्वत्र गच्छतीति सर्व्वगः । भुवनस्याऽस्य गोप्ता पालयिता । य ईशे ईष्टे । अस्य जगतो नित्यमेव नियमेन नान्यो हेतुः समर्थो विद्यते ईशनाय जगदीशनाय ॥ १७ ॥

यस्मात् स एव संसारमोक्षस्थितिबन्धहेतुस्तस्मात् तमेव मुमुक्षुः सर्व्वात्मना शरणं प्रपद्येत गच्छेदिति प्रतिपादयितुमाह । यो ब्रह्माणमिति ॥ यो ब्रह्माणं हिरण्यगर्भं विदधाति सृष्टवान् पूर्व्वं सर्गादौ । यो वै वेदांश्च प्रहिणोति तस्मै । तं ह शब्दोऽवधारणे । तमेव परमात्मानं । उक्तञ्च ।

तमेव धीरो विज्ञाय प्रज्ञां कुर्व्वीत ब्राह्मणः ।

नानुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तत् ॥

तꣳह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ १८ ॥

निष्कलं निष्क्रियꣳ शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परꣳ सेतुं दग्धेन्धनमिवानलम् ॥ १९ ॥

यदा चर्म्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।

तमेवैकं जानथ आत्मानमिव देवं ज्योतिर्म्मयं । आत्मनि या बुद्धिस्तस्याः प्रसादकरी । प्रसन्ने हि परमेश्वरे बुद्धिरपि तद्विषया प्रमा निष्प्रपञ्चाकारब्रह्मात्मनाऽवतिष्ठते वर्त्तते । आत्मबुद्धिप्रकाशमित्यन्येऽधीयते । आत्मबुद्धिप्रकाशिनीत्यात्मबुद्धिप्रकाशं । अथवा आत्मैव बुद्धिरात्मबुद्धिः सैव प्रकाशः । सैव प्रकाशोऽस्येति आत्मबुद्धिप्रकाशं मुमुक्षुर्वै वैशब्दोऽवधारणे मुमुक्षुरेव सन् न फलान्तरमिच्छन् शरणमहं प्रपद्ये । एवं तावत् सृष्ट्यादिना यल्लक्ष्यस्वरूपमुपदर्शितम् ॥ १८ ॥

अथेदानीं स्वस्वरूपेण दर्शयति । निष्कलमिति । कला अवयवा निर्गता यस्मात् तन्निष्कलं निरवयवमित्यर्थः । निष्क्रियं स्वमहिमप्रतिष्ठितं कूटस्थमित्यर्थः । शान्तमुपसंहृतसर्व्वविकारम् । निरवद्यं अगर्हणीयम् । निरञ्जनं निर्लेपम् । अमृतस्य अमृतत्वस्य मोक्षस्य प्राप्तये सेतुरिव सेतुः संसारमहोदधेरुत्तारणोपायत्वात् तं । अमृतस्य पारं सेतुं दग्धेन्धनानलमिव देदीप्यमानं झटझटायमानम् ॥ १९ ॥

किमिति तमेव विदित्वा मुच्यते नान्येनेति तत्राह । यदेति ॥ यदा चर्म्म सङ्कोचयिष्यति तद्वदाकाशं मूर्त्तं व्यापिनं

तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥२०॥

तपः प्रभावाद्देवप्रसादाच्च

यदि वेष्टयन्ति संवेष्टयिष्यन्ति मानवास्तदा देवं ज्योतिर्मय-मनुदितानस्तमितज्ञानात्मनाऽवस्थितमशनायाद्यसंस्पृष्टं पर-मात्मानमविज्ञाय दुःखस्याध्यात्मिकस्याधिभौतिकस्याधिदै-विकस्यान्तो विनाशो न भविष्यति। आत्मज्ञाननिमित्तत्वात् संसारस्य। यावत् परमात्मानमात्मत्वेन न जानाति तावत् तापत्रयाभिभूतो मकरादिभिरिव रागादिभिरितस्ततः कृष्य-माणः प्रेततिर्यङ्मनुष्यादियोनिष्वज एवं जीवीभावमापन्नो मुह्यमानः संसरति। तदा पुनरपूर्व्वमनपरं नेति नेतीत्यादि-लक्षणमशनायाद्यसंस्पृष्टमनुदितानस्तमितज्ञानात्मनावस्थितं पूर्णानन्दं परमात्मानमात्मत्वेन साक्षाज्जानाति तदा निर-स्ताज्ञानतत्कार्य्यः पूर्णानन्दो भवतीत्यर्थः। उक्तञ्च।

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः।
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः॥
तेषामादित्यवज् ज्ञानं प्रकाशयति तत् परं।
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः॥
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्द्धूतकल्मषाः॥ २०॥

सम्प्रदायपरम्परया ब्रह्मविद्याया मोक्षप्रदत्वं प्रदर्शयितुं सम्प्रदायं विद्याधिकारिणञ्च दर्शयति। तपःप्रभावादिति॥ तपसः कृच्छ्रचान्द्रायणादिलक्षणस्य। तत्र तपःशब्दस्य रूढि-त्वान्नित्यादीनां विधिवदनुष्ठितानां कर्म्मणां मनसश्चेन्द्रि-याणाञ्चैकाग्र्यं परमन्तप इति स्मरणात्। तस्य च सर्व्वस्य

**ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्।**

**अत्याश्रमिभ्यः परमं पवित्रं**

तपसस्तस्मिन् श्वेताश्वतरे नियमेन सत्वात् तत्प्रभावात् तत्सामर्थ्याद् वेदप्रसादाच्च कैवल्यमुद्दिश्य तदधिकारसिद्धये बहुजन्मसु सम्यगाराधितपरमेश्वरस्य प्रसादाच्च ब्रह्मापरिच्छिन्नं महत्तत्वं। ह इति प्रसिद्धिद्योतनार्थः। श्वेताश्वतरो नाम ऋषिर्व्विद्वान् यथोक्तं ब्रह्म परम्पराप्राप्तं गुरुमुखाच्छ्रुत्वा मनननिदिध्यासनादरनैरन्तर्य्यसत्कारादिभिर्ब्रह्माहमस्मीत्यपरोक्षीकृताखण्डसाक्षात्कारवान्। अथ स्वानुभवदार्ढ्यानन्तरं अत्याश्रमिभ्यः। अति पूजायामिति स्मरणात्। अत्यन्तं पूज्यतमाश्रमिभ्यः साधनचतुष्टयसम्पत्तिमहिम्ना स्वेषु देहादिष्वपि जीवनभोगादिष्वनास्थावद्भ्यः। अत एव वैराग्यपुष्कलवद्भ्यः। तदुक्तम्।

वैराग्यं पुष्कलं न स्यान्निष्फलं ब्रह्मदर्शनम्।
तस्माद्रक्षेत विरतिं बुधो यत्नेन सर्व्वदेति।

स्मृत्यन्तरे च॥

यदा मनसि वैराग्यं जायते सर्व्ववस्तुषु।
तदैव सन्न्यसेद् विद्वानन्यथा पतितो भवेत्॥

इति परमहंससन्न्यासिनस्त एवात्याश्रमिणः। तथा च श्रूयते। न्यास इति ब्रह्म। ब्रह्मा हि परःपरो हि। तानि वा एतान्यवराणि तपांसि। न्यास एवात्यरेचयदिति॥

चतुर्व्विधा भिक्षवश्च बहूदककुटीचकौ।
हंसः परमहंसश्च यो यः पश्चात् स उत्तमः॥

**प्रोवाच सम्यगृषिसङ्घजुष्टम् ॥ २१ ॥**
**वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् ।**

इति स्मरणाच्च । तेभ्योऽत्याश्रमिभ्यः परमं प्रकृतं ब्रह्म तदेव परममुत्कृष्टतमं निरस्तसमस्ताविद्यातत्कार्य्यनिरति-शयसुखैकरसं पवित्रं शुद्धं प्रकृतिप्राकृतादिमलविनिर्मुक्तम् । ऋषिसङ्घजुष्टं वामदेवसनकादीनां सङ्घैः समूहैर्जुष्टं सेवितमात्मत्वेन सम्यक् परिभावितं प्रियतमानन्दत्वेना-श्रितम् । आत्मनस्तु कामाय सर्व्वं प्रियम्भवतीति श्रुतेः । सम्यगात्मतयाऽपरोक्षीकृतं यथा भवति तथा । सम्यगिति काकाक्षिन्यायेन उभयत्रानुसङ्गः कर्त्तव्यः । प्रोवाच उक्त-वान् । तथोक्तशिष्यपरीक्षणपूर्व्वकं विद्या वक्तव्या तद्विहा-योक्तो दोषः ॥ २१ ॥

विद्याया वैदिकत्वं गुप्तत्वं सम्प्रदायपरम्परया प्रति-पादितत्वञ्चाह । वेदान्त इति ॥ वेदान्त इति जात्यैकव-चनम् । सकलासूपनिषत्सु परं परमपुरुषार्थस्वरूपं गुह्यं गोप्यानामपि गोप्यतमं पुराकल्पे प्रचोदितं पूर्व्वकल्पे चोदितमुद्दिष्टमिति सम्प्रदायप्रदर्शनं कृतमिति । एतत् प्रशान्ताय पुत्राय प्रकर्षेण शान्तं सकलरागादिमलरहित-चित्तं यस्य तस्मै तादृशपुत्राय तादृशशिष्याय वा दातव्यं वक्तव्यमिति यावत् । तद्विपरीतायाशिष्याय वा स्नेहादिना ब्रह्मविद्या न वक्तव्या । अन्यथा प्रत्यवायापत्तेरिति पुनः-शब्दार्थः । अत एव ब्रह्मविद्याविवक्षुणा गुरुणा चिरकालं

नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः
॥ २२ ॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः
प्रकाशन्ते महात्मनः ॥ २३ ॥ इति श्वेता-

परीक्ष्य शिष्यगुणान् ज्ञात्वा ब्रह्मविद्या वक्तव्येति भावः ॥ तथा च श्रुतिः । भूय एव तपसा ब्रह्मचर्य्येण श्रद्धया संवत्सरं परीक्षेत । श्रुत्यन्तरे च । शतं वर्षं प्रजापतौ मघवान् ब्रह्मचर्य्यमुवासेति च । एतच्च बहुधा प्रपञ्चितमुपदेशसहस्रिकायामित्यत्र सङ्कोचः कृतः ॥ २२ ॥

अत्रापि देवतागुरुभक्तिमतामेव गुरुणा प्रकाशिता विद्याऽनुभवाय भवतीति प्रदर्शयति । यस्येति ॥ यस्य पुरुषस्याधिकारिणो देवे इयता प्रबन्धेन दर्शिताऽखण्डैकरसे सच्चिदानन्दपरज्योतिस्स्वरूपिणि परमेश्वरे परा उत्कृष्टा निरुपचरिता भक्तिः । एतदुपलक्षणं । अचाञ्चल्यं श्रद्धा चोभे यथा तथा ब्रह्मविद्योपदेष्टृगुरावपि तदुभयं यस्य वर्त्तते तस्य तप्तशिरसो जलराश्यन्वेषणम् विहाय यथा साधनान्तरं नास्ति । यथा च बुभुक्षितस्य भोजनादन्यत्र साधनान्तरं न । एवं गुरुकृपां विहाय ब्रह्मविद्या दुर्ल्लभेति त्वरान्वितस्य मुख्याधिकारिणो महात्मनं उत्तमस्य एते कथिता अस्यां श्वेताश्वतरोपनिषदि श्वेताश्वतरेण महात्मना कविना उपदिष्टाः प्रकाशन्ते स्वानुभवाय भवन्ति । द्विर्व्वचनं मुख्यशिष्यतत्साधनादिदुर्लभप्रदर्शनार्थमध्यायपरिसमाप्त्यर्थमादरार्थञ्च ॥ २३ ॥

## श्वतरोपनिषत्सु षष्ठोऽध्यायः ।

## ओं तत् सत ओं ।

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ श्वेताश्वतरोपनिषद्भाष्ये षष्ठोऽध्यायः ॥ ओं तत्सत् हरिः ओं ॥

इति श्वेताश्वतरोपनिषत् समाप्ता ॥

वि, ए, उपाधिधारिणा
श्री जीवानन्द विद्यासागर भट्टाचार्य्येण
संस्कृता ।

| | | |
|---|---|---|
| ५९ | बृहदारण्यक (उपनिषद्) [भाष्यसहित] ... | १० |
| ६० | सुश्रुत ... | ४ |
| ६१ | शार्ङ्गधर [वैद्यक] ... | १ |
| ६२ | वेतालपञ्चविंशति ... | ॥० |
| ६३ | पातञ्जलदर्शन [सभाष्य-सटीक-सवृत्ती] ... | ४ |
| ६४ | आत्मतत्त्वविवेक [बौद्धाधिकार] ... | २ |
| ६५ | मुक्तिकोपनिषत् ... | — |
| ६६ | उपमानचिन्तामणि ... | । |
| ६७ | नागानन्दनाटक ... | १ |
| ६८ | पूर्णप्रज्ञदर्शनम्। मध्वस्वामिकृतभाष्य सहितम् | २ |
| ६९ | चन्द्रशेखर चम्पू काव्यम् सम्पूर्ण ... | २ |
| ७० | सामवेदस्य मन्त्रब्राह्मणम् भाष्यसहितम् ... | २ |
| ७१ | आरण्य संहिता भाष्य सहिता ... | १ |
| ७२ | विद्धशाल भञ्जिका नाटिका—सटीक ... | १ |
| ७३ | कारण्डव्यूह [बौद्धशास्त्रम्] ... | २ |
| ७४ | कुवलयानन्द—सटीक ... | २ |
| ७५ | प्रियदर्शिका नाटिका—सटीक [श्रीहर्ष विरचिता] | ॥ |
| ७६ | सारस्वत व्याकरण—सटीक ... | १। |
| ७७ | वासवदत्ता—सटीक ... | २ |
| ७८ | पुष्पवाण विलासकाव्य [कालिदास कृतम्] सटीक | ॥ |
| ७९ | महिष शतकम्, पदारविन्द शतकम्, स्तुतिशतकम्, मन्दस्मित शतकम् कटाक्ष शतकम् ... | १ |
| ८० | मनुसंहिता – कुल्लुकभट्टकृत टीका सहित... | ५ |
| ८१ | नैषध चरितम् (टीकासहित) मल्लिनाथकृत | १० |
| ८२ | चन्द्रालोक (प्राचीन अलङ्कार ग्रन्थ) ... | । |

कलिकातासंस्कृतविद्यामन्दिरे—बि, ए, उपाधिधारिणः
श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्यस्य
सकाशात् लभ्यानि।